३°कां°


| नाम संख्या | श्लोक |
|---|---|
| अभ्यंतरस्य ३ अभ्यंतरादि | ९६ |
| अन्तरस्य २ मध्यादि | ९६ |
| तुल्यस्य ११ तुल्यादि | ९७ |
| उत्तरस्थतुल्यार्थस्य१ १प्रख्यादि | ९८ |
| उपमायाः ८ औपम्यादि | ९९ |
| प्रतिमायाः ११ अर्चादि | ९९ |
| लोहप्रतिमायाः ३ स्थूर्यादि | १०० |
| स्वर्णप्रतिमायाः१ हरिणीति | १०० |
| प्रतिकूलस्य ९ प्रतिकूलादि | १०१ |
| वामांगस्य २ वामादि | १०२ |
| दक्षिणांगस्य २ अपसव्यादि | १०२ |
| अबाधस्य ६ अबाधादि | १०२ |
| स्फुटस्य ६ स्फुटादि | १०३ |
| वर्त्तुलस्य ४ वर्त्तुलादि | १०३ |
| उन्नताननस्य २ बंधुरेति | १०४ |
| विषमोन्नतस्य २ स्थपुटादि | १०४ |
| भिन्नस्य ६ अन्यदादि | १०४ |
| खचितस्य ५ करंबादि | १०५ |
| नानारूपस्य ५ विविधादि | १०५ |
| शिघ्रस्य ९ त्वरितादि | १०६ |

| नाम संख्या | श्लोक |
|---|---|
| कम्पायाः २ कम्पादि | १०६ |
| नित्यस्य ११ अनारतादि | १०७ |
| सामान्यस्य २ साधारणादि | १०८ |
| दृढसंधेः २ दृढसंध्यादि | १०८ |
| गहनस्य २ कलिलादि | १०८ |
| संकीर्णस्य ५ संकीर्णादि | १०८ |
| पूर्णस्य ७ पूर्णादि | १०९ |
| प्रत्याख्यानस्य६ प्रत्याख्यानादि | १०९ |
| परिष्कृतस्य ६ प्रतिक्षिप्तादि | ११० |
| व्यक्तस्य ६ व्यक्तादि | १११ |
| विस्तारितस्य ३ विन्नादि | १११ |
| अध्वस्तस्य २ अवकीर्णादि | ११२ |
| अन्तर्हितस्य १० संवीतादि | ११२ |
| प्रकटितस्य ४ दर्शितादि | ११३ |
| अविलंबितस्य २ उच्चंडादि | ११३ |
| अनादृतस्य ५ अनादृतादि | ११४ |
| अनादरस्य ५ रीढादि | ११४ |
| अन्तर्द्धेः ९ व्यवधानादि | ११५ |
| उन्मूलितस्य ४उन्मूलितादि | ११६ |
| कंपितस्य १० प्रेंखोलितादि | ११६ |

| नाम संख्या | श्लोक |
|---|---|
| दोलायाः ४ खेलादि | ११७ |
| अयत्नहतस्य १ फांटेति | ११७ |
| अधःक्षिप्तस्य २ अधःक्षिप्तादि | ११८ |
| ऊर्द्धक्षिप्तस्य २ ऊर्द्धक्षिप्तादि | ११८ |
| क्षिप्तस्य ७ नुन्नादि | ११८ |
| लिप्तस्य २ दिग्धादि | ११९ |
| भुग्नस्य २ रुग्णादि | ११९ |
| गुण्डितस्य २ रूषितादि | ११९ |
| गुप्तस्य २ गूढादि | ११९ |
| मुषितस्य २ मुषितादि | ११९ |
| गुणितस्य २ गुणितादि | २१९ |
| तेजितस्य ६ निशातादि | १२० |
| वृतस्य ३ वृतादि | १२० |
| लज्जितस्य ३ ह्रीतादि | १२० |
| संकलितस्य २ संगूढादि | १२१ |
| उपाहितस्य २ संयोजितादि | १२१ |
| पक्वस्य २ पक्कादि | १२१ |
| क्षीराज्यहविःपाकस्य १ पाकेति | १२१ |
| क्वथितस्य २ निष्पक्वादि | १२२ |
| दग्धस्य ४ प्लुष्टादि | १२२ |

| नाम संख्या | श्लोक | हे०ह्व० |
|---|---|---|
| तनूकृतस्य ३ तनूकृतादि | १२२ | |
| वेधितस्य ३ विद्धादि | १२२ | |
| सिद्धस्य ३ सिद्धादि | १२३ | |
| विद्रुतस्य ३ विलीनादि | १२३ | |
| प्रोतस्य २ उतादि | १२३ | |
| स्यूतस्य ४ स्यूतादि | १२३ | |
| दारितस्य ३ पाटितादि | १२४ | |
| स्फुटतस्य ३ भिदुरादि | १२४ | |
| अंगीकृतस्य १० अंगीकृतादि | १२४ | |
| छिन्नस्य ८ छिन्नादि | १२५ | |
| प्राप्तस्य ६ प्राप्तादि | १२५ | |
| पतितस्य ७ पतितादि | १२६ | |
| स्तुनिश्चितस्य २ शंसितादि | १२७ | |
| मृगितस्य ५ मृगितादि | १२७ | |
| आर्द्रस्य ७ तिमितादि | १२८ | |
| प्रेषितस्य ४ प्रस्थापितादि | १२८ | |
| ख्यातस्य ६ ख्यातादि | १२९ | |
| नग्नस्य ५ नग्नादि | १२९ | |
| स्त्यानस्य २ शीनादि | १३० | |
| उपस्थितस्य ३ उपनतादि | १३० | |

है०ख०


| नाम संख्या | श्लोक |
|---|---|
| निर्वानस्य २ निर्वातेति | १३० |
| निरग्न्यादेः १ निर्वाणेति | १३० |
| प्रौढस्य ३ प्रवृद्धादि | १३१ |
| अन्तर्गतस्य २ विस्मितादि | १३१ |
| उद्गतस्य २ उद्वांतादि | १३१ |
| पुरीषोत्सर्गस्य २ गूनादि | १३१ |
| मूत्रोत्सर्गस्य २ मीढादि | १३१ |
| ज्ञातस्य ८ विदितादि | १३२ |
| श्रुतस्य ४ स्यन्नादि | १३२ |
| गुप्तस्य ६ गुप्तादि | १३३ |
| कर्मणः ३ कर्मादि | १३३ |
| हेतुरहितस्थितेः १ हेत्विति | १३३ |
| कार्मणस्य २ कार्मणादि | १३४ |
| वशक्रियायाः २ संवननादि | १३४ |
| प्रतिबंधस्य २ प्रतिबंधादि | १३४ |
| स्थितेः ४ आस्यादि | १३४ |
| परस्परस्य ३ परस्परादि | १३५ |
| आवेशस्य ३ आवेशादि | १३५ |
| रचनायाः ३ निवेशादि | १३५ |
| अभिनिवेशस्य २ निबंधादि | १३६ |
| प्रवेशस्य २ प्रवेशादि | १३६ |
| गतेः ६ गत्यादि | १३६ |
| पर्यटनस्य ३ व्रज्यादि | १३७ |
| पथस्थितेः ३ चर्य्यादि | १३७ |
| वैपरीत्यस्य ४ व्यत्यासादि | १३७ |
| वृद्धेः २ स्फात्यादि | १३८ |
| नर्मणस्य ३ प्रीणनादि | १३८ |
| परित्राणस्य ३ परित्राणादि | १३८ |
| प्रणतेः ३ प्रणत्यादि | १३९ |
| क्रमशयनस्य २ विशायादि | १३९ |
| क्रमस्य ५ पर्यायादि | १३९ |
| अतिक्रमस्य ४ अतिपातादि | १४० |
| संकटस्य २ संबाधादि | १४० |
| यथेप्सितस्य ६ कामादि | १४१ |
| अत्यर्थस्य १६ अत्यर्थादि | १४१ |
| जृंभायाः २ जृंभादि | १४२ |
| आलिङ्गनस्य ७ आलिंगनादि | १४३ |
| उत्सवस्य ५ उत्सवादि | १४३ |
| सङ्गस्य ३ मेलकादि | १४४ |
| अनुग्रहस्य २ अनुग्रहादि | १४५ |

| नाम संख्या | श्लोक |
| --- | --- |
| निग्रहस्य २ निग्रहादि | १४४ |
| विघ्नस्य ४ विघ्नादि | १४५ |
| अवसरस्य ८ समयादि | १४५ |
| आरंभस्य ५ अभ्यादानादि | १४६ |
| आद्यव्यापारस्य२ प्रयुक्तमादि | १४६ |
| आरोहणस्य२आरोहणादि | १४६ |
| अधिक्रमस्य ३ आक्रमादि | १४८ |
| व्युत्क्रमस्य ३ व्युत्क्रमादि | १४८ |
| विरहस्य ४ विप्रलंभादि | १४९ |
| शोभायाः १० आभादि | १४९ |
| अतिशोभायाः १ सुषमेति | १४९ |
| परिचयस्य २ संस्तवादि | १५० |
| इङ्गितस्य ३ आकारादि | १५० |
| कारणस्य ७ निमित्तादि | १५० |
| कार्यस्य ४ कार्यादि | १५१ |
| निष्ठायाः २ निष्ठादि | १५१ |
| बहिर्गमनस्य १ प्रवाहेति | १५१ |
| जातेः २ जात्यादि | १५२ |
| व्यक्तेः २ व्यक्त्यादि | १५२ |
| तिर्यगर्थस्य २ तिर्यगादि | १५२ |

| नाम संख्या | श्लोक |
| --- | --- |
| स्पर्द्धायाः २ संहर्षादि | १५२ |
| द्रोहस्य २ द्रोहादि | १५२ |
| निःफलस्य ४ बंध्यादि | १५३ |
| निरर्थकस्य २ अनर्गलादि | १५३ |
| संनिवेशस्य २ संस्थानादि | १५३ |
| व्ययस्य १ अर्थेति | १५३ |
| अभिव्याप्तेः २ संमूर्च्छनादि | १५४ |
| उचितभ्रष्टस्य १ भ्रेषेति | १५४ |
| नाशस्य २ अभावादि | १५४ |
| दुर्गसंचरस्य ३ संक्रामादि | १५४ |
| नीवाकस्य २ नीवाकादि | १५५ |
| प्रतिजागरस्य २ अवेक्षादि | १५५ |
| विश्वासस्य २ विश्रंभादि | १५५ |
| विकारस्य २ परिणामादि | १५५ |
| भ्रमस्य ३ चक्रावर्त्तादि | १५६ |
| विसंवादस्य २ विप्रलंभादि | १५६ |
| अतिसर्जनस्य २ विलंभादि | १५६ |
| अनुभवस्य २ उपलंभादि | १५७ |
| लंभनस्य २ प्रतिलंभादि | १५७ |
| नियोगस्य ३ नियोगादि | १५७ |

हे॰ल॰

| नाम संख्या | श्लोक |
| --- | --- |
| विनियोगस्य १ विनियोगेति | १५७ |
| धान्यादिच्छेदनस्य ३ लवादि | १५८ |
| धान्यादिनिर्बुसीकरणस्य ३ निःपावादि | १५८ |
| थूत्कृतस्य ५ निष्ठीवादि | १५८ |
| निवृत्तेः ६ निवृत्त्यादि | १५९ |
| विधूननस्य २ विधूननादि | १५९ |
| रिङ्खणस्य २ रिंखणादि | १५९ |
| रक्षयाः २ रक्षणादि | १६० |
| ग्रहणस्य २ ग्रहादि | १६० |
| वेधस्य २ व्यधादि | १६० |
| क्षयस्य २ क्षयादि | १६० |
| स्फुरणस्य २ स्फुरणादि | १६० |
| जीर्णस्य २ ज्यान्यादि | १६० |
| वरणस्य २ वरादि | १६० |
| समाहारस्य २ समुच्चयादि | १६१ |
| अपचयस्य २ अपहारादि | १६१ |
| उपदानस्य २ प्रत्याहारादि | १६१ |
| बुद्धिशक्तेः २ बुद्धिशक्त्यादि | १६१ |

| नाम संख्या | श्लोक |
| --- | --- |
| स्वर्गस्य १ स्वरिति | १६१ |
| रसातलस्य १ भूरिति | १६१ |
| आकाशस्य २ भुवोआदि | १६२ |
| द्यावाभूम्योः १ द्यावेति | १६२ |
| ऊर्ध्वस्य २ उपरिष्टादादि | १६२ |
| अधसः ३ अधस्तादादि | १६२ |
| वर्जनस्य ६ अन्तरेणादि | ११४ |
| सहार्थस्य ६ साकमादि | १६४ |
| व्यर्थार्थस्य ५ ऋतमादि | १६४ |
| परलोकस्य २ प्रेत्यादि | १६५ |
| मौनस्य २ तूष्णीमादि | १६२ |
| हर्षार्थस्य १ दिष्ट्येति | १६५ |
| सर्वतोभावस्य ५ परितआदि | १६६ |
| अग्रतोर्थस्य ४ पुरसादि | १६६ |
| बाहुल्यस्य १ प्रायसिति | १६६ |
| अधुनार्थस्य ५ सांप्रतमादि | १६७ |
| शीघ्रार्थस्य ९ अंजसादि | १६७ |
| सदार्थस्य ४ सदादि | १६८ |
| पुनःपुनरर्थस्य ५ भूयइत्यादि | १६८ |
| दिनान्तस्य १ सायमिति | १६८ |

| नाम संख्या | श्लोक |
|---|---|
| दिनस्य १ दिवसेति | १६८ |
| नक्षत्रार्थस्य ५ सहसादि | १६९ |
| चिरार्थस्य ६ चिरायादि | १६९ |
| कदाचिदर्थस्य ३ कदाचिदादि | १७० |
| रात्र्यर्थस्य ३ दोषादि | १७० |
| प्रातःकालार्थस्य २ प्रगेइत्यादि | १७० |
| तिर्यगर्थस्य २ तिरसादि | १७१ |
| निष्फलार्थस्य २ वृथादि | १७१ |
| असत्यार्थस्य २ मृषादि | १७१ |
| समीपार्थस्य ३ समयादि | १७१ |
| सुखार्थस्य १ शमिति | १७२ |
| निर्भरार्थस्य ४ बलवदादि | १७२ |
| प्रथमार्थस्य २ प्रागादि | १७२ |
| वर्षस्य १ संवदिति | १७२ |
| अन्योन्यार्थस्य २ परस्परमादि | १७२ |
| रात्र्यंतार्थस्य १ उषेति | १७३ |
| अल्पार्थस्य ४ किञ्चिदादि | १७३ |
| वितर्कार्थस्य ६ आहोइत्यादि | १७३ |
| संप्रदायार्थस्य १ इतिहेति | १७४ |
| हेत्वर्थस्य ४ यदादि | १७४ |

| नाम संख्या | श्लोक | है० सू० |
|---|---|---|
| संबोधनार्थस्य ८ ( ९ इत्येके ) अंगादि | १७४ | |
| देवहोमार्थस्य ५ श्रौषडादि | १७५ | |
| एकान्तार्थस्य १ रहसिति | १७५ | |
| मध्यार्थस्य ४ अंतरमित्यादि | १७५ | |
| प्रकाशार्थस्य २ प्रादुरित्यादि | १७६ | |
| अभावार्थस्य ४ अइत्यादि | १७६ | |
| हठार्थस्य १ प्रसह्यमिति | १७६ | |
| वारणार्थस्य २ माइत्यादि | १७६ | |
| अदर्शनार्थस्य १ अस्तमिति | १७६ | |
| अनिच्छानुमतेः १ अकामेति | १७७ | |
| इच्छानुमतेः ३ काममिति | १७७ | |
| इष्टप्रश्नार्थस्य १ कच्चिदिति | १७७ | |
| निश्चयार्थस्य २ अवश्यमित्यादि | १७७ | |
| बाह्योत्पन्नार्थस्य १ बहिरिति | १७८ | |
| गतदिवसार्थस्य १ ह्यइति | १७८ | |
| प्रातःकालार्थस्य १ श्वइति | १८८ | |
| अल्पार्थस्य १ नीचैरिति | १७८ | |
| महदर्थस्य १ उच्चैरिति | १७८ | |
| विद्यमानार्थस्य १ अस्तीति | १७८ | |

| नाम | संख्या | | श्लोक |
| --- | --- | --- | --- |
| निन्दार्थस्य | १ | दुष्टुइति | १७८ |
| विरोधोक्त्यर्थस्य | १ | ननुइति | १७९ |
| पक्षान्तरार्थस्य | २ | चेदित्यादि | १७९ |
| मन्दार्थस्य | १ | शनैरिति | १७९ |
| निकटार्थस्य | १ | अर्वागिति | १७९ |
| रोषोक्त्यर्थस्य | १ | उमिति | १७९ |
| नमस्कारार्थस्य | १ | नमइति | १७९ |

॥ षष्ठःकाण्डः ॥

॥ समाप्तेयंहेमचन्द्रसूची मैथिलश्रीविद्याकरमिश्रप्रणीता ॥







॥ ॐ ॥ श्रीगणेशायनमः ॥ प्रणिपत्यार्हतः सिद्धसांगशब्दानुशासनः । रूढयौगिकमिश्राणांनाम्नांमालान्तनोम्यहम् ॥ १ ॥ व्युत्पत्तिरहिताः शब्दा रूढाआखण्डलादयः । योगोऽन्वयः स त्वगुणक्रियासम्बन्धसम्भवः ॥ २ ॥ गुणतोनीलकण्ठाद्याः क्रियातःस्रष्टृसन्निभाः । स्वस्वामित्वादिसम्बन्धस्तत्राहुर्नामतद्वताम् ॥ ३ ॥ स्वात्पालधनभुङ्नेतृपतिमत्त्वर्थकादयः । भूपालोभूधनोभूभुग्भूनेताभूपतिस्तथा ॥ ४ ॥ भूमांश्चेतिकविरूढ्याज्ञेयोदाहरणावली । जन्यात्कर्तृसृट्स्रष्टृविधातृकरसूसमाः ॥ ५ ॥ जनकाद्योनिजरुहजन्मभूसूत्यणादयः । धार्याद्ध्वजास्त्रपाण्यंकमौलिभूरणभृन्निभाः ॥ ६ ॥ शालिशेखरमत्वर्थमालिभृधरणअपि । भोज्याद्भुग्गन्धोव्रतलिट्पायिपाशासनादयः ॥ ७ ॥ पत्युःकान्ताप्रियतमावधूप्रणयिनीनिभाः । कलत्राद्वररमणप्रणयीशप्रियादयः ॥ ८ ॥ सख्युःसखिसमावाह्याद्गामियानासनादयः ।

जातेः स्वर्द्रुदुहित्रात्मजाग्रजावरजादयः ॥ ९ ॥ आश्रयाच्च द्रुमप
र्य्यायश्च यवासिसदादयः । बध्याद्रिद्वेषिजिद्घातिध्रुग्रिपुध्वंसिशास
नाः ॥ १० ॥ अप्यन्तकारिदमनदर्पच्छिन्मथनादयः । विव
क्षितो हि सम्बन्ध एकतोपि पदान्ततः ॥ ११ ॥ प्राक्प्रदर्शितसम्बन्धिश
ब्दायोज्या यथोचितम् । दृश्यते खलु वाह्यत्वे वृषस्य वृषवाहनः ॥ १२ ॥
स्वत्वे पुनर्वृषपतिर्द्धार्य्यत्वे वृषलाञ्छनः । अंशोर्द्धार्य्यत्वेंऽशुमाली स्वत्वेंऽशु
पतिरंशुमान् ॥ १३ ॥ बध्यत्वेऽहेरहिरिपुर्भोज्यत्वे चाहिभुक्शिखी ।
चिह्नैर्व्यक्तैर्भवेद्व्यक्तेर्जातिशब्दोपि वाचकः ॥ १४ ॥ तथा ह्यगस्तिपूता
दिग्दक्षिणाशा निगद्यते । अयुग्विषमशब्दौ त्रिपञ्चसप्तादिवाचकौ
॥ १५ ॥ त्रिनेत्रपञ्चेषुसप्तपलाशादिषु योजयेत् । गुणशब्दो विरोध्यर्थं
नञादिरितरोत्तरः ॥ १६ ॥ अभिधत्ते यथा कृष्णः स्यादसितः सितेत
रः । वार्द्ध्यादिषु पदे पूर्व्वे वाडवाग्न्यादिषूत्तरे ॥ १७ ॥ द्वयेपि भूभृदाद्येषु
पर्य्यायपरिवर्त्तनम् । एवं परावृत्तिसहा योगाः स्युरिति यौगिकाः ॥ १८ ॥
मिश्राः पुनः परावृत्त्यसहा गीर्वाणसन्निभाः । प्रवक्ष्यन्तेऽत्र लिङ्गन्तु ज्ञेयं लि
ङ्गानुशासनात् ॥ १९ ॥ देवाधिदेवाः प्रथमे काण्डे देवा द्वितीयके । नर
स्तृतीये तिर्य्यञ्चस्तुर्य्ये एकेन्द्रियादयः ॥ २० ॥ एकेन्द्रियाः पृथिव्य
म्बुतेजोवायुमहीरुहः । कृमिपीलुकलूताद्याः स्युर्द्वित्रिचतुरिन्द्रियाः
॥ २१ ॥ पंचेन्द्रियाश्चेभकेकिमत्स्याद्याः स्थलखाम्बुगाः । पञ्चेन्द्रियाश्च

वदेवानरानैरयिकाअपि ॥ २२ ॥ नारकाःपञ्चमेसांगाःषष्ठेसाधारणाः
स्फुटम् । प्रस्तोष्यन्तेऽव्ययाश्चात्रतुनाथादीनपूर्वगौ ॥ २३ ॥ अ हे०चं०१
र्हन्जिनःपारगतस्त्रिकालवित्क्षीणाष्टकर्मापरमेष्ठ्यधीश्वरः । शंभुः
स्वयंभूर्भगवान्जगत्प्रभुस्तीर्थङ्करस्तीर्थकरोजिनेश्वरः ॥ २४ ॥ स्याद्वाद्य
भयदसार्वाःसर्व्वज्ञःसर्व्वदर्शिकेवलिनौ । देवाधिदेवबोधदपुरुषोत्तम
वीतरागाप्ताः ॥ २५ ॥ एतस्यामवसर्प्पिण्यामृषभोऽजितसम्भवौ । अ
भिनन्दनःसुमतिस्ततःपद्मप्रभाभिधः ॥ २६ ॥ सुपार्श्वश्चन्द्रप्रभश्च
सुविधिश्चाथशीतलः । श्रेयांशोवासुपूज्यश्चविमलोऽनन्ततीर्थकृत्
॥ २७ ॥ धर्मःशान्तिःकुंथुररोमल्लिश्चमुनिसुव्रतः । निमिर्न्नेमिःपार्श्वो
वीरश्चतुर्विंशतिरर्हताम् ॥ २८ ॥ ऋषभोवृषभःश्रेयान्श्रेयांसःस्याद
नन्तजिदनन्तः । सुविधिस्तुपुष्पदन्तोमुनिसुव्रतसुव्रतौतुल्यौ ॥ २९ ॥
अरिष्टनेमिस्तुनेमिर्व्वीरश्चरमतीर्थकृत् । महावीरोवर्द्धमानोदेवार्य्योज्ञा
तनन्दनः ॥ ३० ॥ गणानवास्यर्षिसंघाएकादशगणाधिपाः । इन्द्रभू
तिरग्निभूतिर्वायुभूतिश्चगौतमाः ॥ ३१ ॥ व्यक्तःसुधर्मामण्डितमौर्य्यपुत्रा
वकंपितः । अचलभ्रातामेतार्य्यप्रभासश्चपृथक्कुलाः ॥ ३२ ॥ केवलीचरमो
जम्बूस्वाम्यथप्रभवःप्रभुः । शय्यंभवोयशोभद्रःसंभूतविजयस्ततः ॥ ३३ ॥
भद्रबाहुःस्थूलभद्रःश्रुतकेवलिनोहिषट् । महागिरिसुहस्त्याद्या
वज्रान्तादशपूर्विणः ॥ ३४ ॥ इक्ष्वाकुकुलसंभूताःस्याद्द्वाविंशतिरर्हं

हे॰ चं॰ १ ताम्। मुनिसुव्रतनेमी तु हरिवंशसमुद्भवौ ॥ ३५ ॥ नाभिश्च जितश
त्रुश्च जितारिरथसंवरः। मेघोदरःप्रतिष्ठश्च महासेननरेश्वरः ॥ ३६ ॥
सुग्रीवश्च दृढरथो विष्णुश्च वसुपूज्यराट्। कृतवर्म्मा सिंहसेनो भानुश्च
विश्वसेनराट् ॥ ३७ ॥ सूरः सुदर्शनः कुंभः सुमित्रो विजयस्तथा। स
मुद्रविजयश्चाश्वसेनः सिद्धार्थ एव च ॥ ३८ ॥ मरुदेवा विजया सेना
सिद्धार्था च मङ्गला। ततः सुसीमा पृथ्वी लक्ष्मणा रामा ततः परं ॥ ३९ ॥
नन्दा विष्णा जया श्यामा सुयशाः सुव्रताऽचिरा। श्रीर्देवी प्रभावती च पद्मा
विप्रा शिवा तथा ॥ ४० ॥ वामा त्रिशला क्रमतः पितरो मातरोऽर्हतां। स्याद्गो
मुखो महायक्षस्त्रिमुखो यक्षनायकः ॥ ४१ ॥ तुम्बुरुः कुसुमश्चापि मात
ङ्गो विजयोजितः। ब्रह्मा यक्षेट्कुमारः षण्मुखपातालकिन्नराः ॥ ४२ ॥
गरुडो गन्धर्वो यक्षेट्कुवेरो वरुणोपि च। भृकुटिर्गोमेधपार्श्वो मातङ्गोऽ
र्हदुपासकाः ॥ ४३ ॥ चक्रेश्वर्य्यजितबलादुरितारिश्च कालिका। महा
काली श्यामा शान्ता भृकुटिश्च सुतारका ॥ ४४ ॥ अशोका मानवी चंडा वि
दिता चाङ्कुशी तथा। कन्दर्प्पा निर्वाणी बला धारिणी धरणप्रिया ॥ ४५ ॥
नरदत्ताऽथ गान्धार्य्यम्बिका पद्मावती तथा। सिद्धायिका चेति जैन्यः क्र
मात्शासनदेवताः ॥ ४६ ॥ वृषो गजोऽश्वः प्लवगः क्रौञ्चोऽब्जं स्वस्तिकः
शशी। मकरः श्रीवत्सः खड्गी महिषः शूकरस्तथा ॥ ४७ ॥ श्येनो व
ज्रं मृगश्छागो नंद्यावर्त्तो घटोऽपि च। कूर्म्मो नीलोत्पलं शङ्खः फणी सिंहो

र्हतां ध्वजाः ॥ ४८ ॥ रक्तौ च पद्मप्रभवासुपूज्यौ शुक्लौ तु चन्द्रप्रभपुष्प
दन्तौ । कृष्णौ पुनर्नेमिमुनी विनीलौ श्रीमल्लिपार्श्वौ कनकत्विषोऽन्ये 
॥ ४९ ॥ उत्सर्पिण्यामतीतायां चतुर्विंशतिरर्हताम् । केवलज्ञानीनि
र्वाणी सागरोऽथ महायशाः ॥ ५० ॥ विमलः सर्वानुभूतिः श्रीधरो दत्ततीर्थ
कृत् । दामोदरः सुतेजाश्च स्वाम्यथो मुनिसुव्रतः ॥ ५१ ॥ सुमतिः शि
वगतिश्चैवास्तागोऽथ निमीश्वरः । अनिलो यशोधराख्यः कृतार्थोऽथ जि
नेश्वरः ॥ ५२ ॥ शुद्धमतिः शिवकरः स्यन्दनश्चाथ संप्रतिः । भाविन्यां
तु पद्मनाभः शूरदेवः सुपार्श्वकः ॥ ५३ ॥ स्वयंप्रभश्च सर्वानुभूतिर्देव
श्रुतोदयौ । पेढालः पोट्टिलश्चापि शतकीर्त्तिश्च सुव्रतः ॥ ५४ ॥ अममो
निष्कषायश्च निष्पुलाकोऽथ निर्ममः । चित्रगुप्तः समाधिश्च संवरश्च यशो
धरः ॥ ५५ ॥ विजयो मल्लदेवौ चानन्तवीर्यश्च भद्रकृत् । एवं सर्वावस
र्पिण्युत्सर्पिणीषु जिनोत्तमः ॥ ५६ ॥ तेषां च देहोद्भुतरूपगन्धो निराम
यः स्वेदमलोज्झितश्च । श्वासोऽब्जगंधो रुधिरामिषन्तु गोक्षीरधाराधवलं ह्य
विस्रं ॥ ५७ ॥ आहारनीहारविधिस्त्वदृश्यश्चत्वार एतेऽतिशयाः सहो
त्थाः । क्षेत्रे स्थितिर्योजनमात्रकेपि नृदेवतिर्य्यग्जनकोटिकोटेः ॥ ५८ ॥
वाणी नृतिर्य्यक्सुरलोकभाषासंवादिनी योजनगामिनी च । भामण्डलं
चारु च मौलिपृष्ठे विडम्बिताहर्पतिमण्डलश्रीः ॥ ५९ ॥ साऽग्रे च ग
व्यूतिशतद्वये रुजा वैरेतयो मार्य्यतिवृष्ट्यवृष्टयः । दुर्भिक्षमन्यस्वकचक्र

हे॰ चं॰ १ नोभयंस्यान्नैतएकादशकर्म्मघातजाः ॥ ६० ॥ खेधर्म्मचक्रंचमराःसपादपी ठंमृगेन्द्रासनमुज्ज्वलंच । छत्रत्रयंरत्नमयध्वजोंघ्रिन्यासेचचामीकर पंकजानि ॥ ६१ ॥ वप्रत्रयंचारुचतुर्म्मुखांगताश्चैत्यद्रुमोऽधोवदनाश्च कंटकाः । द्रुमाननिर्दुंदुभिनादउच्चकैर्वातोनुकूलःशकुनाःप्रदक्षि णाः ॥ ६२ ॥ गन्धाम्बुवर्षंबहुवर्णपुष्पवृष्टिःकचश्मश्रुनखांप्रवृद्धिः । चतुर्विधामर्त्यनिकायकोटिर्जघन्यभावादपिपार्श्वदेशे ॥ ६३ ॥ ऋतूना मिन्द्रियार्थानामनुकूलत्वमित्यमी । एकोनविंशतिर्दिव्याश्चतुस्त्रिंशच्चमी लिताः ॥ ६४ ॥ संस्कारवत्वमौदात्त्यमुपचारपरीतता । मेघनिर्घोषगां भीर्य्यंप्रतिनादविधायिता ॥ ६५ ॥ दक्षिणत्वमुपनीतरागत्वंचमहार्थता । अव्याहतत्वंशिष्टत्वंसंशयानामसम्भवः ॥ ६६ ॥ निराकृतान्योत्तरत्वं हृदयंगमिताऽपिच । मिथःसाकांक्षताप्रस्तावौचित्यंतत्त्वनिष्ठता ॥ ६७ ॥ अप्रकीर्णप्रसृतत्वमश्लाघ्यान्यनिन्दिता । आभिजात्यमतिस्निग्धमधु रत्वंप्रशस्यता ॥ ६८ ॥ अमर्म्मवेधितौदार्य्यंधर्म्मार्थप्रतिबद्धता । कारका द्यविपर्य्यासोविभ्रमादिवियुक्तता ॥ ६९ ॥ चित्रकृत्त्वमद्भुतत्वंतथान तिविलम्बिता । अनेकजातिवैचित्र्यमारोपितविशेषता ॥ ७० ॥ सत्त्व प्रधानतावर्णपदवाक्यविविक्तता । अव्युच्छित्तिरखेदित्वम्पञ्चत्रिंश च्चवाग्गुणाः ॥ ७१ ॥ आन्तरायादानलाभवीर्य्यभोगोपभोगगाः । हा सोरत्यरतीभीतिर्ज्जुगुप्साशोकएवच ॥ ७२ ॥ कामोमिथ्यात्वमज्ञानं

निद्राविरतिस्तथा । रागोद्वेषश्चनोदोषास्तेषामष्टादशाप्यमी ॥ ७३॥ 
महानन्दोमृतंसिद्धिःकैवल्यमपुनर्भवः । शिवंनिःश्रेयसंश्रेयोनिर्वा
णंब्रह्मनिर्वृतिः ॥ ७४ ॥ महोदयस्सर्वदुःखक्षयोनिर्य्याणमक्षरं । मु
क्तिर्मोक्षोऽपवर्गोऽथमुमुक्षुःश्रमणोयतिः॥७५ ॥ वाचंयमोव्रतीसा
धुरनगारऋषिर्म्मुनिः । निर्ग्रन्थोभिक्षुरस्यस्वतपोयोगशमादयः
॥ ७६ ॥ मोक्षोपायोयोगोज्ञानंश्रद्धानंचरणात्मकः । अभाषणंपुन
र्मौनंगुरुर्द्धर्म्मोपदेशकः ॥ ७७ ॥ अनुयोगकृदाचार्य्यउपाध्याय
स्तुपाठकः । अनूचानःप्रवचनेसांगेधीतीगुरोस्तुसः ॥ ७८ ॥ शिष्यो
विनेयोऽन्तेवासीशैक्षःप्रथमकल्पिकः । सतीर्थ्यास्त्वेकगुरवोविवेकःपृ
थगात्मता ॥ ७९ ॥ एकब्रह्मव्रताचारामिथस्सब्रह्मचारिणः । स्या
त्पारम्पर्य्यमाम्नायस्सम्प्रदायोगुरुक्रमः ॥ ८० ॥ व्रतादानंपरिव्रज्या
तपस्यानियमस्थितिः । अहिंसासूनृतास्तेयब्रह्माकिञ्चनतायमाः
॥ ८१ ॥ नियमाश्शौचसन्तोषौस्वाध्यायतपसीअपि । देवताप्रणिधा
नञ्चकरणम्पुनरासनं ॥ ८२ ॥ प्राणायामःप्राणयमश्श्वासप्रश्वासरो
धनं । प्रत्याहारस्त्विन्द्रियाणांविषयेभ्यस्समाहृतिः ॥ ८३ ॥ धारणा
तुक्वचिद्ध्येयेचित्तस्यस्थिरबन्धनं । ध्यानन्तुविषयेतस्मिन्नेकप्रत्ययसन्त
तिः ॥ ८४ ॥ समाधिस्तुतदेवार्थमात्राभासनरूपकं । एवंयोगोयमाद्य
ङ्गैरष्टभिस्समतोऽष्टधा ॥ ८५ ॥ स्वश्श्रेयसंशुभशिवेकल्याणंश्वोवसी

हे० चं० १ यसंश्रेयः। क्षेमंभावुकभविककुशलमङ्गलभद्रमद्रशस्तानि ॥ ८६ ॥

॥ इत्याचार्यहेमचन्द्रविरचितायामभिधानचिन्ता-
मणौ नाममालायां देवाधिदेवकाण्डः प्रथमः ॥ १ ॥

---

हे० चं० २ स्वर्गस्त्रिविष्टपंद्योदिवौ भुविस्तविषताविषौ नाकः। गौस्त्रिदिवमूर्द्ध्वलोकः
सुरालयस्तत्सदस्त्वमराः ॥ १ ॥ देवाः सुपर्वसुरनिर्ज्जरदेवतर्भुबर्हिर्मु
खानिमिषदैवतनाकिलेखाः। वृन्दारकाः सुमनसस्त्रिदशा अमर्त्याः
स्वाहास्वधाक्रतुसुधाभुज आदितेयाः ॥ २ ॥ गीर्वाणा मरुतोऽस्वप्ना
विबुधा दानवारयः। तेषांयानंविमानोऽन्धः पीयूषममृतं सुधा ॥ ३ ॥ अ
सुरा नागास्तडितः सुपर्णका वह्नयोऽनिलास्तनिताः। उदधिद्वीपदिशोद
शभवनाधीशाः कुमारान्ताः ॥ ४ ॥ स्युः पिशाचा भूता यक्षा राक्षसा किन्नरा
अपि। किम्पुरुषा महोरगा गन्धर्वा व्यन्तरा अमी ॥ ५ ॥ ज्योतिष्काः
पञ्च चन्द्रार्कग्रहनक्षत्रतारकाः। वैमानिकाः पुनः कल्पभवा द्वादश ते
त्वमी ॥ ६ ॥ सौधर्म्मैशानसनत्कुमारमाहेन्द्रब्रह्मलान्तकजाः। शुक्र
सहस्रारानतप्राणतजा आरणाच्युतजाः ॥ ७ ॥ कल्पातीता नवग्रैवे
यकाः पञ्चत्वनुत्तराः। निकायभेदादेवंस्युर्देवाः किल चतुर्विधाः ॥ ८ ॥
आदित्यः सविताऽर्यमा खरसहस्रोष्णांशुरंशू रविर्म्मार्त्तण्डस्तरणिर्गभ
स्तिररुणो भानुर्न्नभोऽहर्म्मणिः। सूर्योऽर्कः किरणो भगो ग्रहपुषः पूषाप

तङ्गः खगो मार्त्तण्डो यमुनाकृतान्तजनकः प्रद्योतनस्तापनः ॥ ९ ॥ ब्र हे० चं० २
ध्नो हंसश्चित्रभानुर्विवस्वान्सूरस्त्वष्टा द्वादशात्मा च हेलिः । मित्रो ध्वा
न्तारातिरब्जांशुहस्तश्चक्राब्जाहर्बान्धवस्सप्तसप्तिः ॥ १० ॥ दिवादिना
हर्दिवसप्रभाविभाभासःकरस्स्यान्मिहिरो विरोचनः । ग्रहाब्जिनीगोद्यु
पतिर्विकर्त्तनो हरिः शुचीनौ गगनध्वजाध्वगौ ॥ ११ ॥ हरिदश्वो जग
त्कर्मसाक्षी भास्वान्विभावसुः । त्रयीतनुर्जगच्चक्षुस्तपनोऽरुणसार
थिः ॥ १२ ॥ रोचिरुस्रुचिशोचिरंशुगोज्योतिरर्चिरुपधृत्यभीषवः ।
प्रग्रहश्शुचिमरीचिदीप्तयोधामकेतुघृणिरश्मिपृश्नयः ॥ १३ ॥ पाद
दीधितिकरद्युतिद्युताद्युत्विरोकविरणात्विषिस्त्विषः । भाःप्रभावसुगभस्ति
भानवोभामयूखमहसीछविर्विभा ॥ १४ ॥ प्रकाशस्तेजउद्योत आलो
कोवर्चआतपः । मरीचिकामृगतृष्णामण्डलंतूपसूर्यकं ॥ १५ ॥ प
रिधिःपरिवेषस्तु सूरसूतस्तु काश्यपिः । अनूरुर्विनतासूनुररु
णोगरुडाग्रजः ॥ १६ ॥ रेवन्तस्त्वर्करेतोजः प्लवगो हयवाहनः । अ
ष्टादशमाठराद्यास्सवितुःपरिपार्श्वकाः ॥ १७ ॥ चन्द्रमाः कुमुदबान्ध
वोदशश्वेतवाज्यमृतसूस्तिथिप्रणीः । कौमुदीकुमुदिनीभदक्षजारोहि
णीद्विजनिशौषधीपतिः ॥ १८ ॥ जैवातृकोऽब्जस्सकलाशशी ग्लौश्छा
याभृदिन्दुर्विधुरत्रिदृग्जः । राजानिशारत्नकरौ च चन्द्रस्सोमोऽमृत
श्वेतहिमद्युतिर्ग्लौः ॥ १९ ॥ षोडशांशःकलाचिह्नं लक्ष्मयां लक्ष्मला

16

छन्नं । अङ्कःकलङ्कोऽभिज्ञानंचन्द्रिकाचन्द्रगोलिका ॥ २० ॥ चन्द्रा
तपःकौमुदीचज्योत्स्नाबिम्बन्तुमण्डलं । नक्षत्रन्तारकाताराज्योतिषी
भमुडुग्रहः ॥ २१ ॥ धिष्ण्यमृक्षमथाश्विन्यश्वकिनीदस्रदेवता । अ
श्वयुग्वालिनीचाथभरणीयमदेवता ॥ २२ ॥ कृत्तिकाबहुलाश्चाग्निदै
वाब्राह्मीतुरोहिणी । मृगशीर्षमृगशिरोमार्गश्चान्द्रमसंमृगः ॥ २३ ॥
इल्वलास्तुमृगशिरःशिरस्थाःपञ्चतारकाः। आर्द्रातुकालिनीरौद्रीपु
नर्व्वसूतुयामकौ ॥ २४ ॥ आदित्यौचपुष्यस्तिष्यःसिद्ध्यश्चगुरुदैवतः ।
सार्प्पाऽश्लेषामघापित्र्याफाल्गुनीयोनिदेवता ॥ २५ ॥ सानूत्तरार्यमदेवा
हस्तस्सवितृदैवतः । त्वाष्ट्रीचित्रानिलीस्वातिर्विशाखेन्द्राग्निदेवता
॥ २६ ॥ राधानुराधातुमैत्रीज्येष्ठैन्द्रीमूलआस्रपः । पूर्वाषाढातुसोत्तरास्या
द्वैश्वी श्रवणःपुनः ॥ २७ ॥ हरिदेवःश्रविष्ठातुधनिष्ठावसुदेवता ।
वारुणीतुशतभिषगजाहिर्बुध्नदेवताः ॥ २८ ॥ पूर्वोत्तराभाद्रपदाद्वय्यः
प्रोष्ठपदास्तुताः । रेवतीतुपौष्ण्यंदाक्षायण्यस्सर्वाःशशिप्रियाः ॥ २९ ॥
राशीनामुदयोलग्नंमेषप्रभृतयस्तुते । आरोवक्रोलोहितांगोमंगलोंगार
कःकुजः ॥ ३० ॥ आषाढाभूर्न्नवार्च्चिश्चबुधस्सौम्यःप्रहर्षुलः । ज्ञःपञ्चा
र्चिःश्रविष्ठाभूःश्यामाङ्गोरोहिणीसुतः ॥ ३१ ॥ बृहस्पतिःसुराचार्य्यो
जीवश्चित्रशिखण्डिजः । वाचस्पतिर्द्वादशार्चिर्द्धिषणःफाल्गुनीभवः
॥ ३२ ॥ गीर्बृहत्योःपतिरुतथ्यानुजाङ्गिरसौगुरुः । शुक्रोमघाभवः

काव्यउशना भार्गवः कविः ॥ ३३॥ षोडशार्चिर्दैत्यगुरुर्धिष्ण्यशनै
श्चरश्शनिः । छायासुतोऽसितस्सौरिस्सप्तार्चीरेवतीभवः ॥ ३४ ॥ म
न्दःक्रोडोनीलवासास्स्वर्भानुस्तुविधुन्तुदः । तमोराहुस्सैंहिकेयोभरणी
भूरथाह्निकः ॥ ३५ ॥ अश्लेषाभूश्शिखीकेतुर्ध्रुवस्तूत्तानपादजः । अग
स्त्योऽगस्तिःपीताब्धिर्वातापिद्विट्घटोद्भवः ॥ ३६ ॥ मैत्रावरुणिराग्नेय
और्वशेयाग्निमारुतौ । लोपामुद्रातुतज्जायाकौषीतकीवरप्रदा ॥ ३७॥
मरीचिप्रमुखास्सप्तर्षयश्चित्रशिखण्डिनः । पुष्पदन्तौपुष्पवन्तावेकोक्त्या
शशिभास्करौ ॥ ३८ ॥ राहुग्रासोऽर्केन्द्वोर्ग्रह उपराग उपप्लवः । उपलि
ङ्गन्त्वरिष्टंस्यादुपसर्ग उपद्रवः ॥ ३९ ॥ अजन्यमीतिरुत्पातो वह्न्यु
त्पात उपाहितः । स्यात्कालस्समयोदिष्टानेहसौसर्वमूषकः ॥ ४० ॥ का
लोद्विविधोऽवसर्पिण्युत्सर्पिणीभेदतः । सागरकोटिकोटीनांविंशत्या
स समाप्यते ॥ ४१ ॥ अवसर्पिण्यांषडरा उत्सर्पिण्यांतएव विपरीताः ।
एवंद्वादशभिररैर्विवर्त्ततेकालचक्रमिदं ॥ ४२॥ तत्रैकान्तसुखमारश्च
तस्रः कोटिकोटयः । सागराणांसुखमातुतिस्रस्तत्कोटिकोटयः ॥ ४३ ॥
सुखमदुःखमानेद्वेदुःखमसुखमापुनः । सैकासहस्रैर्वर्षाणांद्विचत्वारिं
शतोनिता ॥ ४४ ॥ अथदुःखमैकविंशतिरब्दसहस्राणितावतीतुस्यात् ।
एकान्तदुःखमापिह्येतत्संख्याः परेऽपिविपरीताः ॥ ४५ ॥ प्रथमेरत्रयेम
र्त्यास्त्रिद्व्येकपल्यजीविताः । त्रिद्व्येकगव्यूत्युच्छ्रायास्त्रिद्व्येकदिनभोजनाः

॥ ४६ ॥ कल्पद्रुफलसंतुष्टाश्चतुर्थेत्वरकेनराः । पूर्वकोट्यायुषःपञ्चधनु
श्शतसमुच्छ्रयाः ॥ ४७ ॥ पञ्चमेतुवर्षशतायुषस्सप्तकरोच्छ्रयाः । ष
ष्ठेपुनःषोडशाब्दायुषोहस्तसमुच्छ्रयाः ॥ ४८ ॥ एकान्तदुःखप्रचिताउ
त्सर्पिण्यामपीदृशाः । पश्चानुपूर्व्याविज्ञेयाअरेषुकिलषट्स्वपि ॥ ४९ ॥
अष्टादशनिमेषास्तुकाष्ठाकाष्ठाद्वयंलवः । कलातैःपंचदशभिर्लेशस्त
द्वितयेनच ॥ ५० ॥ क्षणस्तैःपञ्चदशभिःक्षणैःषड्भिस्तुनाडिका । साधा
रिकाघटिकाचमुहूर्तस्तद्द्वयेनच ॥ ५१ ॥ त्रिंशतातैरहोरात्रस्तत्राह
र्दिवसोदिनं । दिवंद्युर्वासरोघस्त्रः प्रभातंस्यादहर्मुखं ॥ ५२ ॥ व्युष्टंवि
भातंप्रत्यूषंकल्यप्रत्युषसीउषः । काल्यंमध्याह्नस्तुदिवामध्यंमध्यदिनं
चसः ॥ ५३ ॥ दिनावसानमुत्सूरोविकालसबलीअपि । सायंसंध्या
तुपितृस्रूस्त्रिसंध्यन्तूपवैणवं ॥ ५४ ॥ श्राद्धकालस्तुकुतपोऽष्टमोभागो
दिनस्ययः । निशानिशिथिनीरात्रिश्शर्वरीक्षणदाक्षपा ॥ ५५ ॥ त्रियामा
यामिनीभातीतमीतमाविभावरी । रजनीवसतिःश्यामावासतेयीतम
स्विनी ॥ ५६ ॥ उषादोषेन्दुकान्ताऽथतमिस्रादर्शयामिनी । ज्यौत्स्नीतु
पूर्णिमारात्रिर्गणरात्रौनिशागणः ॥ ५७ ॥ पक्षिणीपक्षतुल्याभ्यामहो
भ्यांवेष्टितानिशा । गर्भकंरजनीद्वंद्वंप्रदोषोरजनीमुखं ॥ ५८ ॥ यामः
प्रहरोनिशीथस्त्वर्द्धरात्रोमहानिशा । उच्चन्द्रस्त्वपररात्रस्तमिस्रंतिमि
रंतमः ॥ ५९ ॥ ध्वान्तंभूच्छायान्धकारंतमसंसमवान्धतः । तुल्यनक्तं

द्दिनेकालेविषुवद्विषुवञ्चतत् ॥ ६० ॥ पञ्चदशाहोरात्रस्स्यात्पक्षस्स हे॰चं॰ २
बहुलोऽसितः । तिथिःपुनःकर्म्मवाटीप्रतिपत्पक्षतिस्समे ॥ ६१ ॥ प
ञ्चदश्यौयज्ञकालौपक्षान्तौपर्वणीअपि । तत्पर्वमूलंभूतेष्टापञ्चदश्यो
र्य्यदन्तरं ॥ ६२ ॥ सपर्वसन्धिःप्रतिपत्पञ्चदश्योर्य्यदन्तरं । पूर्णि
मापौर्णमासीसाराकापूर्णेनिशाकरे ॥ ६३ ॥ कलाहीनेत्वनुमतिर्म्मार्गशी
र्षाग्रहायणी । अमाऽमावस्यामावास्यादर्शस्सूर्य्येन्दुसङ्गमः ॥ ६४ ॥ अ
मावस्यमावासीचसानष्टेन्दुःकुहूःकुहूः । दृष्टेन्दुस्तुसिनीवालीभूतेष्टा
तुचतुर्द्दशी ॥ ६५ ॥ पक्षोमासोवत्सरादिर्म्मार्गशीर्षस्सहस्सहाः । आ
ग्राहायणिकस्याथपौषस्तैषस्सहस्यवत् ॥ ६६ ॥ माघस्तपाःफाल्गुनस्तु
फाल्गुनिकस्तपस्यवत् । चैत्रोमधुश्चैत्रिकस्स्याद्वैशाखेराधमाधवौ ॥ ६७ ॥ ज्ये
ष्ठस्तुश्शुक्रोऽथाषाढश्शुचिस्स्याच्छ्रावणोनभाः । श्रावणिकोऽथनभस्यः
प्रौष्ठभाद्रपराःपदः ॥ ६८ ॥ भाद्रस्स्यादाश्विनेत्वाश्वयुजोप्यथकार्त्ति
कः । कार्त्तिकिकोबाहुलोर्जौद्वौद्वौमार्गादिकावृतुः ॥ ६९ ॥ हेमन्तःप्र
शलोरौद्रोऽथशेषशिशिरौसमौ । वसन्तइष्यस्सुरभिःपुष्पकालोबलाङ्ग
कः ॥ ७० ॥ उष्णउष्णागमोग्रीष्मोनिदाघस्तपउष्मकः । वर्षास्तपा
त्ययःप्रावृण्मेघकालागमोऽक्षरी ॥ ७१ ॥ शरद्घनात्ययोऽयनंशिशि
राद्यैस्त्रिभिस्त्रिभिः । अयनेद्वेगतिरुदग्दक्षिणार्कस्यवत्सरः ॥ ७२ ॥ स
सम्पर्य्यनूद्धोवर्षंहायनोऽब्दंसमाःशरत् । भवेत्पैत्रंत्वहोरात्रंमासेनाब्दे

नंदैवतं ॥ ७३ ॥ दैवेयुगसहस्रेद्वेब्राह्मःकल्पौतुतौनृणां । मन्वन्तरन्तु
दिव्यानांयुगानामेकसप्ततिः ॥ ७४ ॥ कल्पोयुगान्तःकल्पान्तःसंहारः
प्रलयःक्षयः । संवर्त्तःपरिवर्त्तश्चसमस्तुप्रिज्जिहानकः ॥ ७५ ॥ त
त्कालस्तुतदात्वंस्यात्तज्ज्ञंसांदृष्टिकंफलं । आयतिस्तूत्तरःकालस्तदर्क्को
स्तद्भवंफलं ॥ ७६ ॥ व्योमान्तरिक्षंगगनंघनाश्रयोविहायआकाश
मनन्तपुष्करे । अभ्रंसुरभ्रातृमरुत्पथाम्बरंखंद्योदिवौविष्णुपदंविय
न्नभः ॥ ७७ ॥ नभ्राट्तडित्वान्मुदिरोघनाघनोऽभ्रंधूमयोनिस्तन
यित्नुमेघाः । जीमूतपर्ज्जन्यबलाहकाघनाधाराधरौवाहदमुग्धराजलात्
॥ ७८ ॥ कादम्बिनीमेघमालादुर्द्दिनंमेघजंतमः । आसारोवेगवान्व
र्षोवातास्त्रंवारिसीकरः ॥ ७९ ॥ वृष्ट्यांवर्षणवर्षेतद्विघ्नेग्राहग्रहावग्रा
न् । घनोपलस्तुकरकःकाष्ठाशादिग्घरित्ककुप् ॥ ८० ॥ पूर्वाप्राचीदक्षि
णावाचीप्रतीचीतुपश्चिमा । अपराथोत्तरोदीचीविदिक्कोणपदिशंप्रदिक्
॥ ८१ ॥ दिश्यंदिग्भववस्त्वन्यपागपाचीनमुदगुदीचीनं । प्राक्प्राचीनञ्च
समेप्रत्यक्तुस्यात्प्रतीचीनं ॥ ८२ ॥ तिर्य्यग्दिशांतुपतयइन्द्राग्निय
मनैर्ऋताः । वरुणोवायुकुबेरावीशानश्चयथाक्रमं ॥ ८३ ॥ ऐरावतः
पुण्डरीकोवामनःकुमुदोञ्जनः । पुष्पदन्तस्सार्वभौमःसुप्रतीकश्चदि
ग्गजाः ॥ ८४ ॥ इन्द्रोहरिर्दुश्च्यवनोऽच्युताग्रजोवज्रीबिडौजामघ
वान्पुरन्दरः । प्राचीनबर्हिःपुरुहूतवासवौसंक्रन्दनाखण्डलमेघ

वाहनाः ॥ ८५ ॥ सूत्रामवास्तोष्पतिदल्भिशक्रावृषाशुनासीरसह
स्रनेत्रौ । पर्ज्जन्यहर्य्यश्वऋभुक्षिबाहुदन्तेयवृद्धश्रवसस्तुराषाट्
॥ ८६ ॥ सुरर्षभस्तपस्तक्षोजिष्णुर्वज्रशतक्रतुः । कौशिकःपूर्वदिग्दे
वाप्सरस्स्वर्गशचीपतिः ॥ ८७ ॥ पृतनाषाडुग्रधन्वामरुत्वान्मघवास्यतु ।
द्विषःपाकोद्र्योवृत्रपुलोमानमुचिर्बलः ॥ ८८ ॥ जम्भःप्रियाशचीन्द्रा
णीपौलोमीजयवाहिनी । तनयस्तुजयन्तस्स्याज्जयदत्तोजयस्त्वसः
॥ ८९ ॥ सुताजयन्तीतवीषीताविष्युच्चैःश्रवाहयः । मातलिस्सारथि
र्देवनन्दीद्वाःस्थोगजःपुनः ॥ ९० ॥ ऐरावणोऽभ्रमातङ्गचतुर्द्दन्तार्क
सोदरः । ऐरावतोहस्तिमल्लःश्वेतगजोऽभ्रमुप्रियः ॥ ९१ ॥ वैजयन्तौ
तुप्रासादध्वजौपुर्य्यमरावती । सरोनन्दीसरःपर्षत्तुसुधर्मानन्दनंवनं
॥ ९२ ॥ वृक्षःकल्पःपारिजातोमन्दारोहरिचन्दनः । सन्तानश्चधनुर्दे
वायुधन्तदृजुरोहितं ॥ ९३ ॥ दीर्घंत्वैरावतंवज्रंत्वशनिर्ह्रादिनीस्व
रुः । शतकोटिःपविःशम्बोदम्भोलिर्भिदुरंभिदुः ॥ ९४ ॥ व्याधामःकु
लिशःस्यार्च्चिरतिक्षास्फूर्जथुर्द्ध्वनिः । स्वर्वैद्यावश्विनीपुत्रावश्विनौवडवा
सुतौ ॥ ९५ ॥ नासिक्यावर्कजौदस्रौनासत्यावश्विजौयमौ । विश्वक
र्मापुनस्त्वष्टाविश्वकृद्देववर्द्धकिः ॥ ९६ ॥ स्यस्स्वर्गिवध्वोऽप्सरसस्स्व
र्वेश्याउर्वशीमुखाः । हाहादयस्तुगन्धर्वागन्धर्वादेवगायनाः ॥ ९७ ॥
यमःकृतान्तःपितृदक्षिणाशाप्रेतात्पतिर्दण्डधरोऽर्कसूनुः । कीनाशमृ

हैं०वं० २ त्यूसमवर्त्तिकालौ श्रीर्णाधिहर्य्यन्तकधर्म्मराजाः ॥ ९८ ॥ यमराजः
श्राद्धदेवः शमनो महिषध्वजः । कालिन्दीसोदरश्चापि धूमोऽर्णांतस्य
वल्लभा ॥ ९९ ॥ पुरीपुनस्संयमनी प्रतीहारस्तु वैध्यतः । दासौ चण्ड
महाचण्डौ चित्रगुप्तश्च लेखकः ॥ १०० ॥ स्याद्राक्षसः पुन्यजनोन्त्वचक्षा
यात्वासरः कौणपयातुधानौ । रात्रिञ्चरो रात्रिचरः पलादः कीनाशरक्षोनि
कषात्मजाश्च ॥ १०१ ॥ क्रव्यात्कर्बुरनैर्ऋता वसृक्पो वरुणस्त्वर्णवमन्दि
रः प्रचेताः । जलयादःपतिपाशिमेघनादाजलकान्तारस्स्यात्परंजन
श्च ॥ १०२ ॥ श्रीदः सितोदरकुहेशसखापिशाचकांक्षावसुस्त्रिशिरऐ
लबिलैकपिङ्गाः । पौलस्त्यवैश्रवणरत्नकराःकुवेरयक्षेन्द्रधर्मधनदो
नरवाहनश्च ॥ १०३ ॥ कैलासौकायक्षधननिधिकिम्पुरुषेश्वराः । वि
मानंपुष्पकञ्चैत्ररथंवनंपुरीप्रभा ॥ १०४ ॥ अलकावस्तोकसारण्डुतोऽस्य
नलकूवरः । वित्तंरिक्थंस्वापतेयंरास्सारंविभवोवसु ॥ १०५ ॥ द्युम्नंद्र
व्यंपृक्तमृक्थंस्वमृणांद्रविणंधनं । हिरण्यार्थौनिधानंतुकुनाभिश्शेवधिर्न्नि
धिः ॥ १०६ ॥ महापद्मश्चपद्मश्चशङ्खोमकरकच्छपौ । मुकुन्दकुन्द
नीलाश्चखर्वश्चनिधयोनव ॥ १०७ ॥ यक्षःपुन्यजनोराजागुह्यकोवट
वास्यपि । किन्नरस्तुकिम्पुरुषस्तुरङ्गवदनोमयुः ॥ १०८ ॥ शम्भुश्श
र्वस्थाणुरीशानईशोरुद्रोमेशोवामदेवोवृषाङ्कः । कण्ठेकालःशङ्करोनी
लकण्ठःश्रीकण्ठोऽग्रोधूर्ज्जटिभीमभर्गौ ॥ १०९ ॥ मृत्युञ्जयःपञ्चमुखो

अष्टमूर्त्तिः श्मशानवेश्मा गिरीशः । षराढ़ः कपर्द्दीश्वर ऊर्ध्वलिङ्ग एक 
चित्दृग्भालदृगेकपादः ॥ ११० ॥ मृडोऽट्टहासी घनवाहनोऽहिर्बुध्न्यो
विरूपाक्षविषान्तकौ च । महाव्रती वह्निहिरण्यरेताः शिवोऽस्थिध
न्वा पुरुषास्थिमाली ॥ १११ ॥ स्याद्व्योमकेशः शिपिविष्टभैरवौ दिक्कृत्तिवा
साभवनीललोहितौ । सर्वज्ञनाट्यप्रियखण्डपर्शवो महापरादेवनटे
श्वरहरः ॥ ११२ ॥ पशुप्रमथभूतेमापतिः पिङ्गजटेक्षणः । पिना
कशूलखट्वाङ्गगङ्गाहिखण्डकपालभृत् ॥ ११३ ॥ गजपूषपुरानङ्गकाला
न्धकमखासुहृत् । कपर्दोऽस्य जटाजूटः खट्वाङ्गस्तु सुखंसुणः ॥ ११४ ॥
पिनाकं स्यादाजगवमजकावं च तद्धनुः । ब्राह्म्याद्या मातरः स प्रमथाः
पार्षदा गणाः ॥ ११५ ॥ लघिमा वशितेशित्वं प्राकाम्यं महिमाऽणिमा । यत्र
कामावसायित्वं प्राप्तिरैश्वर्यमष्टधा ॥ ११६ ॥ गौरी काली पार्वती मातृमा
ताऽपर्णा रुद्राण्यम्बिका त्र्यम्बकोमा । दुर्गा चण्डी सिंहयाना मृडानी कात्या
यन्यौ दक्षजार्या कुमारी ॥ ११७ ॥ सती शिवा महादेवी शर्वाणी सर्व
मङ्गला । भवानी कृष्णा मेनाकस्वसा मेनाद्रिजेश्वरा ॥ ११८ ॥ निशुम्भ
शुम्भमहिषमर्द्दिनी भूतनायिका । तस्याः सिंहासनं तालं सख्यौ तु विज
या जया ॥ ११९ ॥ चामुण्डा चर्विका चर्ममुण्डा मार्ज्जारकर्णिका । कर्ण
मोटी महागन्धा भैरवी च कपालिनी ॥ १२० ॥ हेरम्बो गणविघ्नेशः पर्शुपा
णिर्विनायकः । द्वैमातुरो गजास्यैकदन्तौ लम्बोदराखुगौ ॥ १२१ ॥ स्कन्

हे॰ चं॰ २ न्दः स्वामी महासेनः सेनानीः शिखिवाहनः । षाण्मातुरो ब्रह्मचारी गङ्गो
माकृत्तिकासुतः ॥ १२२ ॥ द्वादशाक्षो महातेजाः कुमारः षण्मुखो गुहः
। विशाखः शक्तिभृत्क्रौञ्चतारकारिश्शराग्निभूः ॥ १२३ ॥ भृङ्गी भृङ्गिरि
टिर्भृङ्गिरीटिर्नाड्यस्थिविग्रहः । कुष्मांडकेकेलिकिलो नंदीशेतंडुनन्दि
नौ ॥ १२४ ॥ द्रुहिणो विरिंचिर्द्रुघणो विरञ्चः परमेष्ठ्यजोऽष्टश्रवणः
स्स्वयम्भूः । कमनः कविस्सात्त्विकवेदगर्भौ स्थविरश्शतानन्दपिताम
होकः ॥ १२५ ॥ धाता विधाता विधिवेधसौ ध्रुवः पुराणगो हंसगविश्वरेत
सौ । प्रजापतिर्ब्रह्मचतुर्मुखौ भवान्तकृज्जगत्कर्तृसरोरुहासनौ ॥ १२६ ॥
शम्भुश्शतधृतिस्स्रष्टा सुरज्येष्ठो विरिञ्चनः । हिरण्यगर्भो लोकेशो ना
भिपद्मात्मभूरपि ॥ १२७ ॥ विष्णुर्जिष्णुर्जनार्दनो हरिर्हृषीकेशः
ऽच्युतः केशवो दाशार्हः पुरुषोत्तमोऽब्धिशयनोपेन्द्रावजेन्द्रानुजौ ।
विष्वक्सेननरायणौ जलशयो नारायणः श्रीपतिर्दैत्यारिस्सपुराणयज्ञपु
रुषौ तार्क्ष्यध्वजोऽधोक्षजः ॥ १२८ ॥ गोविन्दषड्बिन्दुमुकुन्दकृष्णावै
कुण्ठपद्मेशयपद्मनाभाः । वृषाकपिर्माधववासुदेवौ विश्वम्भरः श्रीध
रविश्वरूपौ ॥ १२९ ॥ दामोदरश्शौरिस्सनातनो विभुः पीताम्बरो मा
र्जजिनौ कुमोदकः । त्रिविक्रमो जह्नुचतुर्भुजौ पुनर्वसुस्सतावर्त्तगदाग्र
जौ स्वभूः ॥ १३० ॥ मुञ्जकेशिवनमालिपुण्डरीकाक्षवभ्रुशशबिन्दु
वेधसः । पृश्निशृङ्गधरणीधरात्मभूः पाण्डवायनसुवर्णबिंदवः ॥ १३१ ॥

श्रीवत्साङ्को देवकीसूनुर्गोपेन्द्रो विष्टरश्रवाः । सोमसिन्धुर्जगन्नाथो गोबर्द्धन
धरोऽपि च ॥ १३२ ॥ यदुनाथो गदाशार्ङ्गचक्रश्रीवत्सशङ्खभृत् । मधुधे
नुकचानूरपूतनायमलार्जुनाः ॥ १३३ ॥ कालनेमिहयग्रीवशकटा
रिष्टकैटभाः । कंसः केशिमुरौ साल्वमैन्दद्विविदराहवः ॥ १३४ ॥ हिर
ण्यकशिपुर्बाणः कालियो नरको बलिः । शिशुपालश्चास्य वध्या वैनतेय
स्तु वाहनः ॥ १३५ ॥ शङ्खोऽस्य पाञ्चजन्योऽङ्कः श्रीवत्सोऽसिस्तु नन्द
कः । गदा कौमोदकी चापं शार्ङ्गं चक्रं सुदर्शनं ॥ १३६ ॥ मणिः स्यमन्त
को हस्ते भुजमध्ये तु कौस्तुभः । वसुदेवो भूकश्यपो दुन्दुरानकदुन्दुभिः
॥ १३७ ॥ रामो हली मुसलि सात्वतकामपालाः सङ्कर्षणः प्रियमधुर्बल
रौहिणेयौ । रुक्मिप्रलम्बयमुनाभिदनन्ततालल्ष्मैककुण्डलसितासित
रेवतीशाः ॥ १३८ ॥ बलदेवो बलभद्रो नीलवस्त्रोऽच्युताग्रजः । मुस
लं त्वस्य सौनन्दं हलं संवर्तकाह्वयम् ॥ १३९ ॥ लक्ष्मीः पद्मा रमा मा या
माता श्रीः कमलेन्दिरा । हरिप्रिया पद्मवासा क्षीरोदतनयापि च ॥ १४० ॥
मदनो जराभीरुरनङ्गमन्मथौ कमनः कलाकेलिरनन्यजोऽगजः । म
धुदीपमारौ मधुसारथिः स्मरो विषमायुधो दर्पककामहृच्छयाः ॥ १४१ ॥
प्रद्युम्नः श्रीनन्दनश्च कन्दर्पः पुष्पकेतनः । पुष्पाण्यस्येषुचापास्त्राण्यरीशं
बरसूर्प्यकौ ॥ १४२ ॥ केतनं मीनमकरौ बाणाः पञ्च रतिः प्रिया । मनः
शृङ्गारसङ्कल्पात्मानो योनिः सुहृन्मधुः ॥ १४३ ॥ सुतोऽनुरुद्धोऽस

खे॰ चं॰ २ षाङ्कुउपेशो ब्रह्मसूस्सुसः । गरुडः शाल्मल्यरुणावरजो विष्णुवाहनः
॥ १४४ ॥ सौपर्णेयो वैनतेयस्सुपर्णस्सर्पाराति र्वज्रजिद्वज्रतुण्डः ।
पक्षिस्वामी काश्यपिः स्वर्णकायस्ताक्ष्यः कामायुर्गरुत्मान्सुधाहृत्
॥ १४५ ॥ बुधस्तु सुगतो धर्मस्त्रिकालज्ञो धातुर्जिनः । बोधिसत्त्वं महाबो
धिरार्य्यश्शास्ता तथागतः ॥ १४६ ॥ पञ्चज्ञानो षडभिज्ञो दशार्हो दश
भूमिगः । चतुस्त्रिंशज्जातकज्ञो दशपारमिताधरः ॥ १४७ ॥ द्वाद
शाक्षो दशबलस्त्रिकायः श्रीघनाद्वयो । समन्तभद्रः संगुप्तो दयाकूर्चो
विनायकः ॥ १४८ ॥ मारलोकखजिद्धर्मराजो विज्ञानमातृकः । महा
मैत्रो मुनीन्द्रश्च बुद्धास्स्युस्सप्त ते त्वमी ॥ १४९ ॥ विपश्वी शिखी विश्वभूः क्र
कुच्छन्दश्च काञ्चनः । काश्यपस्तु सप्तमस्तु शाक्यसिंहोऽर्कबान्धवः ॥ १५० ॥
तथा राहुलसूस्सर्वार्थसिद्धो गौतमान्वयः । मायासुतो दनसुतो देवदत्ताग्र
जस्सुसः ॥ १५१ ॥ असुरादितिदनुजाः पातालौकः सुरारयः । पूर्वदेवा
श्शुक्रशिष्या विद्यादिव्यस्तु षोडश ॥ १५२ ॥ रोहिणी प्रज्ञप्ती वज्रशृङ्खला
कुलिशाङ्कुशाः । चक्रेश्वरी नरदत्ता काल्यथोऽसौ महापरा ॥ १५३ ॥ गौ
री गान्धारी सर्वास्त्रा महाज्वाला च मानवी । वैरोट्या छुप्ता मानसी महामा
नसिकेतिताः ॥ १५४ ॥ वाग्ब्राह्मी भारती गौर्गीर्वाणी भाषा सरस्वती ।
श्रुतदेवी वचनं तु व्याहारो भाषितं वचः ॥ १५५ ॥ सविशेषणमाख्यातं वा
क्यं स्याद्यान्तकं पदं । राद्धसिद्धकृतेभ्योन्त आप्तोक्तिस्समयागमौ ॥ १५६ ॥

आचाराङ्गं सूत्रकृतं स्थानाङ्गं समवाययुक् । पञ्चमं भगवत्यङ्गं ज्ञाताधर्म्म 
कथापि च ॥ १५७ ॥ उपासकाऽन्तकृदनुत्तरोपपातिकदशाः । प्रश्नव्या
करणं चैव विपाकश्रुतमेव च ॥ १५८ ॥ इत्येकादशसोपाङ्गान्यङ्गानि
द्वादशं पुनः । दृष्टिवादो द्वादशाङ्गी स्याद्गणिपिटकाह्वया ॥ १५९ ॥
परिकर्म्मसूत्रपूर्वानुयोगपूर्वगतचूलिकाः पञ्च । स्युर्दृष्टिवादभेदाः पू
र्वाणि चतुर्दशापि पूर्वगते ॥ १६० ॥ उत्पादपूर्वमग्रायणीयमथ वीर्य्यतः
प्रवादं स्यात् । अस्तिज्ञानात्सत्यात्तदात्मनः कर्म्मणश्च परं ॥ १६१ ॥ प्र
त्याख्यानं विद्याप्रवादकल्याणनामधेये च । प्राणावायं च क्रियाविशाल
मथ लोकविन्दुसारमिति ॥ १६२ ॥ स्वाध्यायः श्रुतिराम्नायश्छन्दो वेद
स्त्रयी पुनः । ऋग्यजुस्सामवेदास्स्युरथर्वा तु तदुद्धृतिः ॥ १६३ ॥ वेदा
न्तः स्यादुपनिषदोङ्कारप्रणवौ समौ । शिक्षा कल्पो व्याकरणं छन्दो
ज्योतिर्निरुक्तयः ॥ १६४ ॥ षडङ्गानि धर्म्मशास्त्रं स्यात्स्मृतिर्धर्म्मसंहि
ता । आन्वीक्षिकी तर्कविद्या मीमांसा तु विचारणा ॥ १६५ ॥ सर्गश्च
प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुवंशचरितं पुराणं पञ्चलक्षणं
॥ १६६ ॥ षडङ्गा वेदाश्चत्वारो मीमांसान्वीक्षिकी तथा । धर्म्मशास्त्रं पुराणं
च विद्या एताश्चतुर्दश ॥ १६७ ॥ सूत्रं सूचनकृद्भाष्यं सूत्रोक्तार्थ
प्रपञ्चकं । प्रस्तावस्तु प्रकरणं निरुक्तं पदभञ्जनं ॥ १६८ ॥ अवान्तर
प्रकरणविश्रामे शीघ्रपाठतः । आह्निकमधिकरणं त्वेकन्याय । अध्यायः

हे॰चं॰ २ नं ॥ १६९ ॥ उक्तानुक्तदुरुक्तार्थचिन्ताकारितुवार्त्तिकं । टीकानिर न्तरव्याख्यापञ्जिकापदभञ्जिका ॥ १७० ॥ निबन्धवृत्तीअन्वर्थेसंग्र हस्तुसमाहृतिः । परिशिष्टपद्धत्यादीन्यथानेनसमुन्नयेत् ॥ १७१ ॥ कारिकातुस्वल्पवृत्तौबह्वोरर्थस्यसूचनी । कल्पिकासर्वविद्यानि घण्टुर्नामसंग्रहः ॥ १७२ ॥ इतिहासःपुरावृत्तंप्रवह्लिकाप्रहेलि का । जनश्रुतिःकिंवदन्तीवार्त्तैतिह्यंपुरातनी ॥ १७३ ॥ वार्त्ताप्रवृ त्तिर्वृत्तान्तउदन्तोऽथाह्वयाऽभिधा । गोत्रसंज्ञानामधेयाख्याह्वाभिख्या श्चनाम च ॥ १७४ ॥ सम्बोधनमामन्त्रणमाह्वानन्त्वभि मन्त्रणं । आकारणंहवोहूतिस्संहूतिर्बहुभिःकृता ॥ १७५ ॥ उदाहारउपो द्घातउपन्यासश्चवाङ्मुखं । व्यवहारोविवादस्स्याच्छपथःशपनंश पः ॥ १७६ ॥ उत्तरन्तुप्रतिवचःप्रश्नःपृच्छाऽनुयोजनं । कथंक थिकताचाथदैवप्रश्नउपश्रुतिः ॥ १७७ ॥ चटुचाटुप्रियप्रायंप्रियस त्यन्तुसूनृतं । सत्यंसम्यक्समीचीनमृतंतथ्यंयथातथं ॥ १७८ ॥ य थास्थितञ्चसद्भूतेऽलीकेतुवितथानृते । अथक्लिष्टंसङ्कुलञ्चपर स्परपराहतं ॥ १७९ ॥ सान्त्वन्तुमधुरंग्राम्यमश्लीलंक्लिष्टमस्फु टं । लुप्तवर्णपदंग्रस्तमवाच्यंस्यादनक्षरं ॥ १८० ॥ अम्बूकृतंसथू त्कारंनिरस्तंत्वरयोदितं । आम्रेडितंद्विस्त्रिरुक्तमबद्धन्तुनिरर्थकं ॥ १८१ ॥ पृष्ठमांसादनंतद्यत्परोक्षेदोषकीर्त्तनं । मिथ्याऽभियोगोऽ

म्याख्यानंसङ्गतंहृदयङ्गमं ॥ १८२ ॥ परुषंनिष्ठुरंरुक्षंविक्रुष्टम छे॰ चं॰ २
थघोषणा । उच्चैर्घुष्टंवर्णनेडास्तवस्तोत्रंस्तुतिर्नुतिः ॥ १८३ ॥ श्ला
घाप्रशंसार्थवादस्त्वानुमिथ्याविकत्थनं । जनप्रवादःकौलीनंविगानंवचनी
यता ॥ १८४ ॥ स्याद्‌वर्णउपक्रोशोवादोनिःपर्य्यपात्परः । गर्हणा
धिक्‌क्रियानिन्दाकुत्साक्षेपोजुगुप्सनं ॥ १८५ ॥ आक्रोशाऽभीषङ्गाक्षेपाः
शापस्स्यात्रणामता । विरुद्धशंसनंगालिरशीर्म्मङ्गलशंसनं ॥ १८६ ॥
श्लोकःकीर्त्तिर्य्यशोऽभिख्यासमज्ञाह्वपतीपुनः । अभ्युभावाक्‌भ्युभाक
ल्याचर्च्चरीचर्भटीसमे ॥ १८७ ॥ यस्सनिन्दउपालम्भस्तत्रस्यात्परि
भाषणं । आपृच्छालापस्सम्भाषोऽनुलापस्स्यान्मुहुर्वचः ॥ १८८ ॥
अनर्थकन्तुप्रलापोविलापःपरिदेवनं । उल्लापःकाकुवागन्योन्योक्ति
स्संलापसंकथे ॥ १८९ ॥ विप्रलापोविरुद्धोक्तिरपलापस्तुनिह्नवः ।
सुप्रलापःसुवचनंसन्देशवाक्तुवाचिकं ॥ १९० ॥ आज्ञाशिष्टिर्नि
सङ्गिभ्योदेशोनियोगश्शासने । अववादोऽप्यथाहूयप्रेषणंप्रतिशासनं
॥ १९१ ॥ संवित्संधास्याद्युपायःसम्प्रत्याऽश्रयःपरश्रवः । अङ्गीकारोऽ
भ्युपगमःप्रतिज्ञागमस्सङ्गरः ॥ १९२ ॥ गीतवाद्यनृत्यत्रयंनाट्यंतौर्य्य
त्रिकञ्चतत् । सङ्गीतम्प्रेक्षणार्थेस्मिन्शास्त्रोक्तेनाट्यधर्म्मिका ॥ १९३ ॥
गीतज्ञानज्ञेयङ्गीतिर्गान्धर्वमथनर्त्तनं । नटनंनृत्यनृत्तञ्चलास्यना
ट्यञ्चताण्डवं ॥ १९४ ॥ मण्डलेनतुयन्नृत्यंस्त्रीणांहल्लीसकन्तुतत्

द्वि० दं० २ ।पानगोष्ठ्यामुच्चतालेरगोवीराजयन्तिका। १९५ ॥ स्यान्नाट्यस्यर
ङ्गस्य पूर्वरङ्ग उपक्रमः । अङ्गहारोऽङ्गविक्षेपो व्यञ्जकोऽभिनय
स्समौ ॥ १९६ ॥ स चतुर्विध आहार्यो रचितो भूषणादिना । वचसा
वाचिकोऽङ्गेनाङ्गिकस्सत्त्वेन सात्त्विकः ॥ १९७ ॥ स्यान्नाटकं प्रकरणम्भा
णः प्रहसनं डिमः । व्यायोगस्समवाकारो वीथ्यङ्कोहामृगा इति ॥ १९८ ॥
अभिनेयप्रकारास्स्युर्भाषाः षट्संस्कृतादिकाः । भारती सात्वती कैशिक्यार
भट्यौ च वृत्तयः ॥ १९९ ॥ वाद्यं वादित्रमातोद्यन्तूर्यन्तूरं स्मरध्वजः ।
ततं वीणाप्रभृतिकन्तालप्रभृतिकं घनं ॥ २०० ॥ वंशादिकन्तु सुषिरमा
नद्धं मुरजादिकं । वीणा पुनर्घोषवती विपञ्ची कण्ठकूणिका ॥ २०१ ॥
वल्लकी सा थ तन्त्रीभिस्सप्तभिः परिवादिनी । शिवस्य वीणा नालम्बी सर
स्वत्यास्तु कच्छपी ॥ २०२ ॥ नारदस्य तु महती गणानान्तु प्रभावती । वि
श्वावसोस्तु बृहती तुम्बुरोस्तु कलावती ॥ २०३ ॥ चाण्डालानान्तु कण्डो
लवीणा चाण्डालिका च सा । कायः कोलम्बकस्तस्यास्तुपनाहो निबन्ध
नं ॥ २०४ ॥ दण्डः पुनः प्रवालस्स्यात्ककुभस्तु प्रसेवकः । मूले वंशश्श
लाका स्यात्कलिका कूणिकापि च ॥ २०५ ॥ कालस्य क्रियया मानन्ताल
स्साम्यम्पुनर्लयः । द्रुतं विलम्बितं मध्यमोघस्तत्त्वं घनं क्रमात् ॥ २०६ ॥
मृदङ्गो मुरजः सोऽङ्क्यालिङ्ग्यूर्ध्वक इति त्रिधा । स्याद्यशः पटहो ढक्का भेरी
दुन्दुभिरानकः ॥ २०७ ॥ पटहोऽथ झल्लरीका स्यात्कोणो वीणादिवादनं

। शृङ्गारहास्यकरुणारौद्रवीरभयानकाः ॥ २०८ ॥ बीभत्साऽद्भुतशा
न्तास्त्ररसाभावाः पुनस्त्रिधा । स्थायिसात्त्विकसञ्चारिप्रभेदैस्स्याद्रतिः पु
नः ॥ २०९ ॥ रागोनुरागोऽनुरतिर्हासस्तुहसनं हसः । घर्घरो हासिका
हास्यं तत्राद्दृष्टरदेस्मितं ॥ २१० ॥ वक्रोष्ठिकाऽथहसितं किंचिद्दृष्टरदा
ङ्कुरे । किञ्चिच्छ्रुते विहसितमट्टहासो महीयसी ॥ २११ ॥ अतिहा
सस्त्वनुस्यूतेऽपहासोऽकारणात्कृते । सोत्प्रासेत्वाच्छुरितकं हसनं स्फु
रदोष्ठके ॥ २१२ ॥ शोकश्शुक्शोचनं खेदः क्रोधो मन्युः क्रुधा रुषा ।
क्रुत्कोपः प्रतिघो रोषो रुड्ढोत्साहः प्रगल्भता ॥ २१३ ॥ अभियोगोद्यमौ प्रा
ग्भिरुद्योगः कियदेतिका । अध्यवसाय ऊर्ज्जोऽथ वीर्य्यं सो निश्चयान्वितः
॥ २१४ ॥ भयं भीर्भीतिरातङ्क आशङ्का साध्वसं दरः । भिया च तत्त्वाहिभ
यं भूपतीनां स्वपक्षजं ॥ २१५ ॥ अदृष्टं वह्नितोयादेर्दृष्टं स्व पर चक्रजं
। भयङ्करं प्रतिभयम्भीमम्भीष्म भयानकम् ॥ २१६ ॥ भीषणम्भैर
वं घोरद्दारुणञ्च भयावहं । जुगुप्सा तु घृणाऽथ स्यादिस्मयश्चित्रमद्भुतं
॥ २१७ ॥ चोट्याश्चर्य्यं शमश्शान्तिश्शमथोपशमावपि । तृष्णाद्स्त्रयः
स्थायिनोऽमी रसानाङ्कारणं क्रमात् ॥ २१८ ॥ स्तम्भो जाड्यं स्वेदो घर्म्मनि
दाघौ पुलकः पुनः । रोमाञ्चः कण्टको रोमविकारो रोमहर्षणं ॥ २१९ ॥ रोमो
द्गम उद्धर्षणमुल्लसनकमित्यपि । स्वरभेदस्तु कल्लत्वं स्वरकम्पस्तु वेप
थुः ॥ २२० ॥ वैवर्ण्यं कालिका चाश्रु वाष्पो नेत्राम्बु रोदनं । अस्त्रमश्रु प्रस

हे॰ चं॰ २ यस्त्वचेष्टेत्यष्टसात्विकाः ॥ २२१ ॥ धृतिस्सन्तोषस्स्वास्थ्यंस्यादाध्या
नंस्मरणंस्मृतिः । मतिर्म्मनीषाबुद्धिर्धीर्द्धिषणाज्ञप्तिचेतने ॥ २२२ ॥ प्र
तिभाप्रतिपत्प्रज्ञाप्रेक्षाचिदुपलब्धयः । संवित्तिस्सेमुखीदृष्टिस्सामेधाधा
रणाक्षमा ॥ २२३ ॥ पराङ्गातत्त्वानुगामोक्षेज्ञानंविज्ञानमन्यतः । शु
श्रूषाश्रवणंचैवग्रहणन्धारणन्तथा ॥ २२४ ॥ ऊहोपोहोऽर्थविज्ञान
न्तत्वज्ञानञ्चधीगुणाः । व्रीडालज्जामन्दाक्षंह्रीस्त्रपासापत्रपान्यतः
॥ २२५ ॥ जाड्यंमौर्ख्यंविषादोऽवसादस्सादोविषण्णता । मदोमुन्मोहस
म्भेदोव्याधिस्त्वाधिरुजाकरः ॥ २२६ ॥ निद्राप्रमीलाशयनंसंवेशःस्वा
पसंलयाः । नन्दीमुखीस्वासहेतिस्तन्द्रासुप्तन्तुसाधिका ॥ २२७ ॥ औ
त्सुक्यंरणरणकोत्कण्ठेआयल्लकारती । हृल्लेखोत्कलिकेचाथावहित्था
कारगोपनं ॥ २२८ ॥ शङ्कानिष्ठोत्प्रेक्षणंस्याच्चापलंत्वनवस्थितिः ।
आलस्यन्तन्द्राकौसीद्यंहर्षश्चित्तप्रसन्नता ॥ २२९ ॥ ह्लादःप्रमोदःप्र
मदोमुत्प्रीत्यामोदसम्मदाः । आनन्दानन्दथूगर्वस्त्वहङ्कारोऽवलिप्त
ता ॥ २३० ॥ दर्प्पोऽभिमानोममतामानश्चित्तोन्नतिस्स्मयः । समिथो
ऽहमहमिकायान्तुसम्भावनात्मनि ॥ २३१ ॥ दर्प्पात्साहोपुरुषिका
स्यादहम्पूर्विकापुनः । अहम्पूर्वमहम्पूर्वमित्युग्रत्वनुचण्डता ॥ २३२ ॥
प्रबोधस्तुविनिद्रत्वंग्लानिस्तुबलदीनता । दैन्यंकार्प्पण्यंश्रमस्तुक्लमःक्ले
शःपरिश्रमः ॥ २३३ ॥ प्रयासायासव्यायामाउन्मादश्चित्तविप्लवः ।

मोहो मौढ्यं चिन्ता ध्यानममर्षः क्रोधसम्भवः ॥ २३४ ॥ गुणोजिगीषोत्साहवांस्त्रास स्त्वाकस्मिकं भयं । अपस्मारस्स्यादावेशो निर्वेदस्स्वावमाननं ॥ २३५ ॥ आवेगस्तुत्वरिस्तूर्णिस्संवेगस्सम्भ्रमः स्त्वरा । वितर्कस्स्यादुन्नयनं परामर्शो विमर्शनं ॥ २३६ ॥ अध्याहारस्तर्क ऊहोऽसूयाऽन्यगुणदूषणं । मृतिस्संस्थामृत्युकालौ परलोकगमोऽत्ययः ॥ २३७ ॥ पञ्चत्वं निधनं नाशो दीर्घनिद्रा निमीलनं । दिष्टान्तोऽस्तङ्कालधर्म्मोऽवसानं सा तु सर्वगा ॥ २३८ ॥ मरको मारिस्त्रयस्त्रिंशदमीस्युर्व्यभिचारिणः । स्युः कारणानि कार्य्याणि सहचारीणि यानि च ॥ २३९ ॥ इत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः । विभावा अनुभावास्त्वव्यभिचारिण एव च ॥ २४० ॥ व्यक्तस्स तैर्विभावाद्यैस्स्थायीभावो भवेद्रसः । पात्राणि नाट्येऽधिकृतास्तत्तद्वेषास्तु भूमिकाः ॥ २४१ ॥ शैलूषो भरतस्सर्ववेशी भरतपुत्रकः । धात्रीपुत्रो रङ्गजायाजीवो रङ्गावतारकः ॥ २४२ ॥ नटः कृशाश्वी शैलाली चारणस्तु कुशीलवः । भ्रूकुंसो भ्रूकुटिः कुंसो नटस्स्त्रीवेषधारकः ॥ २४३ ॥ वेश्याचार्य्यः पीठमर्द्दः सूत्रधारस्तु सूचकः । नान्दीनुपाठको नट्याः पार्श्वस्थः पारिपार्श्विकः ॥ २४४ ॥ वासन्तिकः केलिकिलो वैहासिको विदूषकः । प्रहासी प्रीतिदश्चाऽथ षिङ्गः पल्लविको विटः ॥ २४५ ॥ पितात्वावुक आवुत्त भावुकौ भगिनीपतौ । भावो विद्वान्युवराजः कुमारो भर्तृदारकः ॥ २४६ ॥ बालावासू र्म्मार्ष आर्य्यो देवो भट्टारको नृपः । राष्ट्रीयो नृपतेः

हे॰ चं॰ २ श्यालोदुहितात्मजा भर्तृदारिका ॥ २४७ ॥ देवी कृताभिषेकाऽन्याभट्टिनीगणि

कान्त्रुका । नीचा चेटी सखी हूतौ हण्डेहञ्जेहलाः क्रमात् ॥ २४८ ॥ अम्ब

ह्माण्यमबध्यौ त्वज्यायसीनुस्वसा त्विका । भर्तार्य्यपुत्रोमाता त्वाभदन्ता

सौगतादयः ॥ २४९ ॥ पूज्येतत्रभवानत्रभवाँश्चभगवानपि । पादा

भट्टारकोदेवप्रयोज्याःपूज्यनामतः ॥ २५० ॥

इत्याचार्य्यहेमचन्द्रविरचितायांनाममालायांद्वितीयःकाण्डः ॥

---

हे॰ चं॰ ३ मर्त्त्यःपञ्चजनोभूस्पृक्पुरुषःपूरुषोनरः । मनुष्योमानुषोनाविट्मनु

जोमानवःपुमान् ॥ १ ॥ बालःपाकःशिशुर्डिम्भःपोतश्शावस्तनन्धयः

। पृथुकोऽर्भोत्तानशय्यःक्षीरकण्ठःकुमारकः ॥ २ ॥ शिशुत्वंशैशवंबा

ल्यंवयस्यस्तरुणोयुवा । तारुण्यंयौवनंवृद्धःप्रवयास्स्थविरोजरन् ॥ ३ ॥

जरीजीर्णोयातयामोजीनोऽथविस्रसाजरा । वार्द्धकंस्थाविरंज्यायान्व

र्षीयान्दशमीत्यपि ॥ ४ ॥ विद्वान्सुधीकविविचक्षणलब्धवर्णाज्ञःप्रा

प्तरूपकृतिकृष्टयभिरूपधीराः । मेधाविकोविदविशारदसूरिदोष

ज्ञाःप्राज्ञपण्डितमनीषिबुधप्रबुद्धाः ॥ ५ ॥ व्यक्तोविपश्चित्संख्यावान्स

न्प्रवीणेतुशिक्षितः । निष्णातोनिपुणोदक्षकर्महस्तमुखाःकृतात् ॥ ६ ॥

कुशलश्चतुरोऽभिज्ञविज्ञवैज्ञानिकाःपटुः । छेकोविदग्धेप्रौढस्तुप्रग

ल्भःप्रतिभामुखः ॥ ७ ॥ कुशाग्रीयमतिःसूक्ष्मदर्शीतत्त्वालधीः

पुनः। प्रत्युत्पन्नमतिर्द्दूरदृक्पश्येद्दीर्घदर्शिनौ ॥ ८ ॥ हृदयालु 
स्सहृदयश्चिद्रूपोऽप्यथ संस्कृते। व्युत्पन्नप्रहतक्षुण्णा अन्तर्वाणिस्तु
शास्त्रवित् ॥ ९ ॥ वागीशो वाक्पतौ वाग्मी वाचोयुक्तिपटुः प्रवाक्। स
मुखो वावदूकोऽथ वदो वक्ता वदावदः ॥ १० ॥ स्याज्जल्पाकस्तु वाचालो
वाचाटो बहुगर्ह्यवाक्। यद्वदोऽनुत्तरे दुर्वाक् कद्वदे स्यादथाधरः ॥ ११ ॥
हीनवादिन्येडमूकानेडमूकौ ऽत्ववाक्श्रुतौ। रवणश्शब्दनस्तुल्यौ कुवाद
कुचरौ समौ ॥ १२ ॥ लोहलोऽस्फुटवाङ्मूकोऽवागसौम्यस्वरोऽस्वरः
। वेदिता विदुरो विन्दुर्वन्दारुस्त्वभिवादकः ॥ १३ ॥ आशंसुराशंसित
रिकद्वदस्त्वतिकुत्सितः । निराकरिष्णुः क्षिप्नुस्स्याद्विकासी तु विकस्व
रः ॥ १४ ॥ दुर्मुखे मुखराबद्धमुखौ शक्तः प्रियंवदः। दानशीलस्सवदा
न्यो वदन्योऽप्यथ बालिशः ॥ १५ ॥ मुग्धो मन्दो यथाजातिर्बालो मातृमु
खो जडः। मूर्खोऽमेधो विवर्णाज्ञौ वैधेयो मातृशासितः ॥ १६ ॥ देवानांप्रि
यजाल्मौ च दीर्घसूत्रश्चिरक्रियः। मन्दः क्रियासु कुण्ठस्स्यात्क्रियावा
न्कर्मसूद्यतः ॥ १७ ॥ कर्मक्षमोऽलंकर्मीणः कर्मशूरस्तु कर्मठः।
कर्मशीलः कार्मआयःशूलिकस्तीक्ष्णकर्मकृत् ॥ १८ ॥ सिंहसंहन
नः स्वङ्गः स्वतन्त्रो निरवग्रहः। यथाकामी स्वरुचिस्स्वच्छन्दः स्वैर्यपा
वृतः ॥ १९ ॥ यदृच्छा स्वैरिता स्वेच्छा नाथवान्निघ्नगृह्यकौ। तन्त्राय
त्तवशाधीनच्छन्दवन्तः परात्परे ॥ २० ॥ लक्ष्मीवाल्लक्ष्मणः श्रील इ

क्षे॰चं॰ ३ भ्यआढ्योधनीश्वरः । ऋद्धोविभूतिस्सम्पत्तिर्ल्लक्ष्मीःश्रीर्वृद्धिसम्पदः
॥ २१ ॥ दरिद्रोदुर्विधोदुस्थोदुर्गतोनिस्स्वकीकटौ । अकिञ्चनोऽधिप
स्त्वीशोनेतापरिवृढोऽधिभूः ॥ २२ ॥ पतीन्द्रस्वामिनाथार्य्याःप्रभुर्भर्त्ते
श्वरोविभुः । ईशितेनोनायकस्त्वनियोज्यःपरिचारकः ॥ २३ ॥ डिङ्ग
रःकिङ्करोभृत्यश्चेटोगोप्यःपराचितः । दासःप्रेष्यःपरिस्कन्दोभुजिष्य
परिकर्म्मिणौ ॥ २४ ॥ परान्नःपरपिण्डादःपरजातःपरैधितः । भृतको
भृतिभुग्वैतनिकःकर्म्मकरोऽपिच ॥ २५ ॥ सनिर्भृतिःकर्म्मकरोभृतिस्स्यान्नि
क्रियःपणः । कर्म्मण्यवितनंमूल्यंनिर्वेशोभरणंविधा ॥ २६ ॥ भर्म्मण्या
भर्म्मभृत्याचभोगस्तुगणिकाभृतिः । खलपूस्स्याद्बहुकरोभारवाहस्तुभा
रिकः ॥ २७ ॥ वार्त्तावहेवैवधिकोभारेविवधवीवधौ । काचःशिक्य
न्तदालम्बोभारयष्टिर्विहङ्गिका ॥ २८ ॥ शूरस्त्वारभटोवीरोविक्रान्त
स्त्वाथकातरः । दरितश्चकितोभीतोभीरुभीरुकभीलुकाः ॥ २९ ॥ विह्व
लव्याकुलौव्यग्रेकाश्चिश्रीकोभयद्रुते । उत्पिञ्जलसमुत्पिञ्जपिञ्जलाभृ
शमाकुले ॥ ३० ॥ महेच्छेगूढ्टोदारोदात्तोदीर्णमहाशयाः । महा
मनामहात्माचकृपणस्तुमितम्पचः ॥ ३१ ॥ कीनाशस्तदनक्षुद्रक
दर्य्यदृढमुष्टयः । किम्पचानोदयालुस्तुकृपालुःकरुणापरः ॥ ३२ ॥ सूर
तोऽथदयाशूकःकारुण्यंकरुणाघृणा । कृपाऽनुकम्पाऽनुक्रोशोहिंस्रे
शरारुघातुकौ ॥ ३३ ॥ व्यापादनंविशरणंप्रमयःप्रमापणन्निग्र

न्थनम्प्रमथनक्रदनन्निबर्हणं । निसूदनंविशसनंक्षणनम्प हे॰ चं॰ ३
रसनम्प्रोज्ज्ञासनंप्रशमनंप्रनिघाननंबधः ॥ ३४॥ प्रवासनोद्वासन
घातनिर्वासनानिसंज्ञप्तिनिस्तुम्भहिंसाः । निर्वापणालम्भनिसूद
नानिनिर्यातनोन्मन्थसमापनानि ॥ ३५॥ अपासनंवर्ज्जनमारपि
ञ्जानिकारणक्राथविशारणानि । स्युःकर्त्तनेकल्पनवर्द्धनेचच्छेदस्त्व
घातोद्यतआततायी ॥ ३६ ॥ सशीर्षच्छेदिकःशीर्षच्छेद्योयोबधम
र्हति । प्रमीतउपसम्पन्नःपरेतप्रेतसँस्थिताः ॥ ३७ ॥ नामालेख्य
यशःशेषोव्यापन्नोपगतोमृतः । परस्तुसदहेदानंतदर्थमौर्द्धदेहिकं
॥ ३८ ॥ मृतस्नानमपस्नानंनिवापःपितृतर्प्पणं । चितिचित्याचितास्तु
स्याऋजुस्तुप्राञ्जलोजसः ॥ ३९ ॥ दक्षिणेसरलोदारौशठस्तुनिकृ
तोऽनृजुः । क्रूरेनृशंसनिस्त्रिंशपापाधूर्त्तस्तुवञ्चकः ॥ ४० ॥ व्यंसकः
कुहकोदांडाजिनिकोमायिजालिकौ । मायातुशठताशाठ्यंकुसृतिर्निकृ
तिस्पृहा ॥ ४१ ॥ कपटङ्कैतवन्दम्भःकूटंछद्मोपधिश्छलं । व्यपदेशोभि
षंलक्ष्यंनिभंव्याजोऽथकुक्कुटिः ॥ ४२ ॥ कुहनादम्भचर्य्याचवञ्चनन्तुप्र
तारणं । व्यलीकमभिसन्धानंसाधौसभ्यार्थसज्जनाः ॥ ४३ ॥ द्वैधिक
द्रुक्पुरोभागीकर्णेजपस्तुदुर्ज्जनः । पिशुनःसूचकोनीचोद्विजिह्वोमत्स
रोखलः ॥ ४४ ॥ व्यसनार्त्तस्तूपरक्तश्चौरस्तुप्रतिरोधकः । दस्युःपाट
च्चरस्तेनस्तस्करःपारिपंथिकः ॥ ४५ ॥ परिमोषिपरास्कंदीकागारिक

हे० चं० ३ मलिम्लुचाः। यः पश्यतो हरेदर्थं स चौरः पश्यतोहरः ॥ ४६ ॥ चौर्य्यं
तु चौरिका स्तेयं लोप्त्रं त्वपहृतं धनं। यदृच्छिको दैवपरोऽथालस्यः शीत
कोऽलसः ॥ ४७ ॥ मन्दस्तुन्दपरिमृजोऽनुष्णोऽदक्षस्तु पेशलः।
पटूष्णोऽत्युत्थानचतुरस्त्वाऽथ तत्परः ॥ ४८ ॥ आसक्तः प्रवण
प्रह्वप्रसितास्तु परायणाः। दानेोदारस्थूललक्षदानशौण्डा बहुप्रदे
॥ ४९ ॥ दानमुत्सर्ज्जनं त्यागः प्रदेशनविसर्ज्जने। विहापितं वितरणं
स्पर्शनं प्रतिपादनं ॥ ५० ॥ विश्राणनं निर्व्वपणमपवर्ज्जनमंहतिः।
अर्थव्ययज्ञस्तु कुलोयाचकस्तु वनीयकः ॥ ५१ ॥ मार्ग्गणोऽर्थी याचनकस्त
र्क्कोऽथार्थनैषणा। अर्दना प्रणयो याच्ञा याचनाध्येषणा सनिः ॥ ५२ ॥
उत्पतिष्णुस्तूत्पतिताऽलङ्करिष्णुस्तु मण्डनः। भविष्णुर्भविता भूष्णु
स्समौ वर्त्तिष्णुवर्त्तिनौ ॥ ५३ ॥ विसृत्वरो विसृमरः प्रसारी च विसारि
णी। लज्जाशीलोऽपत्रपिष्णुः सहिष्णुः क्षमिता क्षमी ॥ ५४ ॥ तिति
क्षुस्सहनः क्षन्ता तितिक्षा सहनं क्षमा। ईर्ष्यालुः कुहनोऽक्षान्तिरीर्ष्या
क्रोधी तु रोषणः ॥ ५५ ॥ अमर्षणः क्रोधनश्च चण्डस्त्वत्यन्तकोपनः
। बुभुक्षितस्स्यात्क्षुधितो जिघत्सुरशनायितः ॥ ५६ ॥ बुभुक्षायाम
शनाया जिघत्सा रोचको रुचिः। पिपासुस्तृपितस्तृष्णक्तृष्णातर्षौ प
लासिका ॥ ५७ ॥ पिपासा तृट् तृषोदन्याधीतिः पानेऽथ शोषणं। रसा
दानं भक्षकस्तु घस्मरोऽद्मर आशिता ॥ ५८ ॥ भक्तमन्नं कूरमंधो भि

स्मादीदिविरोदनः। अशनंजीवनकञ्चयाजोवाजःप्रसादनं ॥ ५९ ॥
भिस्सटादग्धिकासर्वरसाग्र्यंमण्डमच्चतु। दधिजेमस्तुभक्तोत्थेनिःस्रावा
चाममासरः ॥ ६० ॥ श्राणाविलेपीतरलायवागूरुष्णिकापिच। सूप
स्स्यात्प्रहितंसूदोव्यञ्जननु घृतादिकं॥ ६१ ॥ तुल्यौतिलान्नेकृशरचि
त्रणवथपिष्टकः। पूपोऽपूपःपूलिकातुपोलिकापोलिपूपिकाः ॥ ६२ ॥ पू
पलाथेषत्पक्वेस्युरभ्यूषाऽभ्योषपोलयः। निष्ठानन्तुतेमनंस्यात्करम्भोद
धिसक्तवः ॥ ६३ ॥ घृतपूरोघृतवरःपिष्टपूरश्चघार्त्तिकः। चमसिःपि
ष्टवर्त्तिस्स्याद्वटकस्त्ववसेकिमः ॥ ६४ ॥ भृष्टायवाःपुनर्द्धानाधानाचूर्णन्तु
सक्तवः। पृथुकश्चिपुटस्तुल्यौलाजास्युःपुनरक्षताः ॥ ६५ ॥ गोधूम
चूर्णेसमितायवक्षोदेतुचिक्कसः। गुडइक्षुरसःक्वाथःशर्करातुसितोपला
॥ ६६ ॥ सिताचमधुधूलिस्तुखण्डस्तद्विकृतिःपुनः। मत्स्यण्डीफाणि
तंचापिरसालायान्तुमार्ज्जिता ॥ ६७ ॥ शिखरिण्यथयूषःयूषोरसोदुग्धं
तुसोमजं। गोरसःक्षीरमूधस्यंस्तन्यंपुंसवनंपयः ॥ ६८ ॥ पयस्यंघृ
तदध्यादिपेयूषोऽभिनवम्पयः। उभेक्षीरस्यविकृतौकिलाटीकूर्च्चिकापिच
॥ ६९ ॥ पायसम्परमान्नञ्चक्षीरेयीक्षीरजन्दधि। गोरसश्चतदघनंद्र
प्सम्पत्रलमित्यपि ॥ ७० ॥ घृतंहविष्यमाज्यञ्चहविराघारसर्प्पिषी
। ह्यो गोदोहोद्भवंहैयङ्गवीनंशरजम्पुनः ॥ ७१ ॥ दधिसारंतक्रसा
रंनवनीतन्नवोद्धृतं। दण्डाहतेकालसेयघोलारिष्टानिगोरसः ॥ ७२ ॥

है॰चं॰ ३ रसायनमथार्द्धोमूदश्विच्छूतंसमोदकं। तक्रम्पुनःपादजलंमथितंवा
रिवर्ज्जितं ॥ ७३ ॥ सार्प्पिष्कंदाधिकंसर्प्पिर्द्दधिभ्यांसँस्कृतंक्रमात्। ल
वणोदकाभ्यामुदकंलावणिकमुदश्विति ॥ ७४ ॥ औदश्वितमौदश्वित्कं
लवणेस्यात्तुलावणं। पैठरेस्थेउषासिद्धेप्रयस्तन्तुसुसँस्कृतं ॥ ७५ ॥
पक्वेश्राणंचसिद्धञ्च भृष्टंपक्वंविनाम्बुना। भृष्टामिषम्भटित्रंस्याच्छूलि
श्रूल्यटकञ्चतत् ॥ ७६ ॥ मूल्यंमूलाकृतंमांसंनिष्क्वाथोरसकस्समौ
। प्रणीतमुपसम्पन्नंस्निग्धेमसृणचिक्कणे ॥ ७७ ॥ पिच्छिलन्तुविजि
विलंविज्जलंविजलञ्चतत्। भावितन्तुवासितंस्यात्तुल्येसंमृष्टशोधिते
॥ ७८ ॥ काञ्चिककाञ्जिकन्धान्याम्लारनालेतुषोदकं। कुल्माषाभिषु
तावंतिसोमम्मुक्तानिकुञ्जलं ॥ ७९ ॥ चुक्रन्धातुघ्नमुन्नाहंरक्षोघ्नंकुण्ड
गोलकं। महारसंसुवीराम्लंसौवीरंप्रक्षणंपुनः ॥ ८० ॥ तैलंस्नेहोऽभ्य
ञ्जनञ्चवेषवारउपस्कारः। स्यात्तिन्तिडीकन्तुचुक्रंवृक्षाम्लञ्चाम्लवेतसे
॥ ८१ ॥ हरिद्राकाञ्चनीपीतानिशाह्वावरवर्णिनी। क्षवःक्षुताभिज
ननोराजिकाराजसर्षपः ॥ ८२ ॥ आसुरीकृष्णिकाचासौकुस्तुम्बुरु
तुधान्यकं। धन्याधन्याकधान्याकंमरीचंकृष्णमूषणम् ॥ ८३ ॥ कोलकं
वेल्लजन्धार्म्मपत्तनय्यँवनप्रियं। शुण्ठीमहौषधीविश्वानागरंविश्वभेष
जं ॥ ८४ ॥ वैदेहीपिप्पलीकृष्णोपकुल्यामागधीकणा। तन्मूलंग्र
न्थिकंसर्वग्रन्थिकञ्चटकाशिरः ॥ ८५ ॥ त्रिकटुत्र्यूषणंव्योषमजाजी

जीरकः कणा । सहस्रवेधिबाह्लीकञ्जतुकंहिङ्गुरामठं ॥ ८६ ॥ न्या हे॰चं॰ ३
द्र स्खदनङ्खादनमशनंनिघसोवल्भनमभ्यवहारः । जग्धिर्जक्षणाभक्ष
णलेहाः प्रत्यवसानंघसिराहारः ॥ ८७ ॥ प्सानावष्वाणविष्वा
णाभोजनञ्जेमनादने । चर्वणञ्चूर्णनन्द्रनैर्ज्जिह्वास्वादस्तुलेहनं
॥ ८८ ॥ कल्यवर्त्तःप्रातराशस्सग्धिस्तुसहभोजनं । ग्रासोगुडेरकः
पिण्डोगण्डोलःकवकोगुरुः ॥ ८९ ॥ गण्डोलःकवलस्तृप्तेत्वाघ्रात
स्सुहिताशिताः । तृप्तिस्सौहित्यमाघ्राणमथभुक्तसमुज्झिते ॥ ९० ॥
फेलापिण्डोलिफेलीचस्वोदरपूरकेपुनः । कुक्षिम्भरिरात्मंभरिरुदरम्भ
रिरप्यथ ॥ ९१ ॥ आद्यूनस्स्यादौदरिकोविजिगीषाविवर्ज्जिते । उद
रपिशाचस्सर्वान्नीनस्सर्वान्नभक्षकः ॥ ९२ ॥ शाष्कुलःपिशिताश्युन्म
दिष्णुस्तून्मादसंयुतः । गृध्नुस्तुगर्द्धनस्तृष्णग्लिप्सुर्लुब्धोऽभिलाषुकः
॥ ९३ ॥ लोलुपोलोलुभोलोभस्तृष्णालिप्सावशःस्पृहा । कांक्षाशंसा
गर्द्धवाञ्छाशेच्छेहातृणमनोरथाः ॥ ९४ ॥ कामोऽभिलाषोऽभिध्यातुपर
स्नेहोद्भवः पुनः । अविनीतोविनीतस्तुनिभृतःप्रसृतोऽपिच ॥ ९५ ॥
विधेयोविनयस्थस्स्यादाश्रवावचनेस्थितः । वश्यःप्रणेयोधृष्टस्तुवियातो
धृष्णुधृष्णजौ ॥ ९६ ॥ वीक्षापन्नाविलक्षोऽथाधृष्टेशालीनशारदौ ।
शुभंयुश्शुभसंयुक्तस्स्यादहंयुरहंकृतः ॥ ९७ ॥ कामुकःकमिताकम्रो
ऽनुकःकामयिताऽभिकः । कामनःकमनोभीकःपञ्च भद्रस्तुविप्लुतः

छं॰ चं॰ ३ ॥ ९८ ॥ व्यसनीहर्षमानस्तुप्रमनाहृष्टमानसः । विकुर्वाणोविचिना
स्तुदुरन्तर्विपरोमनाः ॥ ९९ ॥ मन्नेशैाण्डोत्कटक्षीवाउत्कस्त्वुत्सु
कउन्मनाः । उत्कण्ठितोऽभिशस्तेतुवाच्यक्षारितदूषिताः ॥ १०० ॥
गुणैः प्रतीतेत्वाहतलक्षणः कृतलक्षणः । निर्लक्षणस्तुपाण्डुरपृष्ठ
स्संकुसितोऽस्थिरे ॥१०१॥ तूष्णीशीलस्तुतूष्णीकोविवशोऽरिष्टदुष्टधीः
। बद्धोनिगडितोनद्धःकीलितोयन्त्रितस्सितः ॥ १०२ ॥ सन्दानित
स्सय्यँतस्स्यादुद्दानन्तुबन्धनं । मनोहतःप्रतिहतःप्रतिबद्धोहतस्सः
॥१०३॥ प्रतिक्षिप्तोऽधिक्षिप्तोऽवकृष्टनिष्कासितौसमौ । आत्तगन्धेऽ
भिभूतोऽपध्वस्तेन्यक्कृतधिक्कृतौ ॥ १०४ ॥ निकृतस्तुविप्रकृतोन्यक्कारस्तु
तिरस्क्रिया । परिभावोविप्रकारःपरापर्य्यभितोभवः ॥ १०५ ॥ अत्या
कारोनिकारस्स्वविप्रलब्धस्तुवञ्चितः । स्वप्नक्शयालुर्न्निद्रालुर्घूर्णितेप्रचला
यितः ॥१०६॥ निद्राणश्शयितस्सुप्तोजागरूकस्तुजागरी । जागर्य्या
स्याज्जागरणंजागरजागरोऽपिच ॥ १०७ ॥ विष्वगञ्चतिविष्वद्र्यङ्देव
द्र्यङ्देवमञ्चति । सहांचतितुसध्र्यङ्स्यात्तिर्य्यङ्पुनस्तिरोऽञ्चति ॥१०८॥
संशयालुस्संशयितागृहयालुर्ग्रहीतरि । पतयालुःपातुकस्स्यात्समौरोचिष्णुरो
चिनौ ॥ १०९ ॥ दक्षिणार्हस्तुदाक्षिण्योदाक्षिणीयोऽथदण्डितः । दापि
तस्साधितोर्च्यस्तुप्रतीक्ष्यःपूजितोऽर्चितः ॥ ११० ॥ नमस्यितोनमसितोऽप
चितावञ्चितोऽर्चितः । पूजार्हणासपर्य्यार्च्चाउपहारबलीसमौ ॥ १११ ॥

बिन्नवोविद्वलस्स्थूलःपीवापीनस्त्वपीवरः। चक्षुष्यस्सुभगोद्वेष्योऽक्षिग हे०चं० ३
तोऽथांसलोबली ॥ ११२ ॥ निर्दिग्धोमांसलस्त्वोपचितोऽथदुर्बलःकृशः।
क्षामःक्षीणस्तनुश्छातस्तलिनामांसपेलवाः ॥ ११३ ॥ पिचण्डिलो
बृहत्कुक्षिस्तुन्दितुन्दिकतुन्दिलाः। उदर्य्युदरिलेविखविखुविग्राअनासि
के ॥ ११४ ॥ नतनासिकेऽवनाटोऽवटीटोऽवभ्रटोऽपिच। खरणास्तु
खरणसोनःक्षुद्रःक्षुद्रनासिकः ॥ ११५ ॥ खुरणास्स्यात्खुरणस उ
न्नसस्तूग्रनासिकः। पङ्गुःश्रोणःखलतिस्तुखल्वाटऐन्द्रलुप्तिकः ॥ ११६ ॥
शिपिविष्टोबभ्रुरथःकाणःकननएकदृक्। पृश्निरल्पतनौकुब्जेगडुलः
ककरेकुणिः ॥ ११७ ॥ निखर्वःखर्वतःखर्वःखर्वशाखस्तुवामनः। अक
र्णएडोबधिरोदुश्चर्मातुद्विनग्नकः ॥ ११८ ॥ षण्डस्तुशिपिविष्टस्त्वखोड
खोरौतुखञ्जके। विकलाङ्गस्तुपोगण्डऊर्ध्वज्ञुरूर्ध्वजानुकः ॥ ११९ ॥ ऊ
र्ध्वज्ञस्त्वाप्यथपज्ञुप्रज्ञौविरलजानुके। संज्ञुसंज्ञौयुतजानौबलिनोबलिभस्स
मौ ॥ १२० ॥ उदग्रदोदन्तुरस्स्यात्प्रलंबाण्डस्तुपुष्करः। अन्धोगताक्ष
उपध्वउन्मुखोंधोमुखस्त्ववाङ् ॥ १२१ ॥ मुण्डस्तुमुण्डितःकेशीकेशवः
केशिकोऽपिच। बलिरःकेकरोवृद्धनाभौतुन्दिलतुन्दिभौ ॥ १२२ ॥ आ
मयाव्यपटुर्ग्लानोग्लास्तुर्विकृतआतुरः। व्याधितोऽभ्यमितोऽभ्या
न्तोदुरोगीतुदद्रुणः ॥ १२३ ॥ पामनःकच्छुरस्तुल्यौसातिसारोऽतिसा
रकी। वातकीवातरोगीस्याच्छ्लेष्मलःश्लेष्मणःकफी ॥ १२४ ॥ क्लिन्ननेत्रेचि

द्वि०कां० ३ ल्लचुल्लौपिल्लोऽथार्शोयुगर्शसः। मूर्छितेमूर्तमूर्छालौसिध्मलस्तुकिलासि
नि ॥ १२५ ॥ पित्तंमायुःकफःश्लेष्माबलाशस्स्नेहभूःखटः। रोगोरु
जारुगातङ्कोमांद्यंव्याधिरपाटवं ॥ १२६ ॥ आमआमयआकल्पमुप
तापोगदस्समाः। क्षयश्शोषोराजयक्ष्मायक्ष्माथक्षुतक्षुतंक्षवः ॥ १२७ ॥
कासस्तुक्षयथुःपामाखसःकच्छूर्विचर्चिका। कण्डूःकण्डूयनंखर्जूः
कण्डूयाऽथक्षतव्रणाः ॥ १२८ ॥ अरुरीर्म्मक्षणनुस्त्वरूढव्रणपदङ्क्षि
णः। स्त्रीपदंपादवल्मीकःपादस्फोटोविपादिका ॥ १२९ ॥ स्फोटकः
पिडकोगण्डःपृष्टग्रन्थिःपुनर्गडुः। चित्रंस्यात्पाण्डुरंकुष्ठङ्केशघ्नन्त्वि
न्द्रलुप्तकं ॥ १३० ॥ सिध्माकिलासन्त्वक्पुष्पंसिध्मङ्कोठस्तुमण्डलं।
गलगण्डोगण्डमालारोहिणीतुगलाङ्कुरः ॥ १३१ ॥ हिक्काहेक्काच
हृल्लासःप्रतिसायस्तुपीनसः। शोथस्तुश्वयथुश्शोफोदुर्नामार्शोगुदाङ्कु
रः ॥ १३२ ॥ छर्द्दिप्रच्छर्द्दिकाछर्द्दिर्वमथुर्वमनंवमिः। गुल्मस्स्यादु
दरग्रन्थिरुदावर्त्तोगुदग्रहः ॥ १३३ ॥ गतिर्नाडीव्रणोवृद्धिःकुरण्ड
स्त्वाण्डवर्द्धने। अश्मरीस्यान्मूत्रकृच्छ्रेप्रमेहोबहुमूत्रता ॥ १३४ ॥
अनाहस्तुनिबन्धस्स्याद्ग्रहणीरुक्प्रवाहिका। व्याधिप्रभेदाविद्रधिभग
न्दरज्वरादयः ॥ १३५ ॥ दोषज्ञस्तुभिषग्वैद्यआयुर्वेदीचिकित्सकः।
रोगहार्य्यगदङ्कारोभेषजन्त्वौषधं ॥ १३६ ॥ भैषज्यमगदोजायुस्त्रि
कित्सारुक्प्रतिक्रिया। उपचारोपचार्य्येचलङ्घनन्त्वपतर्पणं ॥ १३७ ॥

जाङ्गुलिको विषभिषक्स्वास्थ्यं वार्त्तमनामयं । सह्यारोग्यपटूल्लाघवार्त्त 
कल्यास्तु नीरुजि ॥ १३८ ॥ कुसृत्या विभवान्वेषी पार्श्वकः सन्धिजीव
कः । सत्कृत्यालंकृतां कन्यां यो ददाति स कूकुदः ॥ १३९ ॥ चपलश्चि
कुरो नीलीरागस्तु स्थिरसौहृदः । ततो हरिद्रारागोऽन्यः सान्द्रस्निग्धस्तु मे
दुरः ॥ १४० ॥ गेहेनर्दी गेहेशूरः पिण्डीशूरोऽग्रिमानधीः । स्वस्था
नस्थः परद्वेषी गोष्ठश्वोऽथापदि स्थितः ॥ १४१ ॥ आपन्नोऽथापद्वि
पत्तिर्विपत्स्निग्धस्तु वत्सलः । उपाध्याय्यागारिकौ तु कुटुम्बव्यापृते नरि
॥ १४२ ॥ जैवातृकस्तु दीर्घायुस्त्रासदायी तु शङ्करः । अभिपन्नः शरणार्थी
कारणिकः परीक्षकः ॥ १४३ ॥ समर्द्धुकस्तु वरदो व्रातीनास्सङ्घजी
विनः । सभ्याः सदस्याः पार्षद्याः सभास्तारः सभासदः ॥ १४४ ॥ सा
माजिकाः सभा संसत्समाजः परिषत्सदः । परिषत्समज्या गोष्ठ्यास्था
आस्थानं समितिर्घटा ॥ १४५ ॥ सांवत्सरो ज्यौतिषिको मौहूर्त्तिको निमि
त्तवित् । दैवज्ञगणकादेशिज्ञानिकार्तान्तिका अपि ॥ १४६ ॥ विप्रश्नि
कोक्षणिकौ च सैद्धान्तिकस्तु तान्त्रिकः । लेखकेऽक्षरपूर्वाः स्युस्त्वणजीव
कचञ्चवः ॥ १४७ ॥ वर्णिको लिपिकरश्चाक्षरन्यासे लीपिर्लिबिः ।
मषिधानं मषिकूपी मलिनाम्बु मषी मसी ॥ १४८ ॥ कुलिकस्तु कुलश्रेष्ठी स
भिको द्यूतकारकः । कितवो द्यूतकृद्धूर्तोऽक्षधूर्तश्चाक्षदेविनि ॥ १४९ ॥
दुरोदरं कैतवं स्याद्द्यूतमक्षवतीपणः । प्राशकः पाशकोऽक्षश्च देवनस्त्व

हे॰ चं॰ ३ शौग्लहः ॥ १५० ॥ अष्टापदं शारिफलं शारश्शारिस्तु खेलनी । परिणायस्तु शारीणान्नयनं स्यात्समन्ततः ॥ १५१ ॥ समाह्वयः प्राणिद्यूतं व्यालग्राह्याहितुण्डकः । स्यान्मनोजवसस्तातुल्यश्शास्ता तु देशकः ॥ १५२ ॥ सुकृती पुण्यवान्धन्यो मित्रयुर्मित्रवत्सलः । क्षेमङ्करोऽरिष्टतातिश्शिवतातिश्शिवङ्करः ॥ १५३ ॥ श्रद्धालुरास्तिकः श्राद्धो नास्तिकस्तद्विपर्य्यये । वैरङ्गिको विरागार्हो वीतदम्भस्त्वकल्कनः ॥ १५४ ॥ प्रणाय्योऽसंमतो न्वेष्टानुपद्यथ सहः क्षमः । शक्तः प्रभूष्णुर्भूतार्त्तस्त्वाविष्टश्शिथिलः श्लथः ॥ १५५ ॥ संवाहकोऽङ्गमर्दः स्यान्नष्टजीवस्तु निष्कलः । आसीन उपविष्टस्स्यादूर्द्ध ऊर्द्धन्दमस्स्थितः ॥ १५६ ॥ अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिकदेशिकौ । प्रवासी तद्गणो हारिः पाथेयं सम्बलं समे ॥ १५७ ॥ जङ्घालोऽतिजवो जङ्घाकरिको जाङ्घिको जवी । जवनस्त्वरिते वेगे रयो रंहस्तरस्यदः ॥ १५८ ॥ जवो वाजः प्रसरश्च मन्दगामी तु मन्थरः । कामंगाम्यनुगामीनोऽत्यन्तीनोऽत्यन्तगामिनि ॥ १५९ ॥ सहायोऽभिचरो नानुजीवी गामिचरप्लवाः । सेवकोऽथ सेवा भक्तिः परिचर्य्या प्रसादना ॥ १६० ॥ शुश्रूषाराधनोपास्तिवरिवस्यापरीष्टयः । उपचारः पदातिस्तु पत्तिः पद्गः पदातिकः ॥ १६१ ॥ पादातिकः पादचारी पदाजिपदिकावपि । सरः पुरोगतोऽग्रेभ्यः पुरस्तागमिगामिगाः ॥ १६२ ॥ पृष्ठोऽथावेशिकागन्तुप्राघूर्णोऽभ्यागतोऽतिथिः । प्राघू

र्थि केशाविशिकमातिथ्यंचातिथेय्यपि ॥ १६३ ॥ सूर्य्योढस्तुसम्प्राप्तो
बसूर्य्येऽस्तंगतेतिथिः। पाद्यार्थेपाद्यमर्घार्थमर्घ्यंवार्य्यथगौरवं ॥ १६४॥
अभ्युत्थानंव्यथ कस्तुस्यात्मर्म्मस्पृगरुन्तुदः । ग्रामेयकेतुग्रामीणग्राम्यौ
लोकोजनःप्रजाः । १६५॥ स्यादामुष्यायणोऽमुष्यपुत्रःप्रख्यातवप्तृकः
। कुल्यःकुलीनोऽभिजातःकौलेयकमहाकुलौ ॥ १६६ ॥ जात्योगोत्रनु
सन्तानोऽन्ववायोऽभिजनःकुलं । अन्वयोजननंवंशःस्त्रीनारीवनिताबधूः
॥ १६७ ॥ वशासीमन्तिनीवामावर्णिनीमहिलाऽबला । योषायोषिद्वि
शेषास्तुकान्ताभीरुर्नितम्बिनी ॥ १६८ ॥ प्रमदासुंदरीरमारमणील
लनाङ्गना । स्वगुणेनोपमानेनमनोज्ञादिपदेनच ॥ १६९ ॥ विशेषि
ताङ्गकर्म्मास्त्रीयथानरललोचना । अलसेक्षणामृगाक्षीमत्तेभगमना
पिच ॥ १७० ॥ वामश्रोणीसुस्मिताद्यास्तुमानलीलास्मरादयः । लीला
विलासोविच्छित्तिर्बिब्बोकःकिलकिञ्चितं ॥ १७१ ॥ मोट्टायितंकुट्टमितं
ललितंविहृतंतथा । विभ्रमश्चेत्यलङ्काराःस्त्रीणांस्वाभाविकादश
॥ १७२ ॥ प्रागल्भ्यौदार्य्यमाधुर्य्यशोभाधीरत्वकान्तयः। दीप्तिश्चायत्न
जाभावहावहेलास्त्वयोगजाः ॥ १७३ ॥ सापोपनाभामिनीस्याच्छेषा
मत्ताचवाशिनी । कन्याकनीकुमारीचगौरीतुनग्निकाऽरजाः ॥ १७४ ॥
मध्यमातुदृष्टरजास्तरुणीयुवतीस्मरी । तलुनीदिक्करीवर्य्यापतिम्ब
रास्वयम्वरा ॥ १७५ ॥ सुवासिनीवधूटीस्याच्चिरंट्यथसधर्म्मिणी ।

पत्नीसहचरीपाणिगृहीतीगृहिणीगृहाः ॥ १७६ ॥ दाराःक्षेत्रंबधूर्भा
र्य्याजनीजायापरिग्रहः । द्वितीयोढाकलत्रञ्चपुरंध्रीतुकुटुम्बिनी
॥ १७७ ॥ प्रजावतीभ्रातृजायासूनोःस्नुषाजनीबधूः । भ्रातृवर्गस्य
याजायायातरस्ताःपरस्परं ॥ १७८ ॥ वीरपत्नीवीरभार्य्याकुलस्त्री
कुलपालिका । प्रेयसीदयिताकान्ताप्राणेशावल्लभाप्रिया ॥ १७९ ॥ हृ
दयेशाप्राणसमाप्रेष्ठाप्रणयिनीचसा । प्रेयस्याद्याःपुंसिपत्यौभर्त्तासेक्ता प
निर्वरः ॥ १८० ॥ विवोढारमणोभीमात्ररूच्यो वरयिताधवः । जन्या
स्तुनस्यासुहृदोविवाहःपाणिपीडनं ॥ १८१ ॥ पाणिग्रहणमुद्वाहउ
पाद्यामयमावपि । दारकर्म्मपरिणयोजामाताद्दुहितुःपतिः ॥ १८२ ॥
उपपतिस्तुजारस्स्याद्भुजङ्गोगणिकापतिः । जम्पतीदम्पतीभार्य्यापत्
नीजायापतीसमाः ॥ १८३ ॥ योषितकंयुतयोर्द्वयंसुदायोहरणञ्चतत् ।
कृताऽभिषेकामहिषीभोगिन्योऽन्यान्पपत्नियः ॥ १८४ ॥ सैरंध्रीया
न्यवेश्मस्थास्वतन्त्राशिल्पजीविनी । असिक्न्यन्तःपुरःप्रेष्यादूतीसञ्चा
रिकेसमे ॥ १८५ ॥ प्राज्ञीप्रज्ञाप्रजानंत्यांप्राज्ञातुप्रज्ञयान्विता । स्यादा
भीरीमहाशूद्रीजातिपुंयोगयोस्समे ॥ १८६ ॥ पुंयुज्याचार्य्याचार्य्या
णीमातुलानीतुमातुली । उपाध्यायान्युपाध्यायीक्षत्रियाण्यर्य्याचशूद्र्यपि
॥ १८७ ॥ स्वतआचार्य्याशूद्राचक्षत्रियाक्षत्रियाण्यपि । उपाध्या
य्युपाध्यायास्यादर्य्यार्य्याण्यौपुनःसमे ॥ १८८ ॥ दिधिषूस्तुपुनर्भूर्द्वि

रूढास्यादिधिषुःपतिः। सतुद्विजोऽग्रेदिधिषुर्य्यस्यस्यात्सैवगेहिनी छं० चं० ३
॥ १८९ ॥ ज्येष्ठेऽनूढेपरिवेत्ताऽनुजोदारपरिग्रही। तस्यज्येष्ठःप
रिवित्तिर्जायातुपरिवेदिनी ॥ १९० ॥ वृषस्यन्तीकामुकीस्यादिच्छायुक्ता
तुकामुका। कृतसापत्निकाध्युढाधिविन्नाथपतिव्रता ॥ १९१ ॥ एकप
त्नीसुचरित्रासाध्वीसत्यवतीत्वरी। पुंश्चलीधर्षिणीबन्धक्यवनीताच
पांसुला ॥ १९२ ॥ स्वैरिणीकुलटायातियाप्रियंसाभिसारिका। वयस्या
लिस्सखीसध्रीच्यशिश्वीतुशिशुंविना ॥ १९३ ॥ पतिवत्नीजीवत्पति
र्विस्वस्ताविधवासमे। निर्वीरानिष्पतिसुताजीवन्तोकातुजीवसूः
॥ १९४ ॥ नश्यत्प्रसूतिकानन्दुस्सश्मश्रुर्नरमालिनी। कात्यायिनी
त्वर्द्धवृद्धाकाषायवसनाधवा ॥ १९५ ॥ श्रवणाभिक्षुकीमुण्डापोटातुस्त्री
न्रलक्षणा। साधारणस्त्रीगणिकावेश्यापण्यपणाङ्गना ॥ १९६ ॥ भु
जिष्यालञ्जिकारूपाजीवावारवधूःपुनः। सावारमुख्याथाचुन्दीकुट्टनीश्म
भलीसमाः ॥ १९७ ॥ पोटावोटाचचेटीचदासीचकुटहारिका। नग्ना
तुकोटवीवृद्धापलिक्न्यथरजस्वला ॥ १९८ ॥ पुष्पवत्यविरात्रेयीस्त्री
धर्म्मिणीमलिन्यवी। उदक्याऋतुमतीचपुष्पहीनातुनिष्कला
॥ १९९ ॥ एकातुसरजाःकन्यास्त्रीधर्म्मःपुष्पमार्त्तवं। रजस्तत्कालस्तु
ऋतुःसुरतंमोहनंरतं ॥ २०० ॥ संवेशनंसम्प्रयोगस्सम्भोगस्सुरहोर
तिः। ग्राम्यधर्म्मोनिधुवनंकामकेलिःपशुक्रिया ॥ २०१ ॥ व्यवायो

द्वि०कां० ३ मैथुनंस्त्रीपुंसोर्द्वन्द्वंमिथुनञ्चतत्। अन्तर्वत्नीगुर्विणीस्यादुद्भवत्युद
रिण्यपि ॥ २०२ ॥ आपन्नसत्त्वागुर्वीचश्रद्धालुर्दोहदान्विता । वि
जाताचप्रजाताचजातापत्याप्रसूतिका ॥ २०३ ॥ गर्भस्तुगर्भोभ्रूणोदोहद
लक्षणाश्वसः । गर्भाशयोजरायूल्वेकललोल्वेपुनस्समे ॥ २०४ ॥ दोह
दन्दौर्हृदंश्रद्धालालसासूतिमासितु । वैजनोविजननंप्रसवोनन्द
नःपुनः ॥ २०५ ॥ उद्वहोंगात्मजस्सूनुस्तनयोदारकस्सुतः । पुत्रेदुहि
तरिस्त्रीत्वेस्तोकापत्यप्रसूतयः ॥ २०६ ॥ तुक्प्रजोभयोर्भ्रात्रीयोभ्रातृ
व्योभ्रातुरात्मजे । स्वस्रीयोभागिनेयस्स्याज्जामेयःकुतपस्त्वसः ॥ २०७ ॥ न
प्तापौत्रःपुत्रपुत्रोदौहित्रोदुहितुस्सुतः । प्रतिनप्ताप्रपौत्रस्स्यात्तत्पुत्रस्तुप
रःपरः ॥ २०८ ॥ पैतृष्वसेयस्स्यात्पैतृष्वस्रीयस्स्यात्पितृष्वसुः । मातृष्व
स्रीयस्तुक्मातृष्वसुर्मातृष्वसेयवत् ॥ २०९ ॥ वैमातृजोवैमात्रेयोद्वै
मातुरोद्विमातृजः । सत्यास्तुतनयेसंमातुरवद्भद्रमातुरः ॥ २१० ॥
सौभागिनेयकानीयौसुभगाकन्ययोःसुतौ । पौनर्भवपारस्त्रैणेयौपुनर्भू
परस्त्रियोः ॥ २११ ॥ दास्योदासेरदासेयौनाटेरस्तुनटीसुतः । बन्धु
लोबान्धकिनेयःकौलटेरोऽसतीसुतः ॥ २१२ ॥सतुकौलटिनेयस्स्याद्यो
भिक्षुकसतीसुतः । द्वावप्येतौकौलटेयौक्षेत्रजोदेवरादिजः ॥ २१३ ॥
स्वजातेत्विरसोरस्यौमृतेभर्तरिजारजः । गोलकोऽथामृतेतुगडोभ्रातातु
स्यात्सहोदरः ॥ २१४ ॥ समानोदर्य्यसोदर्य्यसगर्भसहजाअपि ।

सोदरश्चसतुज्येष्ठस्स्यात्पित्र्यःपूर्वजोऽग्रजः ॥ २१५॥ जघन्यजेय
विष्ठस्स्यात्कनिष्ठोऽवरजोऽनुजः। सयवीयान्कनीयाँश्चपितृव्यश्याल हे०चं० ३
मातुलाः ॥ २१६ ॥ पितुःपत्न्याश्चमातुश्चभ्रातरौदेवृदेवरौ। देवाचावर
जेपत्युर्जामिस्तुभगिनीस्वसा ॥२१७॥ ननान्दातुस्वसापत्युर्ननन्दान
न्दिनीत्यपि। ज्येष्ठापत्न्यास्तुभगिनीज्येष्ठश्वश्रूःकुलीचसा ॥ २१८ ॥ क
निष्ठाशालिकाहालीयन्त्रिकाकेलिकुञ्चिका। केलिर्द्रवःपरीहासःक्रीड
लीलाचनर्म्मच ॥ २१९ ॥ देवनकूर्दनंखेलाललनंवर्करोऽपिच। ब
भ्राचजनकस्तातोबीजीजनयितापिता ॥ २२० ॥ पितामहस्तस्यपिता
तत्पिताप्रपितामहः। मातुर्मातामहाद्येवंमाताम्बाजननीप्रसूः ॥२२१॥
सवित्रीजनयित्रीचक्रमिलातुबहुप्रसूः। धात्रीतुस्यादुपमातावीरमा
तुवीरसूः ॥ २२२ ॥ श्वश्रूर्म्मातापतिपत्न्योःश्वशुरस्तुतयोःपिता।
पितरस्तुपितुर्वंश्यामातुर्म्मातामहाःकुले ॥ २२३ ॥ पितरौमातापितरौमा
तरपितरौपिताचमाताच। श्वश्रूश्वशुरौश्वशुरौपुत्रौपुत्रश्चदुहिताच
॥ २२४ ॥ भ्राताचभगिनीचापिभ्रातरावथबान्धवः। स्वोज्ञातिस्स्वजनो
बन्धुस्सगोत्रश्चनिजःपुनः ॥ २२५ ॥ आत्मीयस्स्वस्स्वकीयश्चसपिण्डा
स्तुसनाभयः। तृतीयाप्रकृतिःपण्डःषण्ढःक्लीबोनपुंसकं ॥ २२६ ॥
इन्द्रियायतनमङ्गविग्रहौक्षेत्रगात्रतनुभूघनास्तनूः। मूर्त्तिमत्कर
णकायमूर्त्तयोवेरसंहननदेहसञ्चराः ॥२२७॥ घनोबन्धःपुरंपिण्डं

वपुःपुद्गलवर्ष्मणी । कलेवरं शरीरेऽस्मिन्नजीवे कुणपं शवः ॥ २२८ ॥
मृतकं रुण्डकबन्धौ त्वपशीर्षे क्रियायुजि । वयांसि तु दशाः प्रायास्तामुद्र‍न्दे
ह्लक्षणं ॥ २२९ ॥ एकदेशे प्रतीकाङ्गावयवापघना अपि । उत्तमाङ्गं
शिरो मूर्द्धा मौलिर्मुस्तकमुण्डके ॥ २३० ॥ वराङ्गं करणत्राणं शीर्षं मस्त
कमित्यपि । तज्जाः केशास्तीर्थवाकाश्चिकुराः कुन्तलाः कचाः ॥ २३१ ॥
वालास्स्युस्तत्परः पाशो रचना भार उच्चयः । हस्तः पक्षः कलापश्च केश
भूयस्त्ववाचकाः ॥ २३२ ॥ अलकस्तु कर्कराल: खंखरश्चूर्णकुन्तलः ।
स तु भाले भ्रमरकः कुरुलो भ्रमरालकः ॥ २३३ ॥ धम्मिल्लः संयताः
केशाः केशवेशे कबर्य्यथ । वेणिः प्रवेणिश्शीर्षण्यशिरस्यौ विशदे कचे
॥ २३४ ॥ केशेषु वर्त्म सीमंतः पलितं पाण्डुरः कचः । चूडा केशी केशपा
शी शिखा शिखण्डिका समाः ॥ २३५ ॥ सा बालानां काकपक्षश्शिखा
ण्डकशिखासण्डकौ । तुण्डमास्यं मुखं वक्त्रं लपनं वदनानने ॥ २३६ ॥
भाले गोध्यलिकालीकललाटानि श्रुतौ श्रवः । शब्दाधिष्ठानपैंजूषम
हानादध्वनिग्रहाः ॥ २३७ ॥ कर्णः श्रोत्रं श्रवणञ्च वेष्टनं कर्णशष्
कुली । पालिस्तु कर्णलतिका शङ्खो भालःश्रवोंतरे ॥ २३८ ॥ चक्षु
रक्षीक्षणं नेत्रं नयनं दृष्टिरम्बकं । लोचनं दर्शनं दृक्तत्तारा तु कनीनिका
॥ २३९ ॥ वामन्तु नयनं सौम्यं भानवीयन्तु दक्षिणं । असौम्येऽक्षिण्य
नक्षिः स्यादीक्षणन्तु निशामनं ॥ २४० ॥ निभालनं निशमनं निध्यान

 

मवलोकनं । दर्शनंद्योतनंनिवर्णनंचाथार्द्धवीक्षणं ॥ २४१ ॥ अपाङ्गदर्शनंकाक्षः कटाक्षोऽक्षिविकूणितं । स्यादुन्मीलनमुन्मेषोनिमेषस्तुनिमीलनं ॥ २४२ ॥ अक्ष्णोर्बाह्यान्तावपाङ्गौभ्रूरुर्द्धे रोमपद्धतिः । सकोपभ्रूविकारेस्याद्भ्रुकुटिर्भ्रूकुटिः ॥ २४३ ॥ कूर्चंकूर्पंभ्रुवोर्मध्यंपक्ष्मस्यान्नेत्ररोमणि । गन्धज्ञानासिकानासाघ्राणंघोणाविकूणिका ॥ २४४ ॥ नक्रंनर्कुटकंसिङ्घिन्योष्ठोधरोरदच्छदः । दंतवस्त्रंचतत्प्रान्तौसृक्वणीअसिकन्त्वधः ॥ २४५ ॥ असिकाधःस्तुचिबुकंस्याद्गल्लःसृक्वणःपरः । गल्लात्परःकपोलस्तुपरोगण्डःकपोलतः ॥ २४६ ॥ ततोहनुश्श्मश्रुकूर्चमास्यलोमचमास्तुरी । दाढिकादंष्ट्रिकादाढदंष्ट्राजम्भोद्विजारदः ॥ २४७ ॥ रदनादशनादन्तार्दंशखादनमल्लकाः । राजदन्तौतुमध्यस्थावुपरिश्रेणिकौक्वचित् ॥ २४८ ॥ रसज्ञारसनाजिह्वालोलातालुतुकाकुदं । सुधास्रवाघंटिकाचलम्बिकागलशुण्डिका ॥ २४९ ॥ कन्धराधमनिग्रीवाशिरोधिस्तुशिरोधरा । सात्रिरेखाकम्बुग्रीवावटुर्घाटाकृकाटिका ॥ २५० ॥ कृकस्तुकन्धरामध्यंकृकपार्श्वौतुवीतनौ । ग्रीवाधमन्यौप्राग्नीलेपश्चान्मन्येकलम्बिके ॥ २५१ ॥ गलोनिगरणःकण्ठःकाकलकस्तुतन्मणिः । अंसोभुजशिरःस्कन्धोजत्रुसन्धिरुरोंसगः ॥ २५२ ॥ भुजोबाहुःप्रविष्टोदोर्वाहाथभुजकोटरः । दोर्मूलंखण्डिकःकक्षापार्श्वंस्यादेतयोरधः ॥ २५३ ॥ कफोणिस्तुभुजामध्यंकफणिःकर्फो

हे०चं०३ रश्चसः । अधस्तस्यामणिबन्धात्प्रकोष्ठस्यात्कलाचिका ॥ २५४ ॥
प्रगण्डः कूर्प्परस्यांसः पञ्चशाखश्शयस्तमाः । हस्तः पाणिः करस्यादौ
मणिबन्धोमणिश्वसः ॥ २५५ ॥ करभोस्मादाकनिष्ठं करशाखाङ्गुलीसमे
। अङ्गुलिश्चाङ्गुलेगुष्ठस्तर्ज्जनीतुप्रदेशिनी ॥ २५६ ॥ ज्येष्ठातुमध्य
मा मध्यासाविचीस्यादनामिका । कनीनिकातुकनिष्ठाऽवहस्तोहस्तपृष्ठ
तः ॥ २५७ ॥ कामाङ्कुशोमहाराजः करजोनखरोनखः । करश्मूको
भुजाकंटः पुनर्भवपुनर्नवौ ॥ २५८ ॥ प्रदेशिन्यादिभिस्सार्द्धमङ्गुष्ठे
वितते सति । प्रादेशतालगोकर्णवितस्तयोयथाक्रमं ॥ २५९ ॥ प्रसा
रिताङ्गुलौपाणौ चपेटः प्रतलस्तलः । प्रहस्तस्तालिकस्तालसिंहतालस्तु
तौयुतौ ॥ २६० ॥ सम्पिण्डिताङ्गुलिः पाणिर्म्मुष्टिर्मुस्तुर्मुचुट्यपि । संग्राह
स्साद्धमूष्टिस्स्यात्खटिकः कुब्जितः पुनः ॥ २६१ ॥ पाणिः प्रसृतः प्रसृ
तिस्तैयुतावंजलिः पुनः । प्रसृतेतुजलाधारेगण्डूषश्चुलुकश्चुलुः ॥ २६२ ॥
हस्तः प्रमाणिकोमध्येमध्यमाङ्गुलिकूर्प्परं । बद्धमुष्टिरसौरत्निररत्निर्निष्क
निष्ठिकः ॥ २६३ ॥ व्यामव्यायामन्यग्रोधास्तिर्य्यग्बाहूप्रसारितौ । ऊ
र्ध्वीकृतभुजापाणिर्न्नरमानन्तुपौरुषं ॥ २६४ ॥ दघ्नद्वयसमात्रास्तुजा
न्वादेस्तत्तदुन्मिते । रीढकः पृष्ठवंशस्स्यात्पृष्ठंन्तुचरमन्तनोः ॥ २६५ ॥
पूर्वभागस्तुपस्थौकः क्रोडस्त्वङ्ग इत्यपि । क्रोडोरोहृदयस्थानंवक्षो
वत्सोभुजान्तरं ॥ २६६ ॥ स्तनान्तरंहृत्हृदयंस्तनौकुचौपयोधरौ ॥

उरोजौ च चूचुकन्तु स्तनाग्रं शिखामुखाः ॥ २६७ ॥ तुन्दन्तुन्दिर्गर्भकुक्षी द्वि० कां० ३
पिचण्डो जठरोदरे । कालखण्डं कालखञ्जं कालेयं कालकं यकृत् ॥ २६८ ॥
दक्षिणे तिलकं क्लोम वामे तु रक्तफेनजः । पुप्फुसः स्यात् थप्ती वा गुल्मो ऽन्त्र
न्तु पुरीतति ॥ २६९ ॥ रोमावली रोमलता नाभिस्तु तुन्दकूपिका । ना
भेरधो मूत्रपुटं बस्तिर्मूत्राशयोऽपि च ॥ २७० ॥ मध्योऽवलग्नं विलग्नं
मध्यमोऽथ कटः कटिः । श्रोणिः कलत्रं कटीरं काञ्ची पदं ककुद्मती
॥ २७१ ॥ नितम्बारोहौ स्त्रीकट्याः पश्चाज्जघनमग्रतः । त्रिकं वंशाध
स्तत्पार्श्वे कूपकौ तु कुकुन्दरे ॥ २७२ ॥ पूतौ स्फिजौ कटिप्रोथौ वराङ्गं तु च्युति
र्बुलिः । भगोऽपत्यपथो योनिः स्मरान्मन्दिर कूपिके ॥ २७३ ॥ स्त्रीचि
ह्नमथ पुंश्चिह्नं मेहनं शेफ शेफसी । शिश्नं मेढ्रः कामलता लिङ्गं ध्वज
मप्यदः ॥ २७४ ॥ गुह्यं प्रजननोपस्थौ गुह्यमध्याङ्गुलो मणिः ।
सीवनी तदधः सूत्रं स्यादण्डं पेलं मण्डकः ॥ २७५ ॥ मुष्कोऽण्डकोषो
वृषणोऽपानं पायुर्गुदं च्युतिः । अधोमर्म्मेष्टद्वारं त्रिवली कवली अपि
॥ २७६ ॥ विटपं तु महाबीजं अन्तरं मुष्कवङ्क्षणं । ऊरुसन्धिर्वं
क्षणः स्यात् सक्थ्यूरुस्तस्य पर्व तु ॥ २७७ ॥ जानुर्नलकीलोऽष्ठीवान् पश्चा
द्भागोऽस्य मन्दिरः । कपाली त्वग्रिमा जङ्घा प्रसृता नलकिन्यपि ॥ २७८ ॥
अतिजङ्घा त्वग्रजङ्घा पिण्डिका तु पिचिण्डिका । गुल्फास्तु चरणग्रन्थिर्घुटि
को घुण्टको घुटः ॥ २७९ ॥ चरणः क्रमणः पादः पदङ्घ्रिः स्खलनः क्रमः

हे०चं० ३ ।पादमूलंगोहिरंस्यात्पार्ष्णिस्तु घुटयोरधः ॥ २८० ॥ पादाग्रंप्रपदं
क्षिप्रंत्वङ्गुष्ठाङ्गुलिमध्यतः । कूर्चंक्षिप्रस्योपर्य्यङ्घ्रिस्कन्धः कूर्चशि
रःसमे ॥ २८१ ॥ तलहृदयंतुतलंमध्येपादतलस्यतत् । तिलकःका
लकःपिप्लुर्ज्जडुलस्तिलकालकः ॥ २८२ ॥ रसासृङ्मांसमेदोऽस्थिम
ज्जशुक्राणिधातवः । सप्तैवदशवैकेषांरोमत्वक्स्नायुभिःसह ॥ २८३ ॥
रसआहारतेजोऽग्निसम्भवःषड्रसासवः । आद्योऽसृक्करोधातुर्ध
नमूलमहापरः ॥ २८४ ॥ रक्तंरुधिरमाग्नेयंविस्रंतेजोभवंरसात् । शो
णितंलोहितमसृक्वासिष्ठंप्राणदास्त्वरे ॥ २८५ ॥ क्षतजंमांसकार्य्य
स्रुंमांसंपललजाङ्गले । रक्तात्तेजोभवेक्रव्यंकाश्यपंतरसामिषे ॥ २८६ ॥
मेदस्कृत्पिसितंकीनंपलमेश्मास्तुतन्मता । वुक्का हृत्हृदयंवृक्काग्रस्तं
चतदग्रिमं ॥ २८७ ॥ मुष्कांवह्रूरमुत्तर्पंप्रयद्रूप्येपुनःसमे । मेदोऽ
स्थिकृद्वपामांसात्तेजोजेगौतमंवसा ॥ २८८ ॥ गोर्दंतुमस्तकस्नेहो
मस्तिष्कोमस्तुलुङ्गकः । अस्थिकृत्स्यंभारद्वाजंमेदस्तेजश्चमज्जकृत्
॥ २८९ ॥ मांसंपित्तम्वदयितंकर्कोटदेहधारकं । मेदोजंकीकसंसारंक
रोटिःशिरसोऽस्थनि ॥ २९० ॥ कपालकर्प्परौतुल्यौपृष्ठस्यास्थिकसेरु
का । शाखास्थनिस्यान्नलकंपार्श्वास्थिवंक्रिपर्शुके ॥ २९१ ॥ शरीरस्थि
करंकःस्यात्कङ्कालमस्थिपञ्जरः । मज्जातुकौशिकःशुक्रकरोऽस्थ्नःस्ने
हसम्भवौ ॥ २९२ ॥ शुक्रंरेतोबलंवीर्य्यंवीजंमज्जसमुद्भवं । आ

नन्द्प्रभवंपुंस्त्वमिन्द्रियंकिट्टवर्ज्जितं ॥ २९३ ॥ पौरुषंप्रधानधातु है॰चं॰ ३
र्व्वीर्यमरेतनूद्वं । त्वक्कुविश्यादनीक्त्तिस्चर्म्मा जिनमसृग्धरा ॥ २९४ ॥
बस्नसातुस्नसास्नायुर्नाड्योधमनयःशिराः । कण्डरातुमहास्नायुर्म्मलं
किट्टंतदक्षिजं ॥ २९५ ॥ दूषीकादूषिकाजैह्वं कुलिकंपिप्पिकापुनः । द
न्त्यंकार्णंतुपिञ्जूषःसिङ्घाणोघ्राणसम्भवं ॥ २९६ ॥ स्यणीकास्यन्दिनी
लालास्यास्रवःकफकूर्च्चिका । मूत्रंवस्तिमलंमेहःप्रस्रवोन्तजलंस्रवः
॥ २९७ ॥ पुरीषकातुलिङ्गमलंविड्विष्ठाऽवस्करःशकृत् । गूथंपुरी
षंशमलोच्चारौवर्च्चस्कवर्च्चसी ॥ २९८ ॥ वेषोनेपथ्यमाकल्पःपरिक
र्म्माङ्गसंस्क्रिया । उद्वर्त्तनमुत्सादनमङ्गरागोविलेपनं ॥ २९९ ॥ चा
र्च्चिक्यंसमालभनंचर्च्चास्यान्मण्डनंपुनः । प्रसाधनंप्रतिकर्म्ममार्ष्टिःस्या
न्मार्ज्जनामृजा ॥ ३०० ॥ वासयोगस्तुचूर्णःस्यात्पिष्टातःपटवासकः । ग
न्धमाल्यादिनायस्तुसँस्कारःसोऽधिवासनं ॥ ३०१ ॥ निर्वेशउपभोगः
स्यात्स्नानंसवनमाप्लवः । कर्प्पूरागुरुकक्कोलकस्तूरीचन्दनद्रवैः ॥ ३०२ ॥
स्याद्यक्षकर्द्दमोमिश्रैर्वर्त्तिर्गात्रानुलेपनी । चन्दनागुरुकस्तूरीकुङ्कुमै
स्तुचतुस्समं ॥ ३०३ ॥ अगुर्वगुरुराजार्हंलोहंकृमिजवंशिके । अना
र्य्यजंजोङ्गकञ्चमङ्गल्यामल्लिगन्धियत् ॥ ३०४ ॥ कालागुरुःकालतु
ण्डःश्रीखण्डोरोहणद्रुमः । गन्धसारोमलयजेचन्दनेहरिचन्दनं ॥ ३०५ ॥
तैलपर्णिकगोशीर्षपद्माङ्गरक्तचन्दनं । कुचन्दनंताम्रसारंरञ्जनंति

हे० चं० २ लपर्णिका ॥ २०६ ॥ जातिकोशंजातिफलंकर्पूरोहिमवालुका। घनसा
र:सिताऽभ्रश्चन्द्रोऽथमृगनाभिजा ॥ २०७ ॥ मृगनाभिर्मृगमदःक
स्तूरीगन्धधूल्यपि। काश्मीरजन्मघुसृणंवर्णंलोहितचन्दनं ॥ २०८ ॥
बाह्लीकंकुङ्कुमंवह्निशिखंकालेयजागुडे। शङ्कोचपिशुनंरक्तंधीरपीत
नदीपने ॥ २०९ ॥ लवङ्गन्देवकुसुमंश्रीसंज्ञमथकोलकं। कक्कोल
कंकोशफलंकालीयकंतुजायकं ॥ २१० ॥ यक्षधूपोबहुरूपःसालवे
ष्टोऽग्निवल्लभः। सर्ज्जमणिःसर्जरसोरालःसर्वरसोऽपिच ॥ २११ ॥
धूपोवृक्षात्कृत्रिमाश्चतुरुष्कःसिह्लपिण्डकौ। पायसस्तुयक्षधूपः
श्रीवासःसरलद्रवः ॥ २१२ ॥ स्थानात्स्थानान्तरंगच्छन्धूपोगन्धपि
शाचिका। स्यात्सकस्तुहस्तबिम्बमलङ्कारस्तुभूषणं ॥ २१३ ॥ परिष्का
रभरणोचचूडामणिःशिरोमणिः। नायकस्तरलोहारान्तर्मणिर्मुकुटंपुनः
॥ २१४ ॥ मौलिःकिरीटकोटीरमुष्णीषंपुष्पदामतु। मूर्द्धिमाल्यंमालास्र
कृस्त्वगर्भकःकेशमध्यगं ॥ २१५ ॥ प्रभ्रष्टकंशिखालम्बिपुरोन्यस्तंलला
मकं। तिर्य्यग्वक्षसिवैकक्ष्यंप्रालम्बमृजुलंबियत् ॥ २१६ ॥ सन्दर्भोर
चनागुम्फःश्रन्थनंग्रन्थनंसमाः। तिलकेतमालपत्रचित्रपुंड्रविशे
षकाः ॥ २१७ ॥ आपीडशेखरोत्तंसावतंसाःशिरसःस्रजि। उत्तंसक
र्णपूरेऽपिपत्रलेखातुपत्रतः ॥ २१८ ॥ भङ्गवल्लीललाङ्गुल्यःपत्रपा
श्या ललाटिका। बालपाश्यापारितथ्याकर्णिकाकर्णभूषणं ॥ २१९ ॥

ताडङ्कस्तु ताडपत्रं कुण्डलं कर्णवेष्टकम्। उत्क्षिप्तिका तु कर्णान्दुर्बालीका कर्णपृष्ठगा ॥ ३२० ॥ ग्रैवेयकं कण्ठभूषा लम्बमाना ललन्तिका । प्रालम्बिका तु ना हेम्नो रःसूत्रिका तु मौक्तिकैः ॥ ३२१ ॥ हारो मुक्तानः प्रालम्बस्रक्कलापावलीलता । देवच्छन्दः शतं साष्टं त्विन्द्रच्छन्दः सहस्रकं ॥ ३२२ ॥ तदर्द्धं विजयच्छन्दो हारस्त्वष्टोत्तरं शतं । अर्द्धं रश्मिकलापोऽस्य द्वादशत्वर्द्धमाणवः ॥ ३२३ ॥ द्विद्वादशार्द्धं गुच्छः स्यात्पञ्च हारफलं लताः । अर्द्धहारस्तु चतुःषष्टिर्गुच्छमाणवमन्दराः ॥ ३२४ ॥ अपि गोस्तनगोपुच्छावर्द्धमर्द्धं यथोत्तरं । इति हारयष्टिभेदादेकावल्येकयष्टिका ॥ ३२५ ॥ कण्ठिकाप्यथ नक्षत्रमाला तत्संख्यमौक्तिकैः । केयूरमङ्गदं बाहुभूषाथ करभूषणं ॥ ३२६ ॥ कटको वलयं पारिहार्य्यावापौ तु कंकणं । हस्तसूत्रं प्रतिसर ऊर्म्मिका त्वङ्गुलीयकं ॥ ३२७ ॥ साक्षराङ्गुलिमुद्रा सा कटिसूत्रं तु मेखला । कलापो रसना सारसनं काञ्ची च सप्तकी ॥ ३२८ ॥ सा शृङ्खलं पुंस्कट्यां स्यात्किङ्किणी क्षुद्रघण्टिका । नूपुरं तु तुलाकोटिः पादतः कटकाङ्गदे ॥ ३२९ ॥ मञ्जीरं हंसकं शिंजिन्यंशुकं वस्त्रमम्बरं । सिचयो वसनं चीरच्छादौ सिक्तोलवाससी ॥ ३३० ॥ पटप्रान्तोऽञ्चलोऽस्यान्तो वर्त्तिर्वस्तिस्तु नद्दशाः । पत्रोर्ण धौतकौशेयमुष्णीषो मूर्द्धवेष्टनं ॥ ३३१ ॥ तत्स्याद्‌द्गमनीयं यद्धौतयोर्वस्त्रयोर्य्युगं । त्वक्फलक्रिमिरोमभ्यस्सम्भवत्वाच्चतुर्विधं ॥ ३३२ ॥ क्षौमं कार्प्पासकौशेयरङ्कवादिविभेदतः । क्षौमं दुकूलं दुगूलं

द्वि॰कां॰ ३ स्यात्कार्पासन्तु बादरं ॥ ३३३ ॥ कौशेयं कृमिकोशोत्थं राङ्कवं मृगरोमजं ।
अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरं ॥ ३३४ ॥ नवं वासो ऽनाहतं स्या
त्तन्त्रकं निःप्रवाणि च । प्रच्छादनं प्रावरणं संव्यानं चोत्तरीयकं ॥ ३३५ ॥
द्वैकक्ष्ये प्रावरो वारबाणं गौवृहतिका पि च । वराशिः स्थूलशाटिः स्यात्परिधान
न्त्वधोंशुकं ॥ ३३६ ॥ अन्तरीयं निवसनमुपसंव्यानमित्यपि । तद्ग्र
न्थिरुच्चयो नीवी वरस्त्यर्द्धोरुकांशुकं ॥ ३३७ ॥ चण्डातकं चलनकं
चलनी त्विन रस्त्रियाः । चोलः कञ्चुलिका कूर्पासकाङ्गिका च कञ्चुके ॥
॥ ३३८ ॥ शाटी चोत्स्यथनी शारो हिमवातपहांशुके । कच्छा कच्छोटि
का कक्षा परिधानापराञ्चले ॥ ३३९ ॥ कक्षापटस्तु कौपीनं समौ न क्त
ककर्पटौ । निचोलः प्रच्छदपटो निचुलश्चोत्तरच्छदे ॥ ३४० ॥ उ
त्सवेषु सुहृद्भिर्यद्बलादाकृष्य गृह्यते । वस्त्रमाल्यादि तत्पूर्णपात्रं पूर्णा न
कं च तत् ॥ ३४१ ॥ तनुस्यादाप्रपदीनं व्याप्नोत्याप्रपदं हि यत् । चीवरं
भिक्षुसंघाटी जीर्णवस्त्रं पटच्चरं ॥ ३४२ ॥ शाणी गोणी छिद्रवस्त्रे जलार्द्रा
क्लिन्नवाससि । पर्य्यस्तिका परिकरः पर्य्यङ्कश्चावसक्थिका ॥ ३४३ ॥
कुथे वर्णी परिस्तोम प्रवेणी नवतास्तराः । अपटी काण्डपटः स्यात्प्रतिसी
रा जवन्यपि ॥ ३४४ ॥ तिरस्करिण्यथोल्लोचो वितानं कटको ऽपि च
। चन्द्रोदये स्थूलदूष्ये केणिका पटकुट्यपि ॥ ३४५ ॥ गुणालयनि
कायं स्यात्संस्तरस्रस्तरौ समौ । तल्पं शय्या शयनीयं शयनं तलिनं पतद्

॥ ३४६ ॥ मंचमञ्चकपर्य्यङ्कपल्यङ्काः खट्वया समाः । उच्छीर्षकमुपा 
द्धानं वर्हौपालेपतद्ग्रहः ॥ ३४७ ॥ प्रतिग्राहो मुकुरस्त्वमदर्शादर्शास्तु
दर्प्पणे । स्याद्वेत्रासनमासन्दी विष्टरः पीठमासनं ॥ ३४८ ॥ कशि
पुर्भोजनाच्छादे वीसीरं शयनाशने । लाक्षा द्रुमामयो राक्षा रङ्गमाता प
लंकषा ॥ ३४९ ॥ जतुस्त्वनघ्नाक्तमिजा यावालक्तो नु नद्रसः । अञ्ज
नं कज्जलं दीपः प्रदीपः कज्जलध्वजः ॥ ३५० ॥ स्नेहप्रियो गृहमणिर्दशा
कर्षो दशेन्धनः । व्यञ्जनं तालवृन्तं तद्धवित्रं मृगचर्म्मणा ॥ ३५१ ॥ आ
लावर्त्तं तु वस्त्रस्य कङ्कतः केशमार्जनं । प्रसाधनं स्यादथ बालक्रीडनके गुडो
गिरि ॥ ३५२ ॥ गिरियको गिरिगुडः समौकरण्डुकगेरण्डुकौ । राजा राट्
पृथिवीशक्रमध्यलोकेशभूभृतः ॥ ३५३ ॥ महीक्षित्पार्थिवो मूर्द्धाभि
षिक्तो भूप्रजानृपः । मध्यमो मण्डलाधीशः स सम्राट् शास्ति यो नृपान्
॥ ३५४ ॥ यस्सर्वमण्डलस्येशो राजसूयं च योऽयजत् । चक्रवर्त्ती
सार्वभौमस्ते तु द्वादश भारते ॥ ३५५ ॥ आर्षभिर्भरतस्तत्र सगरस्तु सु
मित्रभूः । मघवा वैजयिरथाश्वसेनन्टपनन्दनः ॥ ३५६ ॥ शनत्कु
मारोऽथ शान्तिकुन्थुररो जिना अपि । सुभूमस्तु कार्त्तवीर्यः पद्मः पद्मोत्तरात्म
जः ॥ ३५७ ॥ हरिषेणो हरिसुतो जयो विजयनन्दनः । ब्रह्मसूनु
र्ब्रह्मदत्तस्सर्वेऽपीक्ष्वाकुवंशजाः ॥ ३५८ ॥ प्रजापत्यस्त्रिपृष्ठोऽथ द्विपृष्ठो
ब्रह्मसम्भवः । स्वयम्भू रुद्रतनयस्सोमभूः पुरुषोत्तमः ॥ ३५९ ॥

हे०चं० ३ शैविःपुरुषसिंहोऽथमहासीरसमुद्भवः। स्यात्पुरुषपुण्डरीकादन्नो
ऽग्निसिंहनन्दनः ॥ ३६० ॥ नारायणोदासरथिःकृष्णस्तुवसुदेवभूः
। वासुदेवाअमीकृष्णनवशुक्लाबलास्त्वमी ॥ ३६१ ॥ अचलोविज
योभद्रःसुप्रभश्चसुदर्शनः। आनन्दोनन्दनःपद्मोरामोविष्णुद्विष
स्त्वमी ॥ ३६२ ॥ अश्वग्रीवस्तारकश्चमेरकोमधुरेवच। निशुम्भबलि
प्रह्लादलङ्केशमगधेश्वराः ॥ ३६३ ॥ जिनस्सहत्रिषष्टिःस्युःशलाकापु
रुषाअमी। आदिराजःपृथुर्वैण्योमान्धातायुवनाश्वजः ॥ ३६४ ॥ धुं
धुमारःकुवलाश्वोहरिश्चंद्रस्त्रिशङ्कुजः। पुरूरवाबौधऐलउर्वशीरम
णश्चसः ॥ ३६५ ॥ दौष्मन्तिर्भरतःसर्वदमःसकुन्तलात्मजः। है
हयस्तुकार्त्तवीर्य्योदोस्सहस्रभृदर्जुनः ॥ ३६६ ॥ कौशिल्यानन्दनो
दाशरथीरामोऽस्यतुप्रिया। वैदेहीमैथिलिसीताजानकीधरणीसुता
॥ ३६७ ॥ रामपुत्रौकुशलवावेकयोक्त्याकुशीलवौ। सौमित्रिर्लक्ष्मणो
वालीवालिरिन्द्रसुतश्चसः ॥ ३६८ ॥ आदित्यसूनुस्सुग्रीवोहनुमा
न्वज्रकङ्कटः। मारुतिःकेसरिसुतआञ्जनेयोऽर्ज्जुनध्वजः ॥ ३६९ ॥
पौलस्त्योरावणोरक्षोलङ्केशोदशकन्धरः। रावणिश्शक्रजिन्मेघ
नादोमन्दोदरीसुतः ॥ ३७० ॥ अजातशत्रुःशल्यारिर्धर्मपुत्रोयु
धिष्ठिरः। कंकोऽजमीढोभीमस्तुमरुत्पुत्रोवृकोदरः ॥ ३७१ ॥
किर्मीरकीचकबकहिडम्बानांनिसूदनः। अर्जुनःफाल्गुनःपार्थःसव्यसा

षीधनञ्जयः ॥ ३७२ ॥ राधावेधीकिरीटीन्द्रिर्जिष्णुःश्वेतहयोन हे॰ चं॰ ३
रः । बृहन्नलोगुडाकेशःसुभद्रेशःकपिध्वजः ॥ ३७२ ॥ बीभत्सुः
कर्णजित्तस्यगाण्डीवंगाण्डिवंधनुः । पाञ्चाली द्रौपदीकृष्णासैरंध्रीनित्य
यौवना ॥ ३७४ ॥ वेदिजायाज्ञसेनी च कर्णस्त्वंपाधिपोंगराट् । राधा
सुतोऽर्कतनयःकालपृष्ठन्तुतद्धनुः ॥ ३७५ ॥ श्रेणिकस्तुभंभासारो
हालस्स्यात्सातवाहनः । कुमारपालश्चौलुक्योराजर्षिःपरमार्हतः
॥ ३७६ ॥ मृतस्वमोक्ताधर्मात्मामारिव्यसनवारकः । राजबीजी
राजवंश्यौबीज्यवंश्यौतुवंशजे ॥ ३७७ ॥ स्वाम्यमात्यःसुहृत्कोशो
राष्ट्रदुर्गंबलानि च । राज्याङ्गानिप्रकृतयःपौराणांश्रेणयोऽपि च
॥ ३७८ ॥ तन्त्रंस्वराष्ट्रचिन्तास्यादावापस्त्वरिचिन्तनं । परिस्पन्दः
परिकरःपरिवारःपरिग्रहः ॥ ३७९ ॥ परिच्छदःपरिवर्हस्तन्त्रो
पकरणेअपि । राजशय्यामहाशय्याभद्रासनंन्नृपासनं ॥ ३८० ॥
सिंहासनन्तुतद्धैमञ्छत्रमातपवारणं । चामरंबालव्यजनंरोमगुच्छः
प्रकीर्णकं ॥ ३८१ ॥ स्थगीताम्बूलकरङ्कोभृङ्गारःकनकालुका । भ
द्रकुम्भःपूर्णकुम्भःपादपीठंपदासनं ॥ ३८२ ॥ अमात्यःसचिवोमन्त्री
धीसखस्सामवायिकः । नियोगीकर्मसचिवआयुक्तोव्यापृतश्चसः
॥ ३८३ ॥ द्रष्टातुव्यवहाराणांप्राड्विवाकोऽक्षदर्शकः । महामात्रः
प्रधानानिपुरोधास्तुपुरोहितः ॥ ३८४ ॥ सौवस्तिकोऽथद्वारस्थःक्षत्ता

स्याद्द्वारपालकः । दौवारिकः प्रतीहारो वेत्र्युत्सारकदण्डिनः ॥ ३८५ ॥
रश्मिवर्गोऽनीकस्थः स्यादध्यक्षाधिकृतौ समौ । पौरोगवः सूदाध्यक्षः
सूदस्त्वौदनिको गुणः ॥ ३८६ ॥ भक्षकारः सूपकारः सूपारालिकवल्ल
वाः । भौरिकः कनकाध्यक्षो रूप्याध्यक्षस्तु नैष्किकः ॥ ३८७ ॥ स्था
नाध्यक्षः स्थानिकः स्याच्छुल्काध्यक्षस्तु शौल्किकः । शुल्कस्तु घट्टादिदे
यं धर्माध्यक्षस्तु धार्मिकः ॥ ३८८ ॥ धर्माधिकरणी चाथ हट्टाध्यक्षो
ऽधिकर्मिकः । चतुरङ्गबलाध्यक्षः सेनानीर्दण्डनायकः ॥ ३८९ ॥
स्यायुक्तोऽधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु । स्यातामन्तःपुराध्यक्षोऽन्तर्वंशि
कावरोधिकौ ॥ ३९० ॥ शुद्धान्तः स्यादन्तःपुरमवरोधोऽवरोधनं । सौ
विदल्लाः कंचुकिनः स्थापत्याः सौविदाश्च ते ॥ ३९१ ॥ षण्ढे वर्षवरः
शत्रौ प्रतिपक्षः परो रिपुः । शात्रवः प्रत्यवस्थाता प्रत्यनीकोऽभियात्य
रः ॥ ३९२ ॥ दस्युः सपत्नोऽसहनो विपक्षो द्वेषी द्विषन्वैर्यहितो जि
घांसुः । दुर्हृत्परे पन्थकपन्थिनौ द्विट् प्रत्यर्थ्यमित्रावभिमात्यराती
॥ ३९३ ॥ वैरं विरोधो विद्वेषो वयस्यः सवयाः सुहृत् । स्निग्धः सह
चरो मित्रं सखा सख्यं तु सौहृदं ॥ ३९४ ॥ सौहार्दं साप्तपदीनं मैत्र्यज
र्याणि सङ्गतं । आनन्दनं त्वाप्रच्छन्नं स्यात्सभाजनमित्यपि ॥ ३९५ ॥
विषयानन्तरो राजा शत्रुर्मित्रमतः परं । उदासीनः परतरः पार्ष्णिग्रा
हस्तु पृष्ठतः ॥ ३९६ ॥ अनुवृत्तिस्त्वनुरोधो हैरिको गूढपूरुषः । प्रणि

धिर्य्यथार्हं वर्णोऽवसर्प्पो मन्त्रविच्चरः ॥ ३९७ ॥ वार्त्तायनः स्पश हे॰ चं॰ ३
श्चार आप्तप्रत्ययितौ समौ । सचिविस्यादृहपतिर्द्दूतस्सन्देशहारकः
॥ ३९८ ॥ सन्धिविग्रहयानान्यासनद्वैधाश्रया अपि । षड्गुणाः शक्त
यस्तिस्रः प्रभुत्वोत्साहमन्त्रजाः ॥ ३९९ ॥ सामदानभेददण्डा उपा
याः साम सान्त्वनं । उपजापः पुनर्भेदो दण्डं स्यात्साहसं दमः ॥ ४०० ॥ प्रा
भृतं ढौकनं लंचोत्कोचः कोशलिकामिषे । उपाच्चारः प्रदानन्दाहारोऽग्रा
ह्यायनेअपि ॥ ४०१ ॥ मायोपेक्षेन्द्रजालानि क्षुद्रोपाया इमे त्रयः ।
मृगयाक्षाः स्त्रियापानं वाक्पारुष्यार्थदूषणे ॥ ४०२ ॥ दण्डपारुष्यमि
त्येतद्धेयं व्यसनसप्तकं । पौरुषं विक्रमः शौर्य्यं शौटीर्य्यञ्च पराक्रमः
॥ ४०३ ॥ यत्कोषदण्डजं तेजः स प्रभावः प्रतापवत् । भियाधर्म्मा
र्थकामैस्त्वपरीक्षायातु सोपधा ॥ ४०४ ॥ तन्मन्त्राद्यषडक्षीणं यत्तृतीया
द्यगोचरः । रहस्यालोचनं मन्त्रो रहश्छन्नमुपह्वरं ॥ ४०५ ॥ विवि
क्तविजनैकान्तनिःशलाकानि केवलं । गुह्यो रहस्यं न्यायस्तु देशरूपं समं
जसं ॥ ४०६ ॥ कल्पाभ्रेषो नयो न्याय्यं तूचितं युक्तसाम्प्रते । लभ्यं प्रा
प्तं भजमानाभिनीतोपयिकानि च ॥ ४०७ ॥ प्रक्रिया त्वधिकारोऽथ मर्य्या
दाधारणास्थितिः । संस्थापराधस्तु मन्तुर्व्यलीकं विप्रियागसी ॥ ४०८ ॥
बलिः करो भागधेयो द्विपाद्यो द्विगुणो दमः । वाहिनी पृतना सेना बलं सैन्य
मनीकिनी ॥ ४०९ ॥ कटकं ध्वजिनी तन्त्रं दण्डोऽनीकं पताकिनी । व

क्ष०वं० ३ रूथिनीचमूश्चक्रंस्कन्धावारोऽस्यतुस्थितिः ॥ ४१० ॥ शिविरंरचनातु
स्याद्व्यूहोदण्डादिकोयुधि । प्रत्यासारोव्यूहपार्ष्णिस्सैन्यपृष्ठेप्रतिग्रहः
॥ ४११ ॥ एकेभैकरथात्र्यश्वापत्तिःपञ्चपदातिका । सेनासेनामुखं
गुल्मोवाहिनीपृतनाचमूः ॥ ४१२ ॥ अनिकिनीचपत्तेस्स्यादिभ्याद्यै
स्त्रिगुणैःक्रमात् । दशानिकिन्यक्षौहिणीसज्जनन्तूपरक्षणं ॥ ४१३ ॥
वैजयन्तीपुनःकेतुःपताकाकेतनंध्वजः । अस्योच्चूलावचूलाख्यामूर्द्धाधो
मुखकूर्च्चकौ ॥ ४१४ ॥ गजोवाजीरथःपत्तिःसेनाङ्गंस्याच्चतुर्विधं । यु
द्धार्थेचक्रवद्यानेशताङ्गस्स्यन्दनोरथः ॥ ४१५ ॥ सःक्रीडार्थःपुष्परथोदे
वार्थस्तुमरुद्रथः । योग्योरथोवैनयिकोऽध्वरथःपरियानिकः ॥ ४१६ ॥
कर्णीरथःप्रवहणंडयनंरथगर्भकः । अनस्तुशकटोऽथस्याद्गन्त्रीकं
बलिवाह्यकं ॥ ४१७ ॥ अथकाम्बलवास्त्राद्यास्तैस्तैःपरिवृतेरथे । स
पाण्डुकम्बलीयस्स्यात्संवीतःपाण्डुकम्बलैः ॥ ४१८ ॥ सतुद्वैपोवैयाघ्र
स्योवृतोद्वीपिचर्म्मणा । रथाङ्गंरथपादोऽरिश्चक्रन्धारापुनःप्रधिः
॥ ४१९ ॥ नेमिरक्षाग्रकीलेत्वण्यणीनाभिस्तुपिण्डिका । युगन्धरंकूब
रंस्याद्युगमीशान्तबन्धनं ॥ ४२० ॥ युगकीलकस्तुशम्याप्रासङ्गस्तुयुगा
न्तरं । अनुकर्षोदार्वधःस्यन्धुर्वीयानमुखंधूः ॥ ४२१ ॥ रथगुप्ति
स्तुवरूथोरथाङ्गानित्वपस्कराः । शिविकायाप्ययानेऽथदोलाप्रेंखादि
काभवेत् ॥ ४२२ ॥ वैनीतकंपरम्परवाहनंशिविकादिकं । यानंयुग्यंप

संबाह्यंवह्यंवाहनधोरणे ॥ ४२३ ॥ नियन्ताप्राजितायन्तासूतःसव्येष्ठृ 
सारथी । दक्षिणस्थप्रचेतारौक्षत्तारथकुटुम्बिकः ॥ ४२४ ॥ रथारोहि
णिरथीरथिकोरथिरोरधी । अश्वारोहेत्वश्ववारःसादीचतुरगीचसः
॥४२५॥ हस्त्यारोहेसादियंतृमहामात्रनिषादिनः । आधोरणाहस्तिप
कगजाजीवेभपालकाः ॥ ४२६ ॥ योद्धारस्तुभटायोधाःसेनारक्षास्तुसै
निकाः । सेनायांयेसमवेतास्तेसैन्यास्सैनिकाअपि ॥ ४२७ ॥ येसहस्रेण
योद्धारस्तेसाहस्रास्सहस्रिणः । छायाकरश्छत्रधारःपताकीवैजयन्ति
कः ॥ ४२८ ॥ परिधिस्थःपरिचरआमुक्तःप्रतिमुक्तवत् । अपिनद्धः
पिनद्धोऽथसन्नद्धोव्यूढकङ्कटः ॥ ४२९ ॥ दंशितोवर्म्मितःसज्यः
सन्नाहोवर्म्मकंकटः । जगरःकवचंदंशस्तनुत्रंमाय्युरश्छदः ॥ ४३० ॥
निचोलकस्स्यात्कूर्प्पासोवारबाणस्तुकंचुकः । सारसनन्त्वधिकाङ्गंहृदि
धार्य्यंसकंचुकैः ॥ ४३१ ॥ शिरस्त्राणेतुशीर्षण्यंशिरस्कंशीर्षकञ्चतत् ।
नागोदमुदरत्राणंजंघात्राणन्तुमत्कुणं ॥ ४३२ ॥ बाहुत्राणंबाहुलंस्या
ज्जालिकात्वङ्गरक्षिणी । जालप्रायायसीस्याद्दायुधीयःशस्त्रजीविनि
॥ ४३३ ॥ काण्डपृष्ठायुधिकौचतुल्यौप्रासिककौन्तिकौ । पारश्वधिकस्तु
पारश्वधःपरश्वधायुधः ॥ ४३४ ॥ स्युर्नैस्त्रिंशिकशाक्तीकयाष्टीकास्त
त्तदायुधाः । तूणीधनुर्भृद्धानुष्कःस्यात्काण्डीरस्तुकाण्डवान् ॥ ४३५ ॥
कृतहस्तःकृतपुंखःसुप्रयुक्तशरोहियः । शीघ्रवेधीलघुहस्तोऽपराद्धेषु

स्तु लक्ष्यतः ॥ ४३६ ॥ च्युतेषुर्दूरवेधी तु दूरपात्यायुधं पुनः । हेतिः प्रह
रणं शस्त्रमस्त्रं तच्चतुर्विधं ॥ ४३७ ॥ मुक्तं द्विधा पाणियन्त्रमुक्तं शक्तिश
रादिकं । अमुक्तं शस्त्रिकादि स्याद्धस्त्याद्यनु द्वयात्मकम् ॥ ४३८ ॥ ध
नुश्चापोऽस्त्रमिष्वासः कोदण्डं धन्व कार्मुकं । द्रूणासौ लस्तकोऽस्यान्तरग्रं
त्वर्त्तिरटन्यपि ॥ ४३९ ॥ मौर्वी जीवा गुणो गव्या सिञ्जा बाणासनं द्रुणा ।
शिञ्जिनी ज्या च गोधा तु तलं ज्याघातवारणं ॥ ४४० ॥ स्थानान्यालीढवै
शाखप्रत्यलीढानि मण्डलं । समपादञ्च वेध्यं तु लक्ष्यं लक्षं शरव्यकं ॥ ४४१ ॥
बाणःपृषत्कविशिखौ खगगार्द्धपक्षौ काण्डाशुगप्रदरसायकपत्रवाहाः ।
पत्रीष्वजिह्मगशिलीमुखकङ्कपत्ररोपाः कलम्बशरमार्गणचित्रपुङ्खाः
॥ ४४२ ॥ प्रक्ष्वेडनस्तु सर्वलोहो नाराच एषणस्त्वसः । निरस्तः प्रहितो बाणो
विषाक्ते दिग्धलिप्तकौ ॥ ४४३ ॥ बाणमुक्तिर्व्यवच्छेदो दीप्रवेगस्तु तीव्रता ।
क्षुरप्रतद्वलार्द्धेन्दुनाराचमुख्यास्तु तद्भिदः ॥ ४४४ ॥ पक्षो वाजस्तु पच्चाग्रां
न्यासः पुङ्खस्तु कर्त्तरी । तूणो निषङ्गस्तूणीर उपासङ्गः शराश्रयः ॥ ४४५ ॥
शरधिः कलापोऽप्यथ चन्द्रहासः करवालनिस्त्रिंशकृपाणखड्गाः । त
रवारिकौक्षेयकमण्डलाग्रा असिर्ऋष्टिरिष्टीत्सरुरस्य मुष्टिः ॥ ४४६ ॥
प्रत्याकारः परीवारः कोशः खड्गपिधानकं । अजरुं फलकं चर्म खेटकाव
रणस्फुरः ॥ ४४७ ॥ अस्य मुष्टिस्तु संग्राहः छूरी छूरी कृपाणिका । श
स्त्र्यसि धेनुपुत्र्यौ च पत्रपालस्तु सायता ॥ ४४८ ॥ दण्डो यष्टिस्तु लगुडः

स्यादीलीकरवालिका । भिन्दिपाले सृगः कुन्ते प्रासोऽथ द्रुघणो घनः ॥ ४४९ ॥ 
मुद्गरः स्यात्कुठारस्तु परशुः पर्शुपर्श्वधौ । परश्वधः स्वधितिश्च परिघः
परिघातनः ॥ ४५० ॥ सर्वला तोमरे शल्यं शंकौ शूले त्रिशीर्षकं । शक्ति
पट्टिशदुःस्फोटचक्राद्याः शस्त्रजातयः ॥ ४५१ ॥ खुरली तु श्रमो यो
ग्याभ्यासस्तद्भूः खलूरिका । सर्वाभिसारस्सर्वौघः सर्वसंहननास्समाः
॥ ४५२ ॥ लोहाभिसारो दशम्यां विधिर्नीराजनात्परः । प्रस्थानं गमनं व्र
ज्याभिनिर्याणं प्रयाणकं ॥ ४५३ ॥ याचाभिषेणनं तु स्यात्सेनयाभिग
मो रिपौ । स्यात्तु हृद्बलमासारः प्रचक्रं चलितं बलं ॥ ४५४ ॥ प्रसारस्तु प्र
सरणं तृणकाष्ठादिहेतवे । अभिक्रमो रणे यानमभीतस्यारिपून्प्रति ॥ ४५५ ॥
अभ्यमित्र्योऽभ्यमित्रीयोऽभ्यमित्रीणोऽपरिव्रजन् । स्यादुरस्वानुरसिलस्तू
र्जस्व्यूर्जस्वलौ समौ ॥ ४५६ ॥ सांयुगीनो रणे साधुर्जेता जिष्णुश्च जित्वरः
जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके ॥ ४५७ ॥ वैतालिका बोधकरा
अर्थिकाः सौखसुप्तिकाः । घाण्टिकाश्चाक्रिकास्सूतो बन्दी मङ्गलपाठकः
॥ ४५८ ॥ मागधो मगधः संसप्तका युद्धानिवर्त्तिनः । नग्नस्तुतिव्रत
स्तस्य ग्रन्थो भोगावली भवेत् ॥ ४५९ ॥ प्राणस्थामतरः पराक्रमबल
द्युम्नानि शौर्यौजसी शुष्मं शुष्म च शक्तिरूर्जसहसी युद्धं तु संख्यं कलिः ।
संग्रामाहवसम्प्रहारसमराजन्यं युदायोधनं संस्फोटः कलहो मृधं प्रहर
णं संपरायो विग्रहः ॥ ४६० ॥ द्वंद्वं समाघातसमाह्वयाभिसम्पातसंमर्दस

द्वि०चं० ३ मित्राघाताः । आस्कन्दनाजिप्रधनान्यनीकमभ्यागमस्त्वप्रविदारणो
च ॥ ४६१ ॥ समुदायस्समुदयोराटिःसमितिसङ्गरो । अभ्यामर्द्दस्सम्पराः
यस्समीकंसाम्परायिकं ॥ ४६२ ॥ आक्रन्दःसंयुगश्चाथनियुद्धंतज्जु जो
द्भवम् । पटहाडम्बरौतुल्यौतुमुलंरणसङ्कुलं ॥ ४६३ ॥ नासीरंत्व
ग्रयानंस्यादवमर्द्दस्तुपीडनं । प्रपातस्त्वभ्यवस्कन्दोधाट्यभ्यासादनंचसः
॥ ४६४ ॥ तद्रात्रंसौप्तिकंवीराशंसनंत्वाजिभीष्मभूः । नियुद्धभूरक्षवाटो
मोहोमूर्च्छाचकश्मलं ॥ ४६५ ॥ वृत्तेभाविनिवायुद्धेपानंस्याद्वीरपाणकं ।
पलायनमपयानंसंद्रावद्रवविद्रवाः ॥ ४६६ ॥ उपक्रमःसमुत्प्रेभ्योद्रावो
ऽथविजयोजयः । पराजयोरणेभङ्गोडमरेडिम्बविप्लवौ ॥ ४६७ ॥
वैरनिर्य्यातनंवैरशुद्धिर्वैरप्रतिक्रिया । बलात्कारस्तुप्रसभंहठोऽथ
स्खलितंछलं ॥ ४६८ ॥ पराभूतोभिभूतोजितोभग्नःपराजितः । प
लायितस्तुनष्टस्स्याद्गृहीतदिक्तिरोहितः ॥ ४६९ ॥ जिताहवोजितकामी
प्रस्कन्नःपतितस्समौ । चारःकारागुप्तौबन्द्यांग्राहकःप्रोपतोग्रहः ॥ ४७० ॥
चातुर्वर्ण्यंद्विजक्षत्रवैश्यशूद्रान्तेषांभिदः । ब्रह्मचारीगृहीवानप्रस्थोभि
क्षुरितिक्रमात् ॥ ४७१ ॥ चत्वारआश्रमास्तत्रवर्णीस्याद्ब्रह्मचारिणि ।
ज्येष्ठाश्रमीगृहमेधीगृहस्थःस्नातकोगृही ॥ ४७२ ॥ वैखानसोवानप्र
स्थोभिक्षुःसांन्यासिकोयतिः । कर्मन्दीरक्तवसनःपरिव्राजकतापसौ
॥ ४७३ ॥ पाराशरीपारीकांक्षीमस्करीपारिरक्षकः । स्थाण्डिलःस्थ

ण्डिलशायीयः शेतेस्थण्डिलेव्रतात् ॥ ४७४ ॥ तपःक्लेशसहो दांतः ६०चं०२
शान्तःश्रान्तोजितेन्द्रियः । अवदानंकर्मशुद्धंब्राह्मणस्तुत्रयीमुखः
॥ ४७५ ॥ भूदेवोवाडवोविप्रोद्व्यग्राभ्यांजातिजन्मजाः । वर्णज्येष्ठःसू
त्रकण्ठःषट्कर्मामुखसम्भवः ॥ ४७६ ॥ वेदगर्भःशमीगर्भःसावित्रोमै
त्रएतसः । वटुःपुनर्माणवकोभिक्षास्याद्ग्रासमात्रकं ॥ ४७७ ॥ उप
नायस्तूपनयोवटूकरणमानयः । अग्नींधनंत्वग्निकार्य्यमग्नीध्राचाग्नि
कारिका ॥ ४७८ ॥ पालाशोदण्डआषाढोव्रतेआम्भस्तुवैणवः । वैल्वः
सारस्वतोरौच्यःपैलवस्त्वौपरोधिकः ॥ ४७९ ॥ आश्वत्थस्तुजितनेमि
रौदुंबरस्तूदूखलः । जटासटावृषीपीठंकुण्डिकातुकमण्डलुः ॥ ४८० ॥
श्रोत्रियश्छान्दसोयष्टात्वादेष्टास्यान्मखेव्रती । याजकोजयमानश्चसोम
याजीतुदीक्षितः ॥ ४८१ ॥ ईज्याशीलोयायजूकोयज्वास्यादाहुतीब
लः । सोमपस्सोमपीथीस्यात्स्थपतिर्गीष्पतीष्टिवान् ॥ ४८२ ॥ सर्ववे
दास्तुसर्वस्वदक्षिणंयज्ञमिष्टवान् । यजुर्विदध्वर्युऋग्विद्धोतोद्गातातु
सामवित् ॥ ४८३ ॥ यज्ञोयागःसवस्सत्रंस्तोमोमन्युर्मखःक्रतुः । सं
स्तरःसप्ततंतुश्चवितानंबर्हिरध्वरः ॥ ४८४ ॥ अध्ययनंब्रह्मयज्ञस्स्या
द्देवयज्ञआहुतिः । होमोहोत्रंवषट्कारःपितृयज्ञस्तुतर्पणं ॥ ४८५ ॥
श्राद्धंपिण्डदानंचनृयज्ञोऽतिथिपूजनं । भूतयज्ञोबलिःपञ्चमहाय
ज्ञाभवंत्यमी ॥ ४८६ ॥ पौर्णमासश्चदर्शश्चयज्ञौपक्षान्तयोःपृथक् ।

30

है॰ चं॰ ३ सौमिकीदीक्षणीयेष्टिर्दीक्षान्तुव्रतसंग्रहः ॥ ४८७ ॥ वृत्तिस्तुगह्वनाद्
न्यावेदीभूमिःपरिष्कृता । स्थण्डिलंचत्वरंचान्यायूपःस्यादग्निकीलकः
॥ ४८८ ॥ चषालोयूपकटकोयूपकर्णौघृतावनौ । यूपाग्रभागेस्यात्तूर्म
रणिर्निर्मथदारुणि ॥ ४८९ ॥ स्युर्दक्षिणाह्वनीयगार्हपत्यास्त्रयो
ऽग्नयः । इदमग्निचयंत्रेताप्रणीतस्संस्कृतोऽनलः ॥ ४९० ॥ ऋक्सा
मिधेनीधाय्याचसमिदाधीयतेयया । समिदिंधनमेधश्चतर्प्पणैधांसिभ
स्मतु ॥ ४९१ ॥ स्याद्भूतिर्भसितंरक्षाक्षारःपात्रंस्रुवादिकं । स्रुवस्रुगध
षसोपभृज्जुहूःपुनस्त्वरा ॥ ४९२ ॥ ध्रुवातुसर्वसंज्ञार्थेयस्यामाज्यंनि
धीयते । योऽभिमन्त्र्यनिहन्येतसस्यात्पशुरुपाकृतः ॥ ४९३ ॥ पर
म्परकंशमनंप्रोक्षणंत्रवधोमखे । हिंसार्थकर्माभिचारस्स्याद्यज्ञार्हे
तुयज्ञियं ॥ ४९४ ॥ हविस्सान्नाय्यमामिक्षाशृतोष्णक्षीरजंदधि ।
क्षीरशरःपयस्याचतन्मस्तुनितुवाजिनं ॥ ४९५ ॥ हव्यंसुरेभ्योदात्त
व्यंपितृभ्यःकव्यमोदनं । आज्येतुदधिसंयुक्तेपृषदाज्यंपृषातकं ॥ ४९६ ॥
दध्नातुमधुसंयुक्तंमधुपर्क्कमहोदयः । हविर्वीतुहोमकुण्डंहव्यपाकः
पुनश्चरुः ॥ ४९७ ॥ अमृतंयज्ञशेषेस्याद्विघसोभुक्तशेषके । यज्ञान्तो
ऽवभृथःपूर्त्तंवाप्यादीष्टंमखक्रिया ॥ ४९८ ॥ इष्टापूर्त्तंतदुभयंबर्हिर्मु
ष्टिस्तुविष्टरः । अग्निहोत्र्यग्निविच्चाहिताग्निवथाग्निरक्षणं ॥ ४९९ ॥
अग्न्याधानमग्निहोत्रंदार्वीतुघृतलेखनी । होमाग्निस्तुमहाज्वालोमहाः

वीरःप्रवर्ग्यवान् ॥ ५०० ॥ होमधूमस्तुनिगणो होमभस्मतुवेष्टुतं । उ
पस्पर्शस्त्वाचमनंघारसेकौतुसेचनं ॥ ५०१ ॥ ब्रह्मासनंध्यानयोगा
सनेऽथब्रह्मवर्चसं । वृत्ताध्ययनर्द्धिःपाठेस्याद्ब्रह्मांजलिरञ्जलिः
॥ ५०२ ॥ पाठेतुमुखनिःक्रांताविप्रुषोब्रह्मबिन्दवः । साकल्यवचनंपा
रायणंकल्पेविधिक्रमौ ॥ ५०३ ॥ मूलेऽङ्गुष्ठस्यस्याद्ब्राह्मंतीर्थंकायंक
निष्ठयोः । पित्र्यंतर्ज्जन्यङ्गुष्ठान्तर्दैवंतत्त्वङ्गुलीमुखे ॥ ५०४ ॥ ब्रह्मत्वंतु
ब्रह्मभूयंब्रह्मसायुज्यमित्यपि । देवभूयादिकंतद्वद्थोपाकरणंश्रुतेः
॥ ५०५ ॥ सँस्कारपूर्वंग्रहणंस्यात्स्वाध्यायःपुनर्ज्जपः । ओपवस्तंतूप
वासःकाच्छ्रंसान्तपनादिकं ॥ ५०६ ॥ प्रायस्संन्यासनशनेनियमःपु
ण्यकंव्रतं । चरित्रंचरिताचारौचारित्रचरणेअपि ॥ ५०७ ॥ वृत्तंशीलं
चसर्वैनोध्वंसिजप्येऽघमर्षणं । समास्तुपादग्रहणाभिवादनोपसंग्र
हाः ॥ ५०८ ॥ उपवीतंयज्ञसूत्रंप्रोद्धृतेदक्षिणेकरे । प्राचीनावीतम
न्यस्मिन्निवीतंकण्ठलम्बितं ॥ ५०९ ॥ प्राचेतसस्तुवाल्मीकिर्वल्मीककु
शिनौकविः । मैत्रावरुणिवाल्मीकौवेदव्यासस्तुमाठरः ॥ ५१० ॥ द्वै
पायनःपाराशर्य्यःकानीनोवादरायणः । व्यासोऽस्याम्बासत्यवतीवास
वीगन्धकालिका ॥ ५११ ॥ योजनगन्धादासेयीशौलंकायनजीवसूः ।
जामदग्न्यस्तुरामस्याद्भार्गवोरेणुकासुतः ॥ ५१२ ॥ नारदस्तुदेव
ब्रह्मापिशुनःकलिकारकः । वशिष्ठोऽरुन्धतीजानिरक्षमालात्वरुँ

धनी ॥ ५१३ ॥ त्रिशंकुयाजीगाधेयो विश्वामित्रश्च कौशिकः । कुशारणि स्तु दुर्वासाः सतानन्दस्तु गौतमः ॥ ५१४ ॥ याज्ञवल्क्यो ब्रह्मरात्रिर्योगेशोऽप्यथ पाणिनौ । शालातुरीयदाक्षेयौ गोनर्दीये पतञ्जलिः ॥ ५१५ ॥ कात्यायनो वररुचिर्मेधाजिच्च पुनर्वसुः । अथ व्याडिर्विंध्यवासी नन्दिनीतनयश्च सः ॥ ५१६ ॥ स्फोटायनस्तु कक्षीवान्पालकाप्ये करेणुभूः । वात्स्यायने मल्लनागः कौटिल्यश्चणकात्मजः ॥ ५१७ ॥ द्रामिलः पक्षिलःस्वामी विष्णुगुप्तोऽङ्गुलश्च सः । क्षतव्रतोऽवकीर्णी स्याद्व्रात्यः संस्कारवर्ज्जितः ॥ ५१८ ॥ सिद्धान्नदानः कृष्णकर्म्मा ब्रह्मबन्धुर्द्विजोऽधमः । नष्टाग्निर्वीरहा जातिमात्रजीवी द्विजब्रुवः ॥ ५१९ ॥ धर्म्मध्वजी लिङ्गवृत्तिर्वेदहीनो निराकृतिः । वार्त्ताशी भोजनार्थं येगोत्रादि वदति स्वकं ॥ ५२० ॥ उच्छिष्टभोजनो देवनैवेद्यबलिभोजनः । अजपस्त्वसदध्येता शाखारण्डोऽन्यशाखकः ॥ ५२१ ॥ शस्त्राजीवः काण्डपृष्ठो गुरुहा नरकीलकः । मलो देवादिपूजायामश्राद्धोऽथ मलिम्लुचः ॥ ५२२ ॥ पञ्चयज्ञपरिभ्रष्टे निषिद्धे करुचिःखरुः । सुप्ते यस्मिन्नुदेत्यर्कोऽस्तमेति च क्रमेण तौ ॥ ५२३ ॥ अभ्युदिताभिनिर्मुक्तौ वीरेध्रोऽनुजुहोति यः । अग्निहोत्रत्वक्स्त्वाध्याज्ञापरो वीरोपजीविकः ॥ ५२४ ॥ वीरविद्गावको जुह्वन्धमेश्शूद्रसमाहितैः । स्याद्वादवाद्यार्हतः स्याच्छून्यवादी तु सौगतः ॥ ५२५ ॥ नैयायिकस्त्वक्षपादो योगः सांख्यस्तु कापिलः । वैशेषिकः स्यादौलूक्यो

बार्हस्पत्यस्तुनास्तिकः ॥ ५२६ ॥ चार्वाकोलौकायतिकश्चैतेषडपिता
ह्निकाः। क्षत्रन्तुक्षत्रियोराजाराजन्योबाहुसंभवः ॥ ५२७ ॥ आर्य्या
भूमिस्पृशोवैश्याऊरव्याऊरुजाविशः। वाणिज्यंपाशुपाल्यंचकर्षणं
चेतिवृत्तयः ॥ ५२८ ॥ आजीवोजीवनंवार्त्ताजीविकावृत्तिवेतने। उ
ञ्छोधान्यकणादानंकणिशाद्यर्जनंशिलं ॥ ५२९ ॥ ऋतंतद्द्वयमन्न
न्तंकृष्टिर्मृतन्तुयाचितं। अयाचितंस्यादमृतंसेवावृत्तिश्वजीविका ॥ ५३० ॥
सत्यानृतन्तुवाणिज्यंवणिज्यावाणिजोवणिक् ॥ क्रयविक्रयिकपण्या
जीवापणिकनैगमाः ॥ ५३१ ॥ वैदेहस्सार्थवाहश्चक्रायिकःक्रयिकः
क्रयी। क्रयहेतुविपूर्वास्तेमूल्येवस्त्वार्थविक्रयाः ॥ ५३२ ॥ मूलद्रव्यं
परिपणोनीवीलाभोऽधिकंफलं। परिदानंविनिमयोनैमेयःपरिवर्त्तनं
॥ ५३३ ॥ व्यतिहारःपरावर्त्तोवैमेयोविमयोऽपिच। निक्षेपोपनिधी
न्यासेप्रतिदानन्तदर्प्पणम् ॥ ५३४ ॥ क्रेतव्यमात्रकेक्रेयंक्रय्यंन्यस्तंक्र
याययत्। पणितव्यंतुविक्रेयंपण्यंसत्यापनंपुनः ॥ ५३५ ॥ सत्यङ्का
रस्सत्याकृतिस्तुल्योविपणाविक्रयौ। गणेयंगणेयंसङ्ख्येयंसङ्ख्यान्वैकादिका
भवेत् ॥ ५३६ ॥ यथोत्तरंदशगुणांभवेदेकादशास्तुतः। शतंसहस्र
मयुतंलक्षप्रयुतकोटयः ॥ ५३७ ॥ अर्बुदमब्जंखर्वञ्चनिखर्वञ्चमहाम्बु
जं। शङ्कुर्वार्द्धिरन्त्यंमध्यंपरार्द्धञ्चेतिनामतः ॥ ५३८ ॥ असंख्यं
द्वीपवार्द्धीादिपुञ्जलाल्माद्यनन्तकं। संयात्रिकःपोतवणिग्यानपात्रंवहि

वै॰ वं॰ ३ नकं ॥ ५३९ ॥ बोहित्थं वहनं पोतः पोतवाहो नियामकः । निर्यामः कर्णधारस्तु नाविको नौस्तु मङ्गिनी ॥ ५४० ॥ तरी तरिण्यौ वेडी च द्रोणी काष्ठाम्बुवाहिनी । नौकादण्डः क्षेपणी स्याद्गुणवृक्षस्तु कूपके ॥ ५४१ ॥ पोलिन्दास्त्वन्तरदण्डाः स्यान्मङ्गो मङ्गिनीशिरः । अभ्रिस्तु काष्ठकुद्दालः सेकपात्रन्तु सेचनं ॥ ५४२ ॥ केनिपातः कोटिपात्रमरित्रेऽथोडुपः प्लवः । कोलो भेलस्तरण्डस्स्यात्तरपण्यमातरः ॥ ५४३ ॥ वृद्ध्याजीवो द्वैगुणिको वार्द्धुषिकः कुसीदकः । वार्द्धुषिस्तु कुसीदार्थप्रयोगो वृद्धिजीवने ॥ ५४४ ॥ वृद्धिः कलान्तरमृणं तूद्धारः पर्युदञ्चनं । याच्ञाप्तं याचितकं परिवृत्या पमित्यकं ॥ ५४५ ॥ अधमर्णो ग्राहकः स्यादुत्तमर्णस्तु दायकः । प्रतिभूर्लग्नकः साक्षी स्थेय आधिस्तु बन्धके ॥ ५४६ ॥ तुलाद्यैर्यौतवं मानं द्रुवयं कुडवादिभिः । पाय्यं हस्तादिभिस्तत्र स्याद्गुञ्जा पञ्चमाषकः ॥ ५४७ ॥ ते तु षोडश कर्षोऽक्षः पलं कर्षचतुष्टयं । बिस्तस्तु वर्णो हेम्नोऽक्षे कुरु बिस्तस्तु तत्पले ॥ ५४८ ॥ तुला पलशतं तासां विंशत्या भार आचितः । शकटश्शाकटीनश्च शलाटसेदशाचितः ॥ ५४९ ॥ चतुर्भिः कुडवैः प्रस्थः प्रस्थैस्तु चतुर्भिराढकः । चतुर्भिराढकैर्द्रोणः खारी षोडशभिस्तु तैः ॥ ५५० ॥ चतुर्विंशत्यङ्गुलानां हस्तो दण्डस्तु ष्कर(?) । तत्सहस्रन्तु गव्यूतं क्रोशस्तौ द्वौ तु गोरुतं ॥ ५५१ ॥ गव्या गव्यूत गव्यूती चतुष्क्रोशन्तु योजनं । पांसु पाल्यं जीववृत्तिर्गोमान् गोमी गवीश्वरे ॥ ५५२ ॥ गो

पालोगोधुगाभीरगोपगोसंख्यवल्लवाः। गोविन्दोऽधिकृतोगोषुजाबाल 
स्त्वजजीविकः॥ ५५३॥ कुटुम्बीकर्षकःक्षेत्रीहलीकृषिककार्षिकौ।
कृषीवलोऽपिजित्यातुहलिःसीरस्तुलाङ्गलं॥ ५५४॥ गोदारणंहलमी
षासीतेतद्दण्डपद्धती। निरीषेकुटकंफालेकृषकःकुशिकंफलं॥ ५५५॥
दात्रंलवित्रंतन्मुष्टौवंटोमत्यंसमीकृतौ। गोदारणन्तुकुद्दालःखनित्रन्त्व
वदारणं॥ ५५६॥ प्रतोदस्तुप्रवयणंप्राजनंतोत्रतोदने। योत्रन्तुयो
क्त्रमाबद्धःकोटिशोलोष्टभेदनः॥ ५५७॥ मेधिर्मेथिःखलेवालीखलेगो
बन्धदार्वयत्। शूद्रान्त्यवर्णोवृषलःपद्यःपज्जोजघन्यजः॥ ५५८॥
तेतुमूर्द्धाभिषिक्ताद्यारथकृन्मिश्रजातयः। क्षत्रियायांद्विजान्मूर्द्धाभि
षिक्तोविट्स्त्रियांपुनः॥ ५५९॥ अम्बष्ठोऽथपारशवनिषादौशू
द्रयोषिति। क्षत्रान्माहिष्योवैश्यायामुग्रस्तुवृषलस्त्रियां॥ ५६०॥ वै
श्यात्तुकरणश्शूद्रात्त्वायोगवोविशःस्त्रियां। क्षत्रियायांपुनःक्षत्ताचाण्डा
लोब्राह्मणस्त्रियां॥ ५६१॥ वैश्यात्तुमागधःक्षत्र्यांवैदेहिकोद्विजस्त्रियां
। सूतस्तुक्षत्रियाज्जातइतिद्वादशतद्भिदः॥ ५६२॥ माहिष्येण
तुजातस्स्यात्करण्यांरथकारकः। कारुस्तुकारीप्रकृतिःशिल्पीश्रेणिस्तु
तद्गणे॥ ५६३॥ शिल्पंकलाभिज्ञानञ्चमालाकारस्तुमालिकः। पुष्पा
जीवीपुष्पलावीपुष्पाणामवचायिनि॥ ५६४॥ कल्पपालस्सुराजीवीशौ
ण्डिकोमण्डहारकः। वारिवासःपानवणिग्ध्वजोध्वज्यासुतीबलः

॥ ५६५ ॥ मद्यंमदिष्ठामदिरापरिस्रुताकाश्यंपरिस्रुन्मधुकापिशायनं । ग
न्धोत्तमाकल्यमिरापरिस्रुताकादम्बरीस्वादुरसाहलिप्रिया ॥ ५६६ ॥
शुण्डाहालाहारहूरंप्रसन्नावारुणीसुरा । मार्द्वीकंमदनादेवसृष्टाका
पिशमब्धिजा ॥ ५६७ ॥ मध्वासवेमाधवकोमैरेयेशीधुरासवः । ज
गलोमेदकोमद्यपङ्कःकिण्वन्तुनग्नहूः ॥ ५६८ ॥ नग्नहूर्मद्यवीज
ञ्चमद्यसन्धानमासुतिः । आसवोऽभिषवोमद्यमण्डकारोत्तमौसमौ
॥ ५६९ ॥ गल्वर्कस्तुचषकस्स्यात्सरकश्चानुतर्षणं । शुण्डापानंमद
स्थानंमधुवारामधुक्रमाः ॥ ५७० ॥ सपीतिःसहपानंस्यादापानंपानगो
ष्ठिका । उपदंशस्त्ववदंशश्चक्षणंमद्यपासनं ॥ ५७१ ॥ नाडिन्ध
मस्स्वर्णकारःकलादोमुष्टिकश्चसः । तैजसावर्त्तनीमूषाभस्त्राचर्म्मप्रसेवि
का ॥ ५७२ ॥ आस्फोटिनीवेधनिकाशाणस्तुनिकषःकषः । सन्दंशस्स्या
त्कंकमुखोभ्रमःकुन्दंचयन्त्रकं ॥ ५७३ ॥ वैकटिकोमणिकारःशौल्विक
स्ताम्रकुट्टकः । शांखिकःस्यात्काम्बविकस्तुन्नवायस्तुसौचिकः ॥ ५७४ ॥
कृपाणीकर्त्तरीकल्पन्यपिसूचीतुसेवनी । सूचीसूत्रंपिप्पलिकंतर्कुःक
र्त्तनसाधने ॥ ५७५ ॥ पिञ्जनंविहननञ्चतूलस्फोटनकार्मुकं । सेवनं
सीवनंस्यूतिस्तुल्यौस्यूतप्रसेवकौ ॥ ५७६ ॥ तन्तुवायःकुविन्दस्स्यात्त्रसर
स्सूत्रवेष्टनं । वाणिर्व्यूतिर्वाणदण्डोवेमासूत्राणितन्तवः ॥ ५७७ ॥ नि
र्णेजकस्तुरजकःपादुकाकृत्तुचर्म्मकृत् । उपानत्पादुकापादूपन्नद्धाप्र

दरश्रिका॥५७८॥प्राणाह्निताऽनुपदीनाच्चाबद्धानुपदं हिया। नद्धी वद्धी 
वरत्रास्याद्दारावर्म्मप्रभेदिका॥ ५७९ ॥ कुलालस्यात्कुम्भकारोदण्डभृच्च
क्रजीवकः। शाणाजीवश्शस्त्रमार्ज्जोभ्रमासक्तोऽसिधावकः ॥ ५८० ॥
धूसरस्त्वाक्रिकस्तैलीस्यान्तियंप्याकखलौसमौ। रथकृत्स्थपतिस्त्वष्टाका
ष्ठतड्क्षवर्द्धकी ॥ ५८१ ॥ ग्रामायत्तोग्रामतक्षःकौटतक्षोऽनधी
नकः। वृक्षभित्तक्षणीवासीक्रकचंकरपत्रकं ॥ ५८२ ॥ स उट्ट नोयत्र
काष्ठेकाष्ठंनिक्षिप्यतक्ष्यते। वृक्षादनोवृक्षभेदीटङ्कःपाषाणदारकः
॥ ५८३ ॥ व्योकारःकर्म्मारोलोहकारःकूटंत्वयोघनः। व्रश्चनःपत्र
परस्तुरीषीकातूलिकेषिका ॥ ५८४ ॥ तक्षकारःकांदबिकःकन्दुस्वेद
निकेसमे। रङ्गाजीवस्तैलकिकश्चित्रकृच्चाथतूलिका ॥ ५८५ ॥ कूचि
काचित्रमालेख्यंपलगण्डस्तुलेप्यकृत्। पुस्तंलेप्यादिकर्म्मस्यान्नापितस्त्व
ण्डिलःक्षुरी॥ ५८६ ॥ क्षूरमर्द्दीदिवाकीर्त्तिर्मुण्डकोंतावसाय्यपि। मु
ण्डनंभद्रकरणंवपनंपरिवापनं ॥ ५८७ ॥ क्षौरंनाराचीत्वेषण्यांदेवाजी
वस्तुदेवलः। मार्द्दङ्गिकोमौरजिकोवीणावादस्तुवैणिकः ॥ ५८८ ॥
वेणुध्मस्याद्वैणविकःपाणिघःपाणिवादकः। स्यात्प्रातिहारिकोमाया
जीवीमायातुशाम्बरी ॥ ५८९ ॥ इन्द्रजालन्तुकुहकंजालंकुसृतिरि
त्यपि। कौतूहलंतुकुतुकंकौतुकञ्चकुतूहलं ॥ ५९० ॥ व्याधोमृगबधा
जीवीलुब्धकोमृगयुस्तुसः। पापर्द्धिर्मृगयाखेटोमृगव्याच्छादनेअपि

हे॰ चं॰ ३ ॥ ५९१ ॥ जालिकस्तु वागुरिको वागुरा मृगजालिका । शुल्बं वराटकं रज्जुः शुल्बं तन्त्री वटी गुणः ॥ ५९२ ॥ धीवरो दाशकैवर्त्तौ बडिशं मत्स्यवेधनं । आनायस्तु मत्स्यजालं कुवेणी मत्स्यबन्धनी ॥ ५९३ ॥ जीवान्तकः शाकुनिको वैतंसिकस्तु शौनिकः । मांसिकः कौटिकश्चाथ सूना स्थानं वधस्य यत् ॥ ५९४ ॥ स्याद्बन्धनोपकरणं वीतंसो मृगपक्षिणाम् । पाशस्तु बन्धनग्रन्थिरवपातावटौ समौ ॥ ५९५ ॥ उन्माथः कूटयंत्रं स्यादिवर्णास्तु पृथग्जनः । इतरः प्राकृतो नीचः पामरो बर्बरश्च सः ॥ ५९६ ॥ चाण्डालेन्तावसाय्यन्तेवासि श्वपचपुक्कसाः । निषाद श्वपचमातङ्गदिवाकीर्त्तिजनङ्गमाः ॥ ५९७ ॥ पुलिन्दा नाहला निष्ट्याः शबरा वरुटा भटाः । माला भिल्लाः किराताश्च सर्वेऽपि म्लेच्छजातयः ॥ ५९८ ॥

इत्याचार्य्यहेमचन्द्रविरचितायामभिधानचिन्तामणौ नाममालायां मर्त्यकाण्डस्तृतीयः

---

हे॰ चं॰ ४ भूर्भूमिः पृथिवी पृथ्वी वसुधोर्वी वसुन्धरा । धात्री धरित्री धरणी विश्वा विश्वम्भरा धरा ॥ १ ॥ क्षितिः क्षोणी क्षमाऽनन्ता ज्या कुर्वसुमती मही । गौर्गोत्रा भूतधात्री क्ष्मा गन्धमाताऽचलाऽवनिः ॥ २ ॥ सर्वंसहा रत्नगर्भा जगती मेदिनी रसा । काश्यपी पर्वताधाराः स्थिरेला रत्नवीजसूः ॥ ३ ॥ विपुला सागरनेमिः स्युर्नेमी मेखलाम्बराः । द्यावापृथिव्यौ तु द्यावाभूमी द्यावाक्षे

मेऽपि ॥ ४ ॥ दिवस्पृथिव्यौ रोदस्यौ रोदसी रोदसी च ते । उर्वरा सर्वस 
स्याभूरिरिणं पुनरूषरं ॥ ५ ॥ स्थलं स्थली मरुर्धन्वा क्षेत्राद्यप्रहतं खिलं
। मृन्मृत्तिका साक्षारा रोधा मृत्सा मृत्स्ना च सा शुभा ॥ ६ ॥ रुमा लवणखानि
स्स्यात्सामुद्रं लवणं हि यत् । तदक्षीवं वशिरस्सैन्धवन्तु नदीभवं ॥ ७ ॥
माणिमन्थं शीतशिवं रौमकन्तु रुमाभवं । वसुकं वसूकं तत्स्याद्विडपाक्ये तु
कृत्रिमे ॥ ८ ॥ सौवर्च्चलेऽक्षं रुचकं दुर्गन्धं शूलनाशनं । कृष्णे तु तत्र
तिलकं यवक्षारो यवाग्रजः ॥ ९ ॥ यवनालजः पाक्यस्स्यात्पाचनकस्तु
टङ्कणः । मालतीतीरजो लोहश्लेषणो रसशोधनः ॥ १० ॥ समास्तु
स्वर्ज्जिकाक्षारकापोतस्सुखवर्च्चिकाः । स्वर्जिस्तु स्वर्ज्जिका सुघ्नी योग
वाही सुवर्च्चिका ॥ ११ ॥ भरतान्यैरवतानि विदेहाश्च कुरून्विना । व
र्षाणि कर्म्मभूम्यस्स्युश्शेषाणि फलभूमयः ॥ १२ ॥ वर्षं वर्षधराङ्कं विषय
स्तूपवर्त्तनं । देशो जनपदो नीवृद्राष्ट्रं निर्गश्च मण्डलं ॥ १३ ॥ आर्य्या
वर्त्तो जन्मभूमिर्जिनचक्र्यर्द्धचक्रिणां । पुण्यभूराचारवेदी मध्यं विं
ध्यहिमागयोः ॥ १४ ॥ गङ्गायमुनयोर्म्मध्यमन्तर्वेदिस्समस्थली । ब्र
ह्मावर्त्तस्सरस्वत्या दृषद्वत्याश्च मध्यतः ॥ १५ ॥ ब्रह्मवेदिः कुरुक्षेत्रे
पञ्चरामह्रदान्तरं । धर्म्मक्षेत्रं कुरुक्षेत्रं द्वादशयोजनावधि ॥ १६ ॥
हिमवद्विंध्ययोर्म्मध्यं यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्य
देशस्स मध्यमः ॥ १७ ॥ देशः प्राग्दक्षिणः प्राच्यो नदीं यावच्छर

द्वि०चं० ४ वर्त्तो । पश्चिमोत्तरस्तूदीच्यःप्रत्यन्तोम्लेच्छमण्डलं ॥ १८ ॥ पाण्डूदक्
कृष्णतोभूमिःपाण्डूदक्कृष्णमृत्तिके । जाङ्गलोनिर्जलोऽनूपोम्बुमान्कच्छस्त
तद्विधः ॥ १९ ॥ कुमुद्वान्कुमुदावासेवेतस्वान्भूरिवेतसः । नडप्रायो
नडकीयोनड्वांश्चनड्वलश्चसः ॥ २० ॥ शाद्वलःशादहरितेदेशोनद्यम्बु
जीवनः । स्यान्नदीमातृकोदेवमातृकोवृष्टिजीवनः ॥ २१ ॥ प्राग्ज्योतिषाः
कामरूपामालवास्युरवन्तयः । त्रैपुरास्तुडाहलास्युश्चैद्यास्तेचेदयश्च
ते ॥ २२ ॥ वङ्गास्तुहरिकेलीयाअङ्गाश्चंपोपलक्षिताः । शाल्वास्तुकार
कुक्षीयामरवस्तुदशेरकाः ॥ २३ ॥ जालन्धरास्त्रिगर्त्ताःस्युस्तायिकास्त
ज्जिकाभिधा । काश्मीरास्तुमाधुमताःसारस्वतास्तुविकर्णिकाः ॥ २४ ॥ वा
ह्लीकाष्टक्कनामानोबाह्लीकाबह्लिकाह्वयाः । तुरुष्कास्तुशाखयःस्युःकारू
षास्तुबृहद्गृहाः ॥ २५ ॥ लम्पाकास्तुमुरण्डास्युःसौवीरास्तुकुमालकाः ।
प्रत्यग्रथास्त्वहिच्छत्राःकीकटामागधाह्वयाः ॥ २६ ॥ उग्राःकेरलपर्य्या
याःकुन्तलाउपहालकाः । ग्रामस्तुवसथःसन्निप्रतिपर्युपतःपरः
॥ २७ ॥ पटकस्तुतदर्द्धंस्यादाघारस्तुघटोऽवधिः । अन्तोवसानंसी
माचमर्य्यादापिचसीमनि ॥ २८ ॥ ग्रामसीमातूपशल्यंमालंग्रामा
न्तराटवी । पर्य्यन्तभूःपरिसरस्स्यात्कर्म्मान्तस्तुकर्म्मभूः ॥ २९ ॥ गो
स्थानंगोष्ठमेतत्तुगौष्ठीनंभूतपूर्वकं । नद्याशितंगवीनंस्याद्गावोयत्राशिताः
पुरा ॥ ३० ॥ क्षेत्रन्तुवप्रःकेदारःसेतौपल्यालिसम्वराः । क्षेत्रन्तुशा

कस्यशाकंशाकटंशाकशाकिनं ॥ ३१ ॥ व्रैहेयंशालेयंषष्टिक्यं कौद्रवी हे०चं० ४
णामौद्गीने । ब्रीह्यादीनांक्षेत्रेऽणव्यंस्यादाणवीनमणोः ॥ ३२ ॥ भं
ग्यंभांगीनमौमोनमुम्यंयव्यंयवक्यवत् । तिल्यं तैलीनंमाषीनंमाष्यंभङ्गा
दिसम्भवं ॥ ३३ ॥ सीत्यंहल्यंचिहल्पनुत्रिसीत्यंचिगुणाकृतं । तृती
याकृतेदिहल्याद्येवंशम्बाकृतस्त्वतत् ॥ ३४ ॥ बीजाकृतंतूप्तकृष्टंद्रैणि
काढकिकादयः । स्युर्द्रौणाढकवापादौखलधानंपुनःखलं ॥ ३५ ॥ चू
र्णेक्षोदोऽथरजसिस्युर्धूलीपांसुरेणवः । लोष्टेलोष्टुर्देलिर्लेष्टुर्वल्मीकः
कृमिपर्वतः ॥ ३६ ॥ वम्रीकूटंवामलूरोनाकुःशक्रशिरस्त्वसः । नगरीपूः
पुरीद्रंगःपत्तनंपुटभेदनं ॥ ३७ ॥ निवेशनमधिष्ठानंस्थानीयंनिग
मोऽपिच । शाखापुरंतूपपुरंखेटःपुरार्द्धविस्तरः ॥ ३८ ॥ स्कन्धावारोराज
धानीकोट्टदुर्गेपुनस्समे । गयापूर्गयराजर्षेःकान्यकुब्जंमहोदयं ॥ ३९ ॥
कन्याकुब्जंगाधिपुरंकौशंकुशस्थलंत्वतत् । काशीवराणसीवाराणसीशिव
पुरीचसा ॥ ४० ॥ साकेतंकोशलायोध्याविदेहामिथिलासमे । त्रिपुरीविदि
नगरीकौशाम्बीवत्सपत्तनं ॥ ४१ ॥ उज्जयिनीस्याद्विशालाऽवन्तीपुष्पक
रण्डिनी । पाटलिपुत्रंकुसुमपुरंचम्पातुमालिनी ॥ ४२ ॥ लोमपादक
र्णयोःपूर्देवीकोटउमावनं । कोटीवर्षंवाणपुरंस्याच्छोणितपुरञ्चतत्
॥ ४३ ॥ मधुरातुमधूपघ्नंमधुराथगजाह्वयं । स्याद्धास्तिनपुरंहस्तिनीपु
रंहस्तिनापुरं ॥ ४४ ॥ तामलिप्तंदामलिप्तंतामलिप्तीतमालिनी । स्तम्बपू

द्वि॰चं॰ ४ विष्णुगृहञ्चस्यादिदर्भोतुकुण्डिनं ॥ ४५ ॥ द्वारावतीद्वारिकास्याज्जिषधातु
नलस्यपूः । प्राकारोवरणःशालेवयोवप्रोऽस्यपीठभूः ॥ ४६ ॥ प्राकारा
ग्रंकपिशीर्षंक्षौमाट्टाट्टालकास्समाः । पूर्द्वारेगोपुरंरथ्याप्रतोलीविशिखा
स्समाः ॥ ४७ ॥ परिकूटंहस्तिनखोनगरद्वारकूटके । मुखंनिःसरणी
वाटेप्राचीनावेष्टकौवृतिः ॥ ४८ ॥ पदव्येकपदीपद्यापद्धतिर्वर्त्मवर्त्मनी ।
अयनंसरणिर्मार्गोऽध्वापंथानिगमःसृतिः ॥ ४९ ॥ सत्पथेस्वतितः
पन्थाअपन्थाअपथंसमे । व्यध्वोदुरध्वःकदध्वाविपथंकापथन्तुसः
॥ ५० ॥ प्रान्तरंदूरशून्योऽध्वाकान्तारोवर्त्मदुर्गमं । सुरंगातुसन्धिला
स्याद्गूढमार्गोभुवोन्तरे ॥ ५१ ॥ चतुष्पथेतुसंस्थानेचतुष्कंत्रिपथेत्रिकं । द्वि
पथंतुचारुपथोगजाद्यध्वात्वसंकुलं ॥ ५२ ॥ घण्टापथःसंसरणंश्रेयथो
राजवर्त्मच । उपनिष्क्रमणश्चोपनिष्कारश्चमहापथः ॥ ५३ ॥ वि
पणिस्तुवणिग्मार्गःस्थानन्तुपदमास्पदं । श्लेषस्त्रिमार्गीशृङ्गाटंवज्र
मार्गोन्तुचत्वरं ॥ ५४ ॥ श्मसानंकरवीरःस्यात्पितृप्रेतादनंगृहं । गर्भभू
र्वास्तुगेहेतुगृहंवेश्मनिकेतनं ॥ ५५ ॥ मन्दिरंसदनंसद्मनिकायोभुव
नंकुटः । आलयोनिलयश्शालोसभोद्वसितंकुलं ॥ ५६ ॥ धिष्ण्यमाव
सथंस्थानंपस्त्यंसंस्त्यायआश्रयः । ओकोनिवासआवासोवसतिःशर
णंक्षयः ॥ ५७ ॥ धामागारंनिशान्तञ्चकुट्टिमंत्वस्यबद्धभूः । चतुश्शा
लंसंजवनंसौधंतुनृपमन्दिरं । ५८ ॥ उपकारिकोपकार्य्यासिंहद्वा

रंप्रवेशनं । प्रासादोदेवभूपानांहर्म्यन्तुधनिनांगृहं ॥ ५९ ॥ मठाव १०.५
सथ्यावसथाःस्युश्छात्रप्रतिवेश्मनि । पर्णशालोटजश्चैत्यविहारौजि
नसद्मनि ॥ ६० ॥ गर्भागारेपवरकोवासौकःशयनास्पदं । भाण्डागा
रंतुकोशस्स्याच्चन्द्रशालाशिरोगृहं ॥ ६१ ॥ कुप्यशालातुसन्धानीकाय
मानंतृणौकसी । होत्रीयन्तुहविर्गेहंप्राग्वंशःप्राग्घविर्गृहात् ॥ ६२ ॥
आथर्वणंशान्तिगृहमास्थानगृहमिन्द्रकं । तैलिशालायन्त्रगृहमरिष्टं
सूतिकागृहं ॥ ६३ ॥ सूदशालारसवतीपाकस्थानंमहानसं । ह
स्तिशालातुचतुरंवाजिशालातुमन्दुरा ॥ ६४ ॥ सन्दानिनीतुगोशालाशि
वशालातुजालिनी । कुम्भशालापाकपुटीतन्तुशालातुगर्त्तिका ॥ ६५ ॥
नापितशालावपनीशिल्पाखरकुटीचसा । आवेशनंशिल्पिशालासत्र
शालाप्रतिश्रयः ॥ ६६ ॥ आश्रमस्तुमुनिस्थानमुपघ्नस्त्वन्तिकाश्रयः ।
प्रपापानीयशालास्याद्गञ्जातुमदिरागृहं ॥ ६७ ॥ पक्कणश्शबरवासो
घोषस्त्वाभीरपल्लिका । पण्यशालानिषद्याट्टोहट्टाविपणिरापणः
॥ ६८ ॥ वेश्याश्रयःपुरंवेशोमण्डपस्तुजनाश्रयः । कुड्यंभित्तिस्तदेडू
कमन्तर्निहितकीकसं ॥ ६९ ॥ वेदीवितर्द्दिरजिरंप्राङ्गणंचत्वराङ्गणे ।
वलजंप्रतिहारोद्वार्द्वारेऽथपरिघोर्गला ॥ ७० ॥ साल्पास्त्वर्गलिका
सूचिःकुञ्चिकायान्तुकूञ्चिका । साधारणद्धूटःस्यात्सोद्घाटयन्त्रन्तुताल
कं ॥ ७१ ॥ अस्योद्घाटनयन्त्रन्तुताल्वपिप्रतिताल्यपि । तिर्य्यग्द्वारो

पु॰ वं॰ ४ र्द्धदारु तरंगं स्यादररं पुनः ॥ ७२ ॥ कपाटोऽररिःकवाटःपक्षद्वार
न्तुपक्षकः । प्रच्छन्नमन्तर्द्वारःस्याद्बहिर्द्वारन्तुतोरणं ॥ ७३ ॥
तोरणोर्ध्वेतु मङ्गल्यंदाम वन्दनमालिका । स्तम्भादेस्स्यादधोदारौशिला
नासोर्ध्वदारुणि ॥ ८४ ॥ गोपानसीतु बलभीछादनेवक्रदारुणि । गृ
हावग्रहणीदेहल्यम्बरेदुम्बरेम्बुरः ॥ ७५ ॥ प्रघाणःप्रघणोलिन्दौबहि
र्द्वारप्रकोष्ठके । कपोतपालीविटङ्कःपटलीछदिषीसमे ॥ ७६ ॥ नी
व्रंवलीकंनध्रान्तइन्द्रकोशस्तमङ्गकः । वलभीछदिराधारोनागदन्तास्तु
दन्तकाः ॥ ७७ ॥ मत्तालम्बोपाश्रयःस्यात्प्रग्रीवोमत्तवारणे । वाताय
नोगवाक्षस्स्वजालकोऽथात्मकोष्टकः ॥ ७८ ॥ कुम्भूलोऽस्त्रिस्तुकोणाणिः
कोटिःपाल्यस्त्रइत्यपि । आरोहणन्तुसोपानंनिःश्रेणिस्त्वधिरोहिणी
॥ ७९ ॥ स्थूणास्तम्भःशालभञ्जीपाञ्चालिकाचपुत्रिका । काष्ठादिघ
टितालेप्यमयीत्वंजलिकारिका ॥ ८० ॥ नंद्यावर्त्तप्रभृतयोविच्छिन्दाआ
ढ्यवेश्मनां । समुद्गस्सम्पुटःपेटास्यान्मञ्जूषाऽथशोधनी ॥ ८१ ॥ सम्मा
र्ज्जनीबहुकरीवर्द्धनीचसमूहनी । सङ्करावकरौतुल्यावुदूखलमुलूख
लम् ॥ ८२ ॥ प्रस्फोटनन्तुपचनमघघान्तस्तुकण्डनं । कटःकलि
ञ्जोमुसलोऽयोग्रंकण्डोलकःपिटं ॥ ८३ ॥ चालनीतितउःसूर्प्यंप्र
स्फोटनमथान्तिका । चुल्ल्यश्मन्तकमुद्धानंस्यादधिश्रयणीचसा ॥ ८४ ॥
स्थाल्युखापिठरंकुण्डङ्चरुःकुम्भीघटःपुनः । कुटःकुम्भःकरीरस्तकलशः

कलसेोनिपः ॥ ८५ ॥ हसन्यङ्गारचक्कटीधानीपात्रीहसन्तिका । हे॰चं॰ ४
भ्राष्ट्रोऽम्बरीष ऋचीषमृजीषंपिष्टपाकभृत् ॥ ८६ ॥ कम्विर्दर्विः खजा
काथस्यात्तर्द्दूर्दारुहस्तकः । वर्द्धन्यांतुगलन्त्यालूः कर्करीकर्करोऽथसः
॥ ८७ ॥ नालिकेरजः करंकस्तुल्वेोवटाहवर्ध्यै । मणिकोऽलिञ्जरोग
र्गरीकलस्यौतुमन्थिनी ॥ ८८ ॥ वैशाखः खजकोमंथामन्थानो मन्थद
ण्डकः । मन्थः क्षुब्धोऽस्यविष्कम्भो मञ्जीरः कुटरोपिच ॥ ८९ ॥ शा
लाजिरे वर्द्धमानः शरावः कोशिकापुनः । मल्लिकाचषकः कंसः पारीस्या
त्पानभाजनं ॥ ९० ॥ कुतूस्स्नेहपात्रंकुतुपन्तुतदल्पकं । दृतिख
ल्लस्वर्म्ममयीत्वालूः करकपात्रिका ॥ ९१ ॥ सर्वमावपनंभाण्डंपात्रा
मत्रेतुभाजनं । तद्विशालंपुनः स्थालंस्यात्पिधानमुदञ्चनं ॥ ९२ ॥
शैलोऽद्रिः शिखरीशिलोच्चयगिरीगोत्रोचलः सानुमान्ग्रावः पर्वतभूध्र
भूधरधराहार्य्यानगोथोदयः । पूर्वाद्रिस्त्वरमाद्रिरस्तउदगद्रिस्त्वद्रिरा
ट्मेनकाप्राणेशोहिमवान्हिमालयहिमप्रस्थौभवानीगुरुः ॥ ९३ ॥ हि
रण्यनाभेोमैनाकः सुनाभस्त्वतदात्मजः । रजताद्रिस्तुकैलासोऽष्टापदः
स्फटिकाचलः ॥ ९४ ॥ क्रौञ्चः क्रुञ्चोऽथमलयआषाढोदक्षिणाचलः ।
स्यान्माल्यवान्प्रस्रवणोविंध्यस्तुजलबालकः ॥ ९५ ॥ शत्रुञ्जयोवि
मलाद्रिरिन्द्रकीलस्तुमन्दरः । सुवेलस्स्यात्त्रिमुकुटस्त्रिकूटस्त्रिककुच्च
सः ॥ ९६ ॥ उज्जयंतोरैवतकः सुदारुः पारिपात्रिकः । लोकालो

34

हे॰ चं॰ ४ कम्बक्रवालोऽथमरुः कर्णिकाचलं ॥ ९७ ॥ रत्नसानुस्सुमेरुः स्वःस्व
र्गिकाञ्चनतोगिरिः। शृङ्गन्तुशिखरंकूटंप्रपातस्त्वतटोभृगुः ॥ ९८ ॥
मेखलामध्यभागोऽद्रेर्नितम्बः कटकश्च सः। दरीस्यात्कन्दरोखातबि
लेतुगह्वरेगुहा ॥ ९९ ॥ द्रोणीतुशैलयोस्सन्धिःपादाःपर्य्यन्तपर्वताः।
दन्तकास्तुवहिस्तिर्य्यक्प्रदेशानिर्गतागिरेः ॥ १०० ॥ अधित्यकोर्ध्वभू
मिस्स्यादधोभूमिरुपत्यका। स्नुःप्रस्थस्सानुरश्मातुपाषाणःप्रस्तरोदृ
षत् ॥ १०१ ॥ ग्रावाशिलोपलोगण्डशैलास्थूलोपलाश्च्युताः। स्यादाकरः
खनिःखानिर्गञ्जाधातुस्तुगैरिकं ॥ १०२ ॥ शुल्बधातौपाकशुक्लाकठिनी
खटिनीखटी। लोहंकालायसंशस्त्रंपिण्डंपारशवंघनं ॥ १०३ ॥ गिरि
सारंशिलासारंतीक्ष्णकृष्णामिषेअयः। सिंहानधूर्त्तमंडूरसरणान्यस्य
किट्टके ॥ १०४ ॥ सर्वञ्चतैजसंलोहंविकारस्त्वयसःकुशी। ताम्रंम्लेच्छ
मुखंशुल्वंरक्तंद्व्यष्टमुदुम्बरं ॥ १०५ ॥ म्लेच्छंशबरभेदाख्यंमर्क्कटास्यंकनी
यसं। ब्रह्मवर्द्धनंवरिष्ठंसीसंतुसीसपत्रकं ॥ १०६ ॥ नागंगडूपदभ
वंवप्रंसिन्दूरकारणं। वर्द्धंस्वर्णारियोगेष्टेयवनेष्टंस्तुवर्णकं ॥ १०७ ॥
वंगंत्रपुःस्वर्णजनागजीवनेमृदङ्गरंगेगुरुपत्रपिच्चटे। स्याच्चक्रसंज्ञंत
मरंचनागजंकस्तीरमालीनकसिंहलेअपि ॥ १०८ ॥ स्याद्रूप्यंकलधौ
ततारंरजतश्वेतानिदुर्वर्णकंखर्ज्जूरंचहिमांशुहंसकुमुदाभिख्यंस्तुवर्णं
पुनः। स्वर्णंहेमहिरण्यहाटकवसून्यष्टापदंकाञ्चनंकल्याणंकनकं

महारजतरैगाङ्गेयरुक्माण्यपि ॥ १०९ । कलधौतलोहोत्तमवह्निबी हे॰ चं॰ ४
जान्यपिगारुडङ्गैरिकजातरूपे । तपनीयचामीकरचन्द्रभर्मार्जुननि
ष्ककार्तस्वरकर्बुराणि ॥ ११० ॥ जाम्बूनदंशातकुम्भंरजतंभूरिभूत्तमं । हि
रण्यकोशाःकुप्यानिहेम्निरूप्येकृताकृते ॥ १११ ॥ कुप्यन्तुतद्द्वयाद
न्यद्रूप्यंतद्द्वयमाहतं । अलङ्कारसुवर्णन्तुशृङ्गीकनकमायुधं ॥ ११२ ॥
रजतंचसुवर्णन्तुसंश्लिष्टेघनगोलकः । पित्तलारेऽथारकूटःकपिलोह
सुवर्णकं ॥ ११३ ॥ रिरीरीरीचरीतिस्तुपीतलोहंसुलोहकं । ब्राह्मीतुरा
ज्ञीकपिलाब्रह्मरीतिर्महेश्वरी ॥ ११४ ॥ कांस्येविद्युत्प्रियंघोषंप्रकाशंवंग
शुल्वजं । घण्टाशब्दमसूरन्द्वरवणंलोहजंमलं ॥ ११५ ॥ सीसङ्क
ोपस्त्रलोहंवर्त्तेलोहन्तुवर्त्तकं । पारदःपारलःसूतोहरबीजंरजस्वलः
॥ ११६ ॥ अभ्रकंस्वच्छपत्रंखंमेघाख्यंगिरिजामले । स्रोतोंजनन्तुकापो
तंसौवीरंकृष्णयामुने ॥ ११७ ॥ अथतुत्थंशिखिग्रीवंतुत्थाञ्जनमयूरके ।
मूषातुत्थंकांस्यनीलंहेमतारंवितुन्नकं ॥ ११८ ॥ स्यात्तुकर्प्परिकातुत्थम
मृतासङ्गमंजनं । रसगर्भंतार्क्ष्यशैलंतुत्थादार्वीरसोद्भवे ॥ ११९ ॥ पु
ष्पाञ्जनंरीतिपुष्पंपौष्पकंपुष्पकेतुच । माक्षिकन्तुकदम्बस्स्याच्चक्रनामाज
नामके ॥ १२० ॥ ताप्योनदीजःकामारिस्तारारिर्विटमाक्षिकः । सौरा
ष्ट्रीपार्वतीकाक्षीकालिकापर्पटीसती ॥ १२१ ॥ आढकीतुबरीकंसोद्भवा
काक्षीमृत्तालकेया । कासीसन्धातुकासीसंखेचरंधातुशेखरं ॥ १२२ ॥ द्विती

हे०चं०४ यंपुष्पकासीसंकंसकंनयनौषधं। गन्धाश्मा शुल्बपामाकुष्ठारिर्गन्धिकगन्धा
को ॥ १२३ ॥ सौगन्धिकश्शूकपुच्छो हरितालन्तुपिञ्जरं । विडालकंवि
स्रगन्धिःखर्ज्जूरंवंशपत्रकं ॥ १२४ ॥ आलपीतनतालानिगोदन्तंनट
मण्डनं । वङ्गारिर्ह्रीमहच्चाथमनोगुप्ता मनःशिला ॥ १२५ ॥ करवी
रनागमातारोचनीरसनेत्रिका । नैपालीकुनटीगोला मनोह्वानागजिह्वि
का ॥ १२६ ॥ सिन्दूरंनागजंनागरक्तंशृङ्गारभूषणं । चीनपिष्टंहंसपा
दंकुरुविन्देतुहिंगुलः ॥ १२७ ॥ शिलाजतुस्याद्रिजमर्थ्यङ्गैरेयम
श्मजं । क्षारःकाचःकुलालीतुस्याच्चक्षुष्याकुलत्थिका ॥ १२८ ॥ बोलो
गन्धरसःप्राणःपिण्डोगोपरसस्सः । रत्नंवसुमणिस्तत्त्वैदूर्य्यंबाल
वायजं ॥ १२९ ॥ मरकतंत्वश्मगर्भ्भंगारुत्मतंहरिन्मणिः । पद्मरागोलो
हितकलक्ष्मीपुष्पारुणोपलाः ॥ १३० ॥ नीलमणिस्त्विन्द्रनीलःसूचीमु
खंतुहीरकः । वराटकंरत्नमुख्यंवज्रपर्य्यायनाम च ॥ १३१ ॥ विराट
जोराजपट्टोराजावर्त्तोऽथविद्रुमः । रक्ताङ्गीरक्तकन्दश्चप्रवालंहेमकन्द
लः ॥ १३२ ॥ सूर्य्यकान्तःसूर्य्यमणिःसूर्य्याश्मादहनोपमः । च
न्द्रकान्तश्चन्द्रमणिःचान्द्रश्चन्द्रोपलश्चसः ॥ १३३ ॥ क्षीरतैलस्फ
टिकाभ्यामन्यौखस्फटिकाविमौ । शुक्तिजंमौक्तिकंमुक्तामुक्ताफलंरसो
द्भवं ॥ १३४ ॥ नीरंवारिजलंदलंकमुदकंपानीयमम्भःकुशंतोयं
जीवनजीवनीयशलिलार्णांस्यम्बुवाःशम्बरं । क्षीरंपुष्करमेघपुष्पक

मलान्यापःपयःपाथसीकीलालंभुवनंवनंघनरसोयादोनिवासोऽमृतं 
॥ १३५ ॥ कुलीनसंकबन्धंचप्राणादंसर्वतोमुखं। आस्थाथास्थागमस्ता
घमगाधंचातलस्पृशि ॥ १३६ ॥ निम्नंगभीरंगम्भीरमुत्तानंतद्विलक्षणं।
अच्छंप्रसन्नेप्रच्छंस्यादाविलंकलुषंचतत्॥ १३७॥ अवश्यायस्तुतुहि
नंप्रालेयंमिहिकाहिमं। स्यान्नीहारस्तुषारस्तुहिमानीतुमहद्धिमं
॥ १३८ ॥ पारावारस्सागरोऽवारपारोऽकूपारोदध्यर्णवावीचिमाली।
यादस्त्रोतोवार्नदीशःसरस्वान्सिन्धूदन्वनौमितद्रुःसमुद्रः॥ १३९ ॥
आकरोमकराद्रन्नाज्जलान्निधिधराशयाः। द्विपान्तराअसंख्यास्तेसप्तै
वेतितुलौकिकाः ॥ १४० ॥ लवणक्षीरदध्याज्यसुरेक्षुस्वादुवारयः।
तरङ्गेभङ्गवीच्यूर्म्युत्कलिकामहतिन्विह ॥ १४१ ॥ लहर्य्युल्लोलकल्लो
लाआवर्तःपयसांभ्रमः।तालूरोवोलकस्तासैबेलास्याद्वृद्धिरम्भसः॥१४२॥
डिंडिरोऽब्धिकफाःफनोबुद्बुदस्यासकौसमौ। मर्य्यादाकूलभूःकूलंप्रपातः
कच्छरोदसी ॥ १४३ ॥ तटंतीरंप्रतीरंचपुलिनंतज्जलोच्छ्रितं। सैक
तंचान्तरीयन्तुद्वीपमंतर्ज्जलेतटं ॥ १४४ ॥ तत्परंपारमवारंत्ववीक्पा
रंतदन्तरं। नदीहिरण्यवर्णास्याद्रोधोवक्त्रातरंगिणी ॥ १४५॥ सि
न्धुस्सैवलिनो वहाचह्रदिनीस्रोतस्विनीनिम्नगास्रोतोनिर्झरिणीसरिच्च
तटिनीकूलंकषावाहिनी। कपूर्दीपवतीसमुद्रदयिताधुन्यौस्रवन्तीसर
स्वत्यौपर्वतजापगाजलधिगाकुल्याचजम्बालिनी ॥ १४६ ॥ गंगात्रिपथ

हे॰चं॰ ४ गाभागीरथीत्रिदशदीर्घिका। त्रिस्रोताजाह्नवीमन्दाकिनीभीष्मकुमार
सूः ॥ १४७ ॥ सरिद्वराविष्णुपदीसिद्धस्वःस्वर्गिखापगा। ऋषिकु
ल्याहैमवतीस्वर्वापीहरशेखरा ॥ १४८ ॥ यमुनायमभगिनीकालिन्दी
सूर्यजायमिः। रेवेंदुजापूर्वगंगानर्मदामेकलाद्रिजा ॥ १४९ ॥ गोदा
गोदावरीतापीतपनीतपनात्मजा। शुतुद्रिस्तुशतद्रुःस्यात्कावेरीत्वर्द्ध
जाह्नवी ॥ १५० ॥ करतोयासदानीराचन्द्रभागातुचन्द्रिका। वासिष्ठी
गोमतीतुल्येब्रह्मपुत्रीसरस्वती ॥ १५१ ॥ विपाट्विपाशार्ज्जुनीतुबाहु
दासैतवाहिनी। वैतरणीनरकस्यास्रोतोंभःसरणंस्वतः ॥ १५२ ॥ प्र
वाहःपुनरोघस्स्याद्वेणीधारारयस्स्रसः। घट्टस्तीर्थावतारेंबुवृद्धौपूरःप्लव
स्स्रसः ॥ १५३ ॥ पुटभेदास्तुचक्राणिभ्रमास्तुजलनिर्गमाः। परीवाहा
जलोच्छ्वासाःकूपकास्तुविदारकाः ॥ १५४ ॥ प्रणालीजलमार्गोऽथपा
नंकुल्याचसारणिः। सिकताबालुकाबिन्दौपृषत्पृषतविप्रुषः ॥ १५५ ॥
जम्बालेचिकिलेपंकःकर्द्दमस्सुनिषद्वरः। शादोहिरण्यबाहुस्तुशोणोन
देपुनर्वहः ॥ १५६ ॥ भिद्यउद्ध्यस्सरस्वांस्तुद्रहोगाधजलोह्रदः। कूपस्या
दुदपानोंधुःप्रहिर्नेमीतुतन्त्रिका ॥ १५७ ॥ नान्दीमुखोनान्दीपटोवीना
होमुखबंधने। आहावस्तुनिपानंस्यादुपकूपेऽथदीर्घिका ॥ १५८ ॥
वापीस्यादुपकूपेतुचूरीचूंटीचचूतकः। उद्घाटकंघटीयन्त्रंपादावर्त्तोऽ
रघट्टकः ॥ १५९ ॥ अखातंतुदेवखातंपुष्करिण्यांतुखातकं। पद्माकर

स्तडागस्स्यात्कासारःसरसीसरः ॥ १६० ॥ वेशन्तःपल्वलोऽल्पंतत्प हे०चं० ४
रिखाखेयखातके । स्यादालवालमाबालमावापस्स्थानकंचसः ॥ १६१ ॥
आधारस्त्वम्भसांबन्धोनिर्झरस्तुझरःसरिः । उत्सःस्रवःप्रस्रवणंज
लाधाराजलाशयाः ॥ १६२ ॥ वह्निर्बृहद्भानुर्हिरण्यरेतसौधनञ्जयो
हव्यहविर्हुताशनः । कृपीटयोनिर्दमुनाविरोचनाशुशुक्षणिश्छागरथ
स्तनूनपात् ॥ १६३ ॥ कृशानुर्वैश्वानरवीतिहोत्रावृषाकपिःपावकचित्र
भानू । अप्पित्तधूमध्वजकृष्णवर्त्मार्चिष्मच्छमीगर्भतमोघ्नशुक्राः ॥ १६४ ॥
शोचिष्केशःशुचिकृतवहोषर्बुधाःसप्तमन्त्रज्वालाजिह्वाज्वलनशिखिनौ
जागृविर्जातवेदाः । बर्हिःशुष्मानिलसखवसूरोहिताश्वाश्रयाशौबर्हिर्ज्यो
तिर्दहनकृशौहव्यवाहोनलोऽग्निः ॥ १६५ ॥ विभावसुस्सप्तोद
र्चिःस्वाहाग्नेयीप्रियास्यतु । और्वःसंवर्त्तकोऽप्यग्निर्वाडवोवडवामुखः
॥ १६६ ॥ दवोदावोवनवह्निर्मेघवह्निरिरंदमः । छागणस्तुकरीषाग्निः
कुकूलस्तुतुषानलः ॥ १६७ ॥ सन्तापःसंज्वरोवाष्पंकृष्णाजिह्वाःस्युरर्चि
षः । हेतिःकीलाशिखाज्वालार्चिर्ज्वलकामहत्यपि ॥ १६८ ॥ स्फुलि
ङ्गोऽग्निकणोऽलातज्वालोल्कालातमुल्मुकं । धूमस्स्याद्वायुवाहोऽग्निवाहोद
हनकेतनं ॥ १६९ ॥ अभ्रसूःकरमालश्चसूरीजीमूतवाह्यपि । तडिद्दै
वतीविद्युच्चलाशंपाचिरप्रभा ॥ १७० ॥ आकालिकीशतह्रदाचञ्चलाच
पलाभ्रमनिः । सौदामिनीक्षणिकाचह्लादिनीजलबालिका ॥ १७१ ॥ वायुःस

मीरसमीरौपवनाशुगौनभःश्वासोनभस्वद्नलस्वसनास्समीरणाः ।
वातोहिकान्तपवमानमरुत्वकम्पनाःकम्पाकनित्यगतिगन्धवहप्र
भञ्जनाः ॥१७२॥ मातरिश्वाजगत्प्राणःपृषदश्वोमहाबलः । मा
रुतःस्पर्शनादैत्यदेवोझंझासवृष्टियुक् ॥ १७३ ॥ प्राणोनासाग्रहृ
न्नाभिपादाङ्गुष्ठान्तगोचरः । अपानपवनोमन्यापृष्ठपृष्ठान्तपार्ष्णिगः
॥ १७४ ॥ समानःसन्धिहृन्नाभिषूदानोहृच्छिरोन्तरे । सर्वत्वग्वृत्तिको
व्यानइत्यङ्गेपञ्चवायवः ॥ १७५ ॥ अरण्यमटवीसत्त्रंवार्क्ष्यंचगह
नंक्षपः । कान्तारंविपिनंकक्षःस्यात्षंडंकाननंवनं ॥ १७६ ॥ दवोदावः
प्रस्तारस्तुतृणाटव्यांक्षषोऽपिच । अपोपाभ्यांवनंबेलमारामःकृत्रिमेवने
॥ १७७ ॥ निष्कुटस्तुगृहारामोबाह्यारामस्तुपौरकः । आक्रीडःपुनरु
द्यानंराज्ञांत्वन्तःपुरोचितं ॥ १७८ ॥ तदेवप्रमदवनममात्यादेस्तुनि
ष्कुटे । वाटीपुष्पादृक्षाद्यासोक्षुद्रारामःप्रसेदिका ॥१७९॥ वृक्षोगः
शिखरीचशाखिफलदावद्रिर्हरिद्रुर्द्रुमोजीर्णोद्रुर्विटपीकुटःक्षितिरु
हःकारस्करोविष्टरः । नंद्यावर्त्तकरालिकौतरुवसूपर्णीपुलाकंघ्रिपःसा
लानोकुहगच्छपादपनगारूक्षागमोपुष्पदः ॥ १८० ॥ कुञ्जनिकुञ्ज
कुण्डङ्गास्स्थानेवृक्षैर्वृतान्तरे । पुष्पैस्तुफलवान्वृक्षोवानस्पत्योविनातुतैः
॥ १८१ ॥ फलवान्वनस्पतिस्स्यात्फलावंध्यःफलेग्रहिः । फलवंध्य
स्त्ववकेशीफलवान्फलिनःफली ॥ १८२ ॥ औषधिस्स्यादोषधिस्तु

फलपाकावसानिका । क्षुपो ह्रस्वशिफाशाखः प्रतानिर्व्रततिर्लता ॥ १८३ ॥ ह० चं० ४
वल्ल्यस्यां तु प्रतानिन्यां गुल्मिन्युपलवीरुधः । स्यात्प्ररोहांकुरोंकूरोरोहस्व
स्तु पर्वणः ॥ १८४ ॥ समुत्थितस्याद्वलिशं शिखाशाखालतास्समाः ।
सलाशाला स्कन्धशाखा स्कन्धः प्रकाण्डमस्तके ॥ १८५ ॥ मूलाच्छा
खावधिर्गण्डः प्रकाण्डोऽथ जटाशिफाः । प्रकाण्डरहिते स्तम्बो विटपो गु
ल्म इत्यपि ॥ १८६ ॥ शिरोनामाग्रं शिखरं मूलं बुध्नोऽघ्रिनाम च । सारोम
ज्जा त्वचिच्छल्ली चोचं वल्कं च वल्कलं ॥ १८७ ॥ स्थाणौ तु ध्रुवकः शंकुः का
ष्ठेदलिकदारुणी । निष्कुहः कोटरो मंजा मंजरिर्वल्लरिस्त्वसा ॥ १८८ ॥
पत्रं पलाशं छदनं बर्हं पर्णं छदं दलं । नवे तस्मिन् किसलयं किसलं प
ल्लवो त्तु ॥ १८९ ॥ नवप्रबालोऽस्य कोशी शुंगा माण्डिर्हलस्तसा ।
विस्तारविटपौ तुल्यौ प्रसूनं कुसुमं समं ॥ १९० ॥ पुष्पं सूनं सुमनसः प्रसव
स्तु मणीवकं । ज्वालकक्षारकौ तुल्यौ कलिकायां तु कोरकः ॥ १९१ ॥ कुड्म
ले मुकुलं गुच्छे गुच्छस्तवकगुत्समाः । गुलुच्छोऽथ रजः पौष्पं परागोऽथ रसो म
धु ॥ १९२ ॥ मकरन्दो मरन्दश्च वृन्तं प्रसवबन्धनं । प्रबुद्धोज्जृम्भफुल्लानि
व्याकोशं विकचं स्मितं ॥ १९३ ॥ उन्मिषितं विकसितं दलितं स्फुटितं स्फुटं ।
प्रफुल्लोत्फुल्लसम्फुल्लोच्छ्वसितानि विजृम्भितं ॥ १९४ ॥ स्मेरं विनिद्रमु
न्निद्रं विमुद्रं हसितानि च । संकुचितं तु निद्राणं मीलितं मुद्रितं च तत् ॥ १९५ ॥
फलं तु सस्यं तच्छुष्कं वानमामं शलाटु च । ग्रन्थिः पर्वपरुर्वीजकोशी शि

के॰ वं॰ ४ ग्वा शम्मीशमिः ॥ १९६ ॥ शिम्बिस्त्रिपिप्पलोऽश्वत्थःस्त्रीकृष्णाकुञ्जराश
नः । कपित्थावासिबोधितरुः प्लक्षस्तुपर्कटीजटी ॥ १९७ ॥ न्यग्रोधस्तुब
हुपाद्व्याद्वटोवैश्रवणालयः । उदुम्बरोजन्तुफलोमशकीहेमदुग्धकः
॥ १९८ ॥ काकोदुम्बरिकाफल्गुर्मलयुर्जघनेफला । आम्रश्चूतस्सहका
रः सप्तपर्णस्त्वयुक्छदः ॥ १९९ ॥ शिग्रुःशोभाञ्जनोऽक्षीवतीक्ष्णग
न्धकमोचकाः । श्वेतेऽचश्वेतमरिचःपुन्नागस्तुरपर्णिका ॥ २०० ॥ बकु
लःकेसरोशोकःकंकेल्लिःककुभोऽर्जुनः । मालूरःश्रीफलोबिल्वःकिंकिरातः
कुरंटकः ॥ २०१ ॥ त्रिपत्रकःपलाशःस्यात्किंशुकोब्रह्मपादपः । तृण
राजस्तलस्तालोरम्भामोचाकदल्यपि ॥ २०२ ॥ करवीरोहयमारःकुटजो
गिरिमल्लिका । बिदुलोवेतसःशीतोवानीरोवञ्जुलोरथः ॥ २०३ ॥ कर्कन्धुः
कुवलीकोलिर्बदर्य्यथहलिप्रियः । नीपःकदम्बःशालस्तुसर्ज्जोरिष्टस्तुफे
निलः ॥ २०४ ॥ निम्बोऽरिष्टःपिचुमन्दःसमौपिचुलझावुकौ । कर्पास
स्तुवादरःस्यात्पिचव्यस्तूलकंपिचुः ॥ २०५ ॥ आरग्वधःकृतमालोवृषि
वासाटरूषकौ । करञ्जस्तुनक्तमालस्त्वहिर्वज्रोमहातरुः ॥ २०६ ॥
महाकालस्तुकिंपाकेमन्दारःपारिभद्रके । मधूकस्तुमधुष्ठीलोगुडपुष्पोम
धुद्रुमः ॥ २०७ ॥ पीलुःस्रंसीगुडफलोगुग्गुलुस्तुपलंकषः । राजादनःप्रि
यालःस्यान्निनिशस्तुरथद्रुमः ॥ २०८ ॥ नागरङ्गस्तुनारङ्गइङ्गुदीतापस
द्रुमः । काश्मीरीभद्रपर्णीश्रीपर्ण्यम्लिकातुतिंतिडी ॥ २०९ ॥ शेलुःश्ले

श्योनाकः शोणसालस्तु प्रियकोऽसनः । पाटलिः पाटला भूर्ज्जो बहुलत्वङ्मृ
दुच्छदः ॥ २१० ॥ द्रुमोत्पलः कर्णिकारे निचुले हिज्जलेज्जलौ । धात्री
शिवा चामलकी कलिरक्षो बिभीतकः ॥ २११ ॥ हरीतक्यभया पथ्या चिक
टानन्तफलमयी । तापिच्छस्तु तमालस्स्याच्चम्पको हेमपुष्पकः ॥ २१२ ॥
निर्गुण्डी सिन्धुवारेऽतिमुक्तो माधवी लता । वासन्ती चौड्रपुष्पन्तु जपा जाति
सुमालती ॥ २१३ ॥ मल्लिकास्याद्विचकिलः सप्तला नवमालिका । माग
धी यूथिका सा तु पीता स्याद्धेमपुष्पिका ॥ २१४ ॥ प्रियङ्गुः फलिनी श्यामा ब
न्धूको बन्धुजीवकः । करुणी मल्लिकापुष्पो जम्बीरे जम्भजम्भलौ ॥ २१५ ॥
मातुलुङ्गो बीजपूरः करीरक्रकरौ समौ । पञ्चाङ्गुलस्स्यादेरण्डो धातक्यां धातु
पुष्पिका ॥ २१६ ॥ कपिकच्छूरात्मगुप्ता धत्तूरः कनकाह्वयः । कपित्थस्तु द
धिफलो नालिकेरस्तु लाङ्गली ॥ २१७ ॥ आम्रातको बर्वपाकी किंशुकः क्र
कपच्छदः । कोविदारे युगपत्रः शल्लकी तु गजप्रिया ॥ २१८ ॥ वंशो
वेणुर्यवफलस्त्वचिसारस्तृणध्वजः । मस्करः शतपर्वा च स्वननकास्त
कीचकाः ॥ २१९ ॥ तुगाक्षीरी वंशक्षीरी त्वक्क्षीरी वंशरोचना । पू
गे क्रमुकगूवाकौ तस्योद्वेगं पुनः फलं ॥ २२० ॥ ताम्बूलवल्ली ताम्बूली नागप
र्ण्याय वल्ल्यपि । तुम्ब्यलाबूः कृष्णला तु गुञ्जा द्राक्षा तु गोस्तनी ॥ २२१ ॥ मृ
द्वीका हारहूरा च गोक्षुरस्तु त्रिकण्टकः । श्वदंष्ट्रा स्थलशृङ्गाटो गिरि
कर्ण्यपराजिता ॥ २२२ ॥ व्याघ्री निर्दिग्धिका कण्टकारिका स्यादथामृता ।

है०वं० ४ वत्सादनीगुडूचीचविशालात्विन्द्रवारुणी ॥ २२३ ॥ उशीरंवीरणीमू
लेह्रीवेरेवारकंजलं । प्रपुन्नाडस्त्वेडगजोदद्रुघ्नश्चक्रमर्द्दकः ॥ २२४॥
लज्जायांमहारजनंकुसुंभंकमलोत्तरं । लोध्रेतुगालवोरोध्रतिल्वशावरमा
र्जनाः ॥ २२५ ॥ मृणालिनीपुटकिनीनलिनीपंकजिन्यपि । कमलंनलि
नंपद्ममरविन्दंकुशेशयं ॥ २२६ ॥ परंशतशहस्राभ्यांपत्रेराजीवपुष्क
रे । विसप्रसूनंनालीकंतामरसंमहोत्पलं ॥ २२७ ॥ तज्जलात्सर
सःपङ्कात्परेरुड्रुहजन्मजाः । पुण्डरीकंसिताम्भोजमथरक्तसरोरुह
हे ॥ २२८ ॥ रक्तोत्पलंकोकनदङ्कैरविण्यांकुमुद्वती । उत्पलंस्यात्कुव
लयंकुवेलंकुवलंकुवं ॥ २२९ ॥ श्वेतेतुतत्रकुमुदङ्कैरवंगर्द्दभाह्वयं । नी
लेतुस्यादिन्दीवरंहल्लकंरक्तसंध्यके ॥ २३० ॥ सौगंधिकन्तुकह्लारंवी
जकोशोवराटकः । कर्णिकापद्मनालंतुमृणालंतन्तुलंविसं ॥ २३१ ॥ किं
जल्कंकेसरंसंवर्त्तिकातुस्यान्नवंदलं । करहाटःशिफाचस्यात्कन्देस
लिलजन्मनां ॥ २३२ ॥ उत्पलानांतुशालूकंनील्यांशैवालशैवले । शै
वालंशैवलंशेपालंजलाच्छूकनीलिके ॥ २३३ ॥ धान्यंतुसस्यंसीत्यंचव्रीहि
स्तम्बकरिस्ततत् । आशुःस्यात्पाटलोव्रीहिर्गर्भपाकीतुषष्ठिकः ॥ २३४ ॥
शालयःकलमाद्यास्स्युःकलमस्तुकलामकः । लोहितोरक्तशालिस्स्या
न्महाशालिःसुगन्धिकः ॥ २३५ ॥ यवोहयप्रियस्तीक्ष्णशूकस्तोक
स्त्वसौहरित् । मङ्गल्यकोमसूरःस्यात्कलायस्तुसतीनकः ॥ २३६ ॥ मु

रेणुःखण्डिकस्त्वाथचणकोहरिमन्थकः । माषस्तुमदनोनन्दिवृष्यो हे०चं०४
बीजवरोवली ॥ २३७ ॥ मुद्गस्तुप्रघनोलोभ्योवलाटोहरितोहरित् ।
पीतेऽस्मिन्वसुखण्डीरप्रवेलयशसारदाः ॥ २३८ ॥ कृष्णेप्रवरवा
सन्तहरिमन्थजशिम्बिकाः । वनमुद्गेतुवरकनिगूढककुलीनकाः ॥ २३९ ॥
खण्डीचराजमुद्गेतुमकुष्टकमपुष्टकौ । गोधूमेस्तुमनोवल्लेनिष्पावःसित
शिम्बिकः ॥ २४० ॥ कुलत्थस्तुकालवृन्तस्ताम्रवृन्ताकुलत्थिका । आ
ढकीतुवरीवर्णास्यात्कुल्माषस्तुयावकः ॥ २४१ ॥ नीवारस्तुवनव्रीहिः
श्यामाकश्यामकौसमौ । कङ्गुस्तुकङ्गुनीकङ्गुःप्रियंगुःपीततंडुला ॥ २४२ ॥
साक्तष्णामधुकारक्ताशोधिकामुण्टीसिता । पीतामाधव्ययोद्दालःकोद्र
वःकोरदूषकः ॥ २४३ ॥ चीनकस्तुकाककङ्गुर्यवनालस्तुयोनलः । जू
र्णाह्वयोदेवधान्यंजोन्नालाबीजपुष्पिका ॥ २४४ ॥ शणांभङ्गामातुलानीस्या
दुमातुक्षुमाऽतसी । गवेधुकागवेधुस्स्याज्जर्तिलोरण्यजस्तिलः ॥ २४५ ॥
षण्डतिलेतिलपिञ्जस्तिलपेजोऽथसर्षपः । कटम्बकस्तन्तुभोऽथसि
द्धार्थःश्वेतसर्षपः ॥ २४६ ॥ माषादयःशमीधान्यंशूकधान्यंयवादयः ।
स्यात्सस्यशूकंकिंशारुःकणिशंसस्यशीर्षकं ॥ २४७ ॥ स्तबस्तुगुच्छोधा
न्यादेर्नालंकाण्डोऽफलस्तुसः । पलःपलालोधान्यत्वक्तुषोबुसेकडंकरः
॥ २४८ ॥ धान्यमावसितंरिद्धंतत्पूतंनिर्बुसीकृतं । मूलपत्रकरीराग्र
फलकाण्डाधिरूढकाः ॥ २४९ ॥ त्वक्पुष्पंकवकंशाकंदशधाशिग्रुकं

हे०चं० ४ चतत् । तण्डुलीयस्तंडुलेरोमेघनादोल्पमारिषः ॥ २५० ॥ विम्बीर
क्तफलापीलुपर्णीस्यात्तुण्डिकेरिका । जीवन्तीजीवनीजीवाजीवनीयाम
धुस्रवा ॥ २५१ ॥ वास्तुकन्तुक्षारपत्रंपालंक्यांमधुसूदनी । रसोनोल
सुनोऽरिष्टोम्लेच्छकन्दोमहौषधं ॥ २५२ ॥ महाकन्दोरसोनोन्योगृञ्ज
नोदीर्घपत्रकः । भृङ्गराजोभृङ्गरजोमार्कवःकेशरञ्जनः ॥ २५३ ॥ काक
माचीवायसीस्यात्कारिवेल्लःकठिल्लकः । कुष्माण्डकस्तुकर्कारुःकोशात
कीपटोलिका ॥ २५४ ॥ चिर्भटीकर्कटीवालुक्येर्वारुस्त्रपुसीचसा । अर्शो
घ्नस्सूरणःकन्दोश्रृङ्गवेरकमार्द्रकं ॥ २५५ ॥ कर्कोटकःकिलासघ्नस्तिक्त
पत्रःसुगन्धकः । मूलकंतुहरिपर्णसेकिमंहस्तिदन्तकं ॥ २५६ ॥ तृणं
नडादिनीवारादिचशष्पंतुतन्नवं । सौगंधिकंदेवजग्धम्पौरंकतृणरोहिषे
॥ २५७ ॥ दर्भःकुशःकुथोवर्हिःपवित्रमथतेजनः । गुंद्रोमुंजःशरोदू
र्वात्वनन्ताशतपर्विका ॥२५८॥ हरितालीरुहापोटगलस्तुधमनोन
डः । कुरुविन्दोमेघनामामुस्तागुन्द्रातुसोत्तमा ॥ २५९ ॥ वल्वजातुल
पोथेक्षुःस्याद्रसालोऽसिपत्रकः । भेदाःकान्तारपुंड्राद्यास्तस्यमूलंतुमोरटं
॥ २६० ॥ काशस्त्विषीकोघासस्तुयवसंतृणमर्जुनं । विषःक्ष्वेडोरसस्ती
क्ष्णोगरलोऽथहलाहलः ॥ २६१ ॥ वत्सनाभःकालकूटोब्रह्मपुत्रःप्रदी
पनः । सौराष्ट्रिकःशौल्किकेयःकाकोलोदारदोपिच ॥ २६२ ॥ अहि
च्छत्रोमेषशृङ्गःकुष्टवालूकनन्दनाः । कैरातकोहैमवतोमर्कटःकरवीरकः

॥२६३॥ सर्षपोमूलकोगौराद्रकः सत्तुककर्द्दमौ । अंकोल्लसारःकालिङ्गः 
भृङ्गिकोमधुसिक्थकः ॥ २६४ ॥ इन्द्रोलाङ्गलिकोविस्फुलिङ्ग पिङ्गलगो
त्रमाः । मुस्तकोदालवश्चेतिस्थावराविषजातयः ॥ २६५ ॥ कुरंट्याद्याअ
ग्रबीजामूलजास्तूत्पलादयः । पर्वयोनयइक्ष्वाद्यास्कन्दजाःसल्लकी
मुखाः ॥ २६६ ॥ शाल्यादयोबीजरुहाःसंमूर्छजास्तृणादयः । स्युर्वन
स्पतिकायस्यषडेतेमूलजातयः ॥ २६७ ॥ नीलंगुःकृमिरंतर्जःक्षुद्रः
कीटोबहिर्भवः । पुलकास्तूभयेपिस्युःकीकसाःकृमियोनयः ॥ २६८ ॥
काष्ठकीटोघुणोगण्डूपदःकिंचुलुकःकुसूः । भूलतागण्डूपदीतुसिल्यस्र
पाजलौकसः ॥ २६९ ॥ जलालोकाजलूकाचजलोकाजलसर्पिणी । मु
क्तास्फोटाब्धिमण्डूकीशुक्तिःकम्बुस्तुवारिजः ॥ २७० ॥ चिरेखःपोडशा
वर्त्तःशंखोऽथक्षुद्रकम्बवः । शंखनकाःक्षुल्लकाश्चशम्बूकास्तम्बुमा
त्रजाः ॥ २७१ ॥ कपर्द्दस्तुहिरण्यःस्यात्पणास्थिकवराटकौ । दुर्न्नामातु
दीर्घकोशीपिपीलकस्तुपीलकः ॥ २७२ ॥ पिपीलिकातुहीनाङ्गीब्राह्म
णीस्थूलशीर्षिका । घृतेलीपिंगकपिशाथोपजिह्वोपदेहिका ॥ २७३ ॥
बंप्रपदीकालिक्षातुरिक्षायूकाचषट्पदी । गोपालिकामहाभीरुर्गोम
योत्थानुगर्द्दभो ॥ २७४ ॥ मत्कुणस्तुकोलकुणउद्द्दशःकिटिभोत्कुणौ ।
इन्द्रगोपस्त्वग्निरजोवैराटस्तितिभोग्निकः ॥ २७५ ॥ ऊर्णनाभस्तुवायो
जालिकोजालकारकः । कृमिर्मर्कटकोलूतालालास्रावोघ्रपादृसः ॥ २७६ ॥

द्वि० कां० ४ कर्णजलौका तु कर्णकीटा शतपदी च सा । वृश्चिकः शूककीटः स्याद् आल्यालिरलं ध
न्युच्छकंटकः ॥ २७७ ॥ भ्रमरो मधुकृद् भृङ्गः चंचरीकः शिलीमुखः । इन्दि
न्दिरो ली रोलम्बो द्विरेफोऽस्य षडङ्घ्रयः ॥ २७८ ॥ भोज्य न्तु पुष्पमधुनी ख
द्योतो ज्योतिरिङ्गणः । पतङ्गः शलभः क्षुद्रा सरघा मधुमक्षिका ॥ २७९ ॥
माक्षिकादि मधु क्षौद्रं मधूच्छिष्टन्तु सिक्थकं । वर्वणा मक्षिका नीला पुत्तिका तु
पतङ्गिका ॥ २८० ॥ वनमक्षिका तु दंशो दंशी तज्जातिरल्पिका । तैला
टीवरटा गन्धोली स्याच्चीरी तु चीरिका ॥ २८१ ॥ झिल्लीका झिल्लिका व
र्षकरी भृङ्गारिका च सा । पशुस्तिर्य्यङ्हिंस्रेऽस्मिन्व्यालाः श्वापदोऽपि
च ॥ २८२ ॥ हस्ती मतंगजगजद्विपकर्य्यनेकपा मातङ्गवारणमहामृगसामयोनयः । स्तम्बेरमद्विरदसिंधुरनागदन्तिनो दन्तावलः
करटिकुंजरकुम्भिपीलवः ॥ २८३ ॥ इभः करेणुर्गजस्य स्त्री धेनु
का वशापि च । भद्रो मन्द्रो मृगो मिश्रश्चतस्रो गजजातयः ॥ २८४ ॥
कलेप्यजातदन्तस्तु स्यात्कुञ्जोपि मत्कुणः । पंचवर्षो गजो बालः स्यात्पो
तो दशवर्षकः ॥ २८५ ॥ धिक्को विंशतिवर्षस्स्यात्कलभस्त्रिंशदब्दकः ।
यूथनाथो यूथपतिर्मत्ते प्रभिन्नगर्जितौ ॥ २८६ ॥ मदोत्कटो मदक
लः समावुद्धान्तनिर्म्मदौ । सज्जितः कल्पितस्तिर्य्यग्घाती परिणतो ग
जः ॥ २८७ ॥ व्यालो दुष्टगजो गम्भीरवेद्युवमतांकुशः । राजवाह्यः
स्यादुपवाह्यः सन्नाह्यः समरोचितः ॥ २८८ ॥ उदग्रदन्नीषादान्तो

हूर्मी घटना घटा । मदोदानं प्रवृत्तिस्त्ववमथुः करशीकरः ॥ २८९ ॥ हे० चं० ४
हस्तिनासाकरः शुण्डाहस्तोस्याग्रंतुपुष्करं । अंगुलिः कर्णिकाहन्तौविषा
णौस्कन्धआसनं ॥ २९० ॥ कर्णमूलं चूलिकास्याद्दीपिकात्वक्षिकूट
कं । अपांगदेशोनिर्याणंगंडस्तुकरटः कटः ॥ २९१ ॥ अवग्रहोललला
टंस्यादारक्षः कुम्भयोरधः । कुम्भौतुशिरसः पिण्डौकुम्भयोरन्तरं विदुः
॥ २९२ ॥ वातकुम्भस्तुतस्याधोवाहित्थंतुततोप्यधः । वाहित्थाधः प्रति
मानंपुच्छमूलंतुपेचकः ॥ २९३ ॥ दंतभागः पुरोभागः पश्चभागस्तुपार्श्वतः ।
पूर्वस्तुजंघादिदेशोगात्रंस्यात्पश्चिमोवरं ॥ २९४ ॥ बिन्दुजालंपुनः पद्मं
शृंखलोनिगडोऽन्दुकः । हिंजीरस्तुपादपाशोवारिस्तुगजबंधभूः ॥ २९५ ॥
त्रिपदीगात्रयोर्बंधएकस्मिन्नवरेपिच । तोत्रं वेणुकमालानंबन्धस्तम्भों
ऽकुशः सृणिः ॥ २९६ ॥ अपष्टंत्वंकुशस्याग्रंयातमंकुशवारणं । निषादि
नांपादकर्मयतंवीतंतुतद्द्वयं ॥ २९७ ॥ कक्ष्यादूष्यावरत्रास्यात्कण्ठबंधः
कलापकः । घोटकस्तुरगस्तार्क्ष्यस्तुरंगोऽश्वस्तुरंगमः ॥ २९८ ॥ ग
न्धर्वोवासप्तीतीवाहोवाजीहयोहरिः । वडवाश्वाप्रसूर्वामीकिशोरोऽ
ल्पवयाहयः ॥ २९९ ॥ जवाधिकस्तुजवनोरथ्योवोढारथस्ययः । आ
जानेयः कुलीनः स्याज्जद्देशास्तुसैन्धवाः ॥ ३०० ॥ वनायुजाः पारशीकाः
काम्बोजाबाह्लिकादयः । विनीतस्तुसाधुवाहीदुर्विनीतस्तुशूकलः ॥ ३०१ ॥
कश्यः कशार्हो हृद्दत्त्वावर्तैश्रीवत्सकीहयः । पंचभद्रस्तुहृत्पृष्ठमुख

पार्श्वेषुपुष्पितः ॥ ३०२ ॥ पुच्छोरःखुरकेशास्यैः सितैस्स्यादष्टमंगलः ।
सितेतुकर्ककाकाहो खोंगाहः श्वेतपिंगले ॥ ३०३ ॥ पीयूषवर्णस्सेराहः पीते
तुहरियोहये । कृष्णवर्णेतुखुंगाहः कियाहो लोहितोहयः ॥ ३०४ ॥
आनीलस्तुनीलकोऽथ त्रियूहः कपिलोहयः । वोल्लाहस्त्वयमेवस्यात्पां
डुकेसरबालधिः ॥ ३०५ ॥ कुराहस्तुमनाक्पांडुः कृष्णजंघो भवद्यदि । सु
रूहकोगर्दभाभोवोरुखानस्तुपाटलः ॥ ३०६ ॥ कुलाहस्तुमनाक्पीतः कृ
ष्णस्याद्यदिजानुनि । उकनाहः पीतरक्तच्छायः सएवतुक्वचित् ॥ ३०७ ॥
कृष्णरक्तच्छविः प्रोक्तः शोणः कोकनदच्छविः । हरितः पीतहरित
च्छायः सएवहालकः ॥ ३०८ ॥ पंगुलः सितकाचाभोहलाहश्चित्रितो
हयः । ययुरश्वोऽश्वमेधीयः प्रोथमश्वस्यनासिका ॥ ३०९ ॥ मध्यंक
श्यंनिगालस्तुगलोद्देशः खुराश्शफाः । अधःपुच्छंबालहस्तोलांगुलंलोम
बालधिः ॥ ३१० ॥ अपावृत्तपरावृत्तलुठितानितुवेल्लिते । धोरितंवल्गितं
प्लुत्युत्तेजितोत्तेरितानिच ॥ ३११ ॥ गतयः पंचधाराख्यास्तुरंगाणांक्रमादि
माः । तत्रधोरितकंधौर्य्यंधोरणंधोरितंचतत् ॥ ३१२ ॥ बभ्रुकंकशिखि
क्रोडगतिवद्वल्गितंपुनः । अग्रकायसमुल्लासात्कुंचितास्यंनतत्रिकं ॥ ३१३ ॥
प्लुतंतुलंघनंपक्षिमृगगत्यनुहारकं । उत्तेजितंरेचितंस्यान्मध्यवेगेनया
गतिः ॥ ३१४ ॥ उत्तेरितमुपकंठमास्कन्दितकमित्यपि । उत्प्लुत्योत्प्लु
त्यगमनंकोपादिवाखिलैः पदैः ॥ ३१५ ॥ आश्वीनोध्वासयोऽश्वेनदिने

नकेनगम्यते । कवीखलीनंकविकाकवियंमुखयंत्रणं । ३१६ ॥ पंचांगीव हे०वं०४
त्रावटत्रेतुतलिकातलसारकं । दामांचनंपादपाशःप्रक्षरप्रक्खरौसमौ
॥ ३१७ ॥ चर्म्मदंडेकशारश्मीवल्गावक्षेपणीकुशा । पर्य्याणंतुपल्य
यनंवीतंफल्गुहृदयद्विपं ॥ ३१८ ॥ वेसरेश्वतरोवेगसरस्याथक्रमेलकः ।
कुलनाशःकुशनामाशलेभोऽलिमेरुप्रियः ॥ ३१९ ॥ मयोमहाङ्गोवा
संतोद्विककुद्गर्गतंघनः । भूतघ्नउष्ट्रोदाशेरेरवणःकंटकाशनः ॥ ३२० ॥
दीर्घग्रीवःकेलिकीर्णःकरभस्तुचिहायनः । सतुश्रृंखलकोदारुमयैःस्या
त्पादबन्धनैः ॥ ३२१ ॥ गर्द्दभस्तुचिरमेहीबालेयोरासभःखरः । चक्री
वान्शंकुकर्णोऽथऋषभोवृषभोवृषः ॥ ३२२ ॥ वाडवेयस्सौरभेयोभद्रः
शक्वरशाक्वरौ । उक्षानड्वान्ककुद्मान्गोबलीवर्द्दस्त्वशाद्दरः ॥ ३२३ ॥
उक्षातुजातोजातोक्षःस्कंधिकस्कन्धवाहकः । महोक्षस्स्याद्वृद्धतरोवृ
द्धोक्षस्तुजरद्गवः ॥ ३२४ ॥ षण्ढोचितआर्षभ्यःकूटोभग्नविषाणकः ।
इडुरेणोपतिःषंढोवृषोमदकटोहलः ॥ ३२५ ॥ वत्सःशकृत्करिस्तर्णो
दम्यवत्सतरौसमौ । नस्योतोनस्तितःषष्ठवाट्तुस्याद्युगपार्श्वगः ॥ ३२६ ॥
युगादीनांतुवोढारोयुग्यप्रासंग्यशाकटाः । सतुसर्वधुरीणस्स्यात्सर्वावहति
योधुरं ॥ ३२७ ॥ एकधुरीणैकधुरावुभावेकधुरावहे । धुरीणधुर्य्यधौरेय
धौरेयकधुरंधराः ॥ ३२८ ॥ धुर्वहेऽथगलिर्दुष्टवृषःशक्तोप्यधूर्वहः । स्यौ
रीपृष्ठ्यपृष्ठवाह्यौद्विदन्षोडन्द्विषड्दौ ॥ ३२९ ॥ वहस्कन्धांसकूटं

है० कां० ४ तुककुदं नैचिकंशिरः। विषाणंकूणिकाशृङ्गंसास्नातुगलकम्बलः॥ ३३०॥
गौस्सौरभेयीमाहेयीमहासुरभिरर्जुनी। उस्राघ्न्यारोहिणीशृंगिण्यनड्वा
ह्यनडुह्युषा ॥ ३३१॥ तंपानिलिंपिकातंबासातुवर्णैरनेकधा। प्रष्ठौही
गर्भिणीबंध्यावशावेहद्वृषोपगा ॥ ३३२ ॥ अवतोकास्रवद्गर्भावृषाक्रा
न्तातुसंधिनी। प्रौढवत्साबष्कयिणीधेनुस्तुनवसूतिका ॥ ३३३॥ प
रेष्टुर्बहुसूतिस्स्याद्गृष्टिस्त्वेकप्रसूतिका। प्रजनेकाल्योपसर्यासुखदो
ह्यातुसुव्रता ॥ ३३४॥ दुःखदोह्यातुकरटाबहुदुग्धातुबंजुला। द्रोणदु
ग्धाद्रोणदुघापीनोघ्नीपीवरस्तनी ॥ ३३५॥ पीतदुग्धातुधेनुष्यासंस्थितादु
ग्धबन्धकेः। नैचिकीतूत्तमागोषुपलिक्नीबालगर्भिणी ॥ ३३६॥ समांस
मीनानुसयाप्रतिवर्षंप्रजायते। स्याच्चंडीतुसुकरावत्सकामातुवत्सला
॥ ३३७॥ चतुर्हायणीद्व्येकहायन्येकादिवर्षिका। आपीनमूधो
गोविट्तुगोमयंभूमिलेपनं ॥ ३३८॥ तच्छुष्केतुगोर्ग्रंथिःकरीषश्छग
णोऽपि। गवांसर्वंगव्यंव्रजेगोकुलंगोधनंधनं ॥ ३३९॥ प्रजनेस्यादु
पसरःकीलःपुष्पलकःशिवः। बन्धनंदामसन्दानंपशुरज्जुस्तुदामनी
॥ ३४०॥ अजस्स्याच्छगलश्छागश्छगोवस्तःस्तभःपशुः। अजातु
च्छागिकामंजासर्वभक्षागलस्तनी॥ ३४१॥ युवायोवर्क्करोडवोतुमेषोर्णायु
हुडोरणाः। उरभ्रोमेंढकोवृष्णिरेडकोरोमशोहुडुः ॥ ३४२॥ संफलः
शृंगिणोभेडोमेषीतुकुररीरुजा। जालकिन्यविलावेण्यथैडक्कःशिम्बुवा

हकः ॥ ३४३ ॥ पृष्ठशृंगोवनाजस्स्याद्विद्धेश्चत्ववेःपरं । सेरुंदूर्सम हे॰चं॰
रीसंचकुक्कुरेवक्रबालधिः ॥ ३४४ ॥ अस्थिभुग्भषणः सारमेयःकौलेय
कःश्शुनः । श्शुनिःश्वानोगृहमृगःकुक्कुरोग्रचिजागरः ॥ ३४५ ॥ रसना
लिङ्नपरःकीलशायिवश्वांदुकाः । शृगालावृकोवृकदंशःश्वाऽलर्क्कस्तुसरो
गितः ॥ ३४६ ॥ विश्वकद्रुस्तुकुशलोमृगव्येसरमाश्शुनी । विड्वरःशू
करेग्राम्येमहिषोयमवाहनः ॥ ३४७ ॥ रजस्वलोवाहरिपुर्लुलाप
सैरिभोमहः । धीरस्कन्धःकृष्णशृंगोजरन्तोदंशभीरुकः ॥ ३४८ ॥
रक्ताक्षःकासरोहंसःकालीननयलालिकौ । अरण्यजेऽस्मिन्गवलःसिं
हःकंठीरवोहरिः ॥ ३४९ ॥ हर्य्यक्षःकेसरीभारिःपंचास्योनखरायु
धः । महानादःपंचशिखःपारीन्द्रःपत्यरीमृगात् ॥ ३५० ॥ श्वेतपिङ्गो
ध्ययव्याघ्रोदीपीशार्द्दूलचित्रकौ । चित्रकायःपुंडरीकस्तरक्षुस्तुमृगादनः
॥ ३५१ ॥ शरभःकुंजरारातिरुत्पादकोऽष्टपादपि । गवयस्स्याद्वना
बोगोसदृक्षोऽश्ववारणः ॥ ३५२ ॥ खड्गीवाध्रीणसःखड्गोगंडकोऽथकिरः
किरिः । भूदारःशूकरःकोलोवराहःक्रोडपोत्रिणौ ॥ ३५३ ॥ घोणीघृष्टिः
स्तब्धरोमादंष्ट्रीकिटयास्यलांगुलौ । आखनिकःशिरोमर्म्मास्थूलनासोबक
व्रजः ॥ ३५४ ॥ भाल्लूकभालूकर्क्षाच्छभल्लभल्लूकभल्लुकाः । शृगालो
जम्बुकःफेरुःफेरण्डःफेरवःशिवा ॥ ३५५ ॥ घोरवासीभूरिमायोगो
मायुर्मृगधूर्त्तकः । हूरवोभरुजःक्रोष्टाशिवाभेदेऽल्पकेकिखिः ॥ ३५६ ॥

हे०चं०४ विहंगमखगौपतगौविहंगःशकुनिःशकुन्तशकुनौविवयश्शकुन्ताः ।
नभसंगमोविकिरिपत्ररथौविहायोद्विजपक्षिविष्किरपतत्रिपतत्पतत्
त्राः ॥ २८२॥ पित्सन्नीडांडजौगौकास्तुंडंतुचंचूस्त्रूपाटिका । चोटिश्च
पत्रंपतत्रंपिच्छंवाजंस्तनूरुहं ॥२८३॥ पक्षोगरुच्छदस्थापिपक्ष
मूलन्तुपक्षतिः । प्रडीनोड्डीनसंडीनडयनानिनभोगतौ ॥ २८४ ॥
पेशीकोशोंडेकुलायोनीडेकेकीतुसर्पभूक् । मयूरबर्हिणौनीलकंठोमेघ
सुहृच्छिखी ॥२८५॥ सुक्लापांगोऽस्यवाक्केकापिच्छंबर्हंशिखण्डकः ।
प्रचलाकःकलापस्तुमेचकश्चन्द्रकस्समौ ॥ २८६॥ वनप्रियःपरभृत
स्ताम्राक्षःकोकिलःपिकः । कलकण्ठःकाकपुष्टःकाकोरिष्टःसकृत्प्रजः
॥ २८७ ॥ आत्मघोषश्चिरजीवीघूकारिःकरटोद्विकः । एकदृग्बलि
भुग्ध्वांक्षोमौकुलिर्वायसोन्यभृत् ॥ २८८ ॥ वृद्धद्रोणदग्धकृष्णपर्वते
भ्यस्त्वसौपरः । वनाश्रयस्तुकाकोलोमुद्गस्तुजलवायसः ॥ २८९ ॥
घूकेनिशाटःकाकारिःकौशिकोलूकपेचकाः । दिवांधोऽथनिशावेदीकुक्कुट
स्तरणायुधः ॥ २९० ॥ कृकवाकुस्ताम्रचूडोविवृताक्षःशिखंडिकः । हंसा
स्तुचक्रांगवक्रांगमानसौकःसितच्छदाः ॥ २९१ ॥ राजहंसास्त्वमीचंचुच
रणैरतिलोहितैः । मल्लिकाक्षास्तुमलिनैर्धार्तराष्ट्राःसितेतरैः ॥ २९२॥
कादम्बास्तुकलहंसाःपक्षैस्स्यादतिधूसरैः । वारलावरलाहंसीवारटाच
रटाचसा ॥ २९३॥ दार्वाघाटःशतपत्रःखंजरीटस्तुखंजनः । सार

सस्तु लक्ष्मणः स्यात्पुष्कराख्यः कुरंकरः ॥ ३९४ ॥ सारसी लक्ष्मणाथ क्रुङ्क्रौं
चेचा वेकिकीदिविः । चातकस्तोककावप्पीहः सारङ्गो नभोंबुपः ॥ ३९५ ॥
चक्रवाको रथाङ्गाह्वः कोकोद्वंद्वचरोऽपि च । टिट्टिभस्तु कटुक्वाणाश्च्युत्पाद
शयनस्स्वसः ॥ ३९६ ॥ चटको गृहबलिभुक्कलविंकः कुलिंगकः । त
स्ययोषित्तु चटका स्त्र्यपत्ये चटका तयोः ॥ ३९७ ॥ पुमपत्ये चाटकैरो दात्यू
हः कालकंठकः । जलरंको जलरंजो बकेकह्वो बकोटवत् ॥ ३९८ ॥
बलाहकस्त्या हलाको बलाका विशकंठिका । भृङ्गः कलिङ्गो धूम्याटः कङ्क
स्तु कामनच्छदः ॥ ३९९ ॥ लोहपृष्ठो दीर्घपादः कर्कटस्कंधमल्लकः ।
चिल्लः शकुनिरातापी श्येनः पत्त्रीशशादनः ॥ ४०० ॥ दाक्षाय्यो दूरदृ
गृध्रोऽयो क्रोशोऽमस्त्यनाशनः । कुररः कीरस्तु शुको रक्तपादः पलादनः
॥ ४०१ ॥ शारिका तु पीतपादा गोरटो गोकिराटिका । स्याच्चर्मचटकायां तु
जतुका जिनपत्त्रिका ॥ ४०२ ॥ वल्गुलिका मुखविष्ठा परोष्णी तैलपायिका ।
कर्करेटुः करेटुस्स्यात्करटुः कर्करटुकः ॥ ४०३ ॥ आतिराटिः शारि
स्स्यात्कृकणक्रकरौ समौ । भासे शकुन्तः को यष्टौ शिखरी जलकुक्कुभः ॥ ४०४ ॥
शारवनः कलरवः कपोतो रक्तलोचनः । ज्योत्स्नाप्रिये चलचंचु चकोर वि
षसूचकाः ॥ ४०५ ॥ जीवंजीवस्तु गुन्द्रालो विषदर्शनमृत्युकः । व्याघ्रा
टस्तु भरद्वाजः प्लवस्तु गात्रसंप्लवः ॥ ४०६ ॥ तित्तिरिस्तु खरकोणो हारी
तस्तु मृदङ्कुरः । कारण्डवस्तु मल्लस्तु गृहस्थंचुसूचिकः ॥ ४०७ ॥

है॰चं॰ ४ कुम्भकारः कुक्कुटस्तु कुक्कुभः कुहकस्वनः । पक्षिणा येन गृह्यन्तेपक्षिणोऽ
न्येसदीपकः ॥ ४०८ ॥ छेका गृह्याश्चतेगेहासक्तायेमृगपक्षिणः । मत्स्यो
मीनः पृथुरोमा झषोवैसारिणोऽण्डजः ॥ ४०९ ॥ संघचारी स्थिरजिह्व
आत्माशी स्वकुलक्षयः । विसारः शकली शल्की शम्बरोऽनिमिषस्तिमिः
॥ ४१० ॥ सहस्रदंष्ट्रेवाटालः पाठीनेचित्रवल्लिकः । शकुलेस्यात्कल
कोऽथगंडकः शकुलार्भकः ॥ ४११ ॥ उलूपी शिशुकेप्रोष्ठीशफरश्वेतकोल
लके । नलमीनश्चिलिचिमो मत्स्यराजस्तुरोहितः ॥ ४१२ ॥ मद्गुरस्तुरा
जशृङ्गः शृङ्गी तु मद्गुरप्रिया । क्षुद्राण्डमत्स्यजातं तु पोताधानं जलाण्डकं
॥ ४१३ ॥ महामत्स्यास्तु चीरील्लितिमिङ्गिलगिलादयः । अथयादांसि
नक्राद्या हिंसका जलजन्तवः ॥ ४१४ ॥ नक्रः कुम्भीर आलास्यः कुम्भी महा
मुखोपिच । तालुजिह्वः शंखमुखोगोमुखो जलशूकरः ॥ ४१५ ॥ शिशु
मारस्तशम्बुकूर्म्म उग्रवीर्य्योमहावसः । उद्रस्तु जलमार्ज्जारः पानीयन
कुलोवसी ॥ ४१६ ॥ ग्राहेतन्तुस्तन्तुनागोऽवहारोनागतन्तुणौ । अन्येऽ
पियादोभेदास्स्युर्बहवो मकरादयः ॥ ४१७ ॥ कुलीरः कर्कटः पिङ्गचक्षुः
पार्श्वोदरप्रियः । द्विधागतिः षोडशांघ्रिः कुरचिल्लोवहिश्चरः ॥ ४१८ ॥
कच्छपः कमठः कूर्म्मः क्रोडपादश्चतुर्गतिः । पंचाङ्गगुप्तदौलेयौ जीवघः
कच्छपीदुली ॥ ४१९ ॥ मंडूकेहरिशालूरप्लवभेकप्लवंगमाः । वर्षाभूः
प्लवगः शालुरजिह्वव्यंगदर्दुराः ॥ ४२० ॥ स्थलेनराद्ययोयेतुतेजलेजल

पूर्विकाः । अंडजाः पक्षिसर्पाद्याः पोतजाः कुंजरादयः ॥ ४२१ ॥ रस हे०चं० ४
आमद्यकीटाद्यान्नगवाद्या जरायुजाः । यूकाद्याः स्वेदजा मत्स्यादयः संमू
र्च्छनोद्भवाः ॥ ४२२ ॥ उद्भिदः खंजनाद्योपपादुकादेवनारकाः । र
सयोनयइत्यष्टावुद्भिदुद्भिज्जमुद्भिदं ॥ ४२३ ॥

इत्याचार्य्यहेमचन्द्रविरचितायामभिधान
चिन्तामणौनाममालायांतिर्य्यक्काण्डश्चतुर्थः



स्युर्नारकास्तुपरेतप्रेतयात्यातिवाहिकाः । आजूर्विष्टिर्जीननानुकारणा हे०चं० ५
तीव्रवेदना ॥ १ ॥ नरकस्तुनारकःस्यान्निरयोदुर्गतिस्त्रसः । घनोदधि
घनवाततनुवाततनभःस्थिताः ॥ २ ॥ रत्नशर्कराबालुकापंकधूमतमप्रभाः ।
महातमप्रभावेत्यधोधोनरकभूमयः ॥ ३ ॥ क्रमात्पृथुतराश्चप्राथत्रिंश
त्पंचविंशतिः । पंचपंचदशत्रीणिलक्षाण्यूनंचपंचभिः ॥ ४ ॥ लक्षं
पञ्चैवनरकावासाःसीमंतकादयः । एतासुस्युःक्रमेणाथपातालंवडवामु
खं ॥ ५ ॥ बलिवेश्माधोभुवनंनागलोकोरसातलं । रंध्रंबिलंनिर्व्यथनंकु
हरंसुषिरंशुषिः ॥ ६ ॥ छिद्रंरोपंविवरंचनिम्नंरोकंवपांतरं । गर्त्तश्व
भ्रावटागाधेदरास्तुविवरेभुवः ॥ ७ ॥

इत्याचार्य्यहेमचन्द्रविरचितायामभिधानचि
न्तामणौनाममालायांनरककाण्डःपंचमः

है० चं० ६

स्याल्लोको विष्टपंविश्वंभुवनंजगतीजगत् । जीवाजीवाधारःक्षेत्रंलोकोऽलो
कस्ततोऽन्यथा ॥ १॥ क्षेत्रज्ञआत्मापुरुषश्चेतनः सपुनर्भवी । जीव
स्स्यादसुमान्सत्वंदेहभृज्जन्तुजन्तवः ॥ २॥ उत्पत्तिर्जन्मजनुषीज
ननंजनिरुद्भवः । जीवेऽसुर्जीवितप्राणाजीवातुर्जीवनौषधं ॥ ३ ॥
श्वासस्तुश्वसितंसोन्तर्मुखउच्छ्वासआहरः । आनोबहिर्मुखस्तुस्यान्नि
श्वासःपानमत्यनः ॥ ४ ॥ आयुर्जीवितकालोन्तःकरणंमानसंमनः ।
हृच्चेतोहृदयंचित्तंस्वान्तंगूढपथोच्चले ॥ ५॥ मनसःकर्मसंकल्पस्स्या
दथोशर्मनिर्वृतिः । सातंसौख्यंसुखंदुःखंत्वसुखंवेदनाव्यथा ॥ ६ ॥
पीडाबाधार्तिराभीलंकृच्छ्रंकष्टंप्रसूतिजं । आमनस्यंप्रगाढंस्यादाधि
स्स्यान्मानसीव्यथा ॥ ७ ॥ सपश्चात्कृतिनिष्पन्नाहृतोत्वनुतापीड
नि । क्षुज्जाठराग्निजापीडाव्यापादोद्रोहचिन्तनं ॥ ८ ॥ उपज्ञाज्ञा
नमाद्यंस्याच्चर्चासंख्याविचारणा । वासनाभावनासँस्कारोऽनुभूताद्यबि
स्मृतिः ॥ ९ ॥ निर्णयोनिश्चयोन्तस्सम्प्रधारणासमर्थनं । अविद्याहं
मत्यज्ञानेभ्रान्तिर्मिथ्यामतिर्भ्रमः ॥ १० ॥ सन्देहद्वापरारेकाविचिकित्सा
तुसंशयः । परभागोगुणोत्कर्षोदोषेत्वादीनवास्रवौ ॥ ११ ॥ स्याद्रू
पंलक्ष्मसांभावश्चात्मप्रकृतिरीतयः । सहजोरूपतत्वञ्चधर्मसर्गौनिस
र्गवत् ॥ १२ ॥ शीलंसतत्वंसंसिद्धिरवस्थागुदशास्थितिः । स्नेहःप्रीतिः

प्रेम हार्द्दं दाक्षिण्यं त्वनुकूलता ॥ १३ ॥ विप्रतिसारोऽनुशयः पश्चात्ता      दृ॰ वं॰ ६
पोऽनुतापश्च । अवधानसमाधानप्रणिधानानि तु समाधिस्तु ॥ १४ ॥
धर्म्मः पुण्यं वृषः श्रेयः सुकृतं नैनियतौ विधिः । दैवं भाग्यं भागधेयं दिष्टं चाप्य
स्त्रुतं त्वशुभं ॥ १५ ॥ अलक्ष्मीर्निर्ऋतिः कालकर्णिका स्यात् तथाशुभं । दु
ष्कृतं दुरितं पापमेनः पाप्मा च पातकं ॥ १६ ॥ किल्बिषं कलुषं किण्वं कल्म
षं वृजिनं तमः । अंहः कल्कमघं पंकमुपाधिर्धर्म्मचिन्तनं ॥ १७ ॥ त्रिव
र्गो धर्मकामार्थास्तुर्वर्गः समोक्षकाः । बलं तु यो स्तु भेदः प्रमादोऽनवधान
ता ॥ १८ ॥ छन्दोऽभिप्राय आकूतं मतभावाशया अपि । हृषीकमक्षं करं
णं श्रोत्रः खं विषयीन्द्रियं ॥ १९ ॥ बुद्धीन्द्रियं स्पर्शनादि पाण्यादि तु क्रियें
द्रियं । स्पर्शादयस्त्विन्द्रियार्था विषया गोचरा अपि ॥ २० ॥ शीते तुषारः शि
शिरः सुषीमः शीतलो जडः । हिमोऽथोष्णे तिग्मस्तिक्ष्णास्तीव्रश्चण्डः
खरः पटुः ॥ २१ ॥ कोष्णः कवोष्णः कदुष्णो मंदोष्णश्चेषदुष्णवत् । निष्ठु
रः कक्खटः क्रूरः परुषः कर्कशः खरः ॥ २२ ॥ दृढः कठोरः कठिनो ज
रठः कोमलः पुनः । मृदुलो मृदुसोमालः सुकुमार अकर्कशः ॥ २३ ॥
मधुरस्तु रसज्येष्ठो गुल्यः स्वादुर्मधूलकः । आम्लस्तु पाचनो दन्तशठो
ऽथ लवणः सरः ॥ २४ ॥ सर्वरसोऽथ कटुः स्याद् दीपनो मुखशोधनः ।
वक्त्रभेदी तु तिक्तोऽथ कषायस्तुवरो रसः ॥ २५ ॥ गंधो जनमनोहारी सुर
भिर्घ्राणतर्पणः । समाकर्षी तु निर्हारी स आमोदो विदूरगः ॥ २६ ॥

दे०च० ६ विमर्द्दोत्थःपरिमलोऽथामोदीमुखवासनः । इष्टगन्धस्सुगन्धिस्स्याद्दुर्गं
धःपूतिगंधिकः ॥ २७ ॥ आमगन्धितुविस्रंस्याद्वर्णाःश्वेतादिकाअमी
। श्वेतःश्येतःसितश्शुक्लोहरिणोविशदःशुचिः ॥ २८ ॥ अवदातगौरश्शु
भ्रबलक्षधवलार्जुनाः । पांडुरःपाण्डरःपांडुरीषत्पांडुस्तुधूसरः ॥ २९ ॥
कापोतस्तुकपोताभःपीतस्तुसितरञ्जनः । हारिद्रःपीतलोगौरःपीतनीलः
पुनर्हरित् ॥ ३० ॥ पालाशोहरितस्तास्त्वकाभोरक्तस्तुरोहितः । माञ्जि
ष्ठोलोहितःशोणःश्वेतरक्तस्तुपाटलः ॥ ३१ ॥ अरुणोबालसंध्याभःपी
तरक्तस्तुपिञ्जरः । कपिलःपिङ्गलःश्यावःपिशंगःकपिशोहरिः ॥ ३२ ॥
बभ्रुःकद्रुःकडारस्तुपिङ्गेकृष्णस्तुमेचकः । स्याद्रामःश्यामलःश्यामः
कालोनीलोऽसितःशितिः ॥ ३३ ॥ रक्तश्यामेपुनर्धूम्रधूमलावथकर्बुरः ।
किर्मीरएतःशबलश्चित्रकल्माषचित्रलाः ॥ ३४ ॥ शब्देनिनादोनिर्घोषः
स्वानोध्वानःस्वरोध्वनिः । निह्रादोनिनदोह्रादोनिस्वानोनिस्वनःस्वनः
॥ ३५ ॥ रवोनादःस्वनिर्घोषःसंव्याङ्भ्योरावआरवः । क्वणनंनिक्वणःक्वा
णोनिक्वाणश्चक्वणोरणः ॥ ३६ ॥ षड्जऋषभगान्धारमध्यमःपंचमस्त
था । धैवतोनिषधस्सप्ततन्त्रीकण्ठोद्भवाःस्वराः ॥ ३७ ॥ तेमन्द्रमध्यताराः
स्युरुरःकण्ठशिरोद्भवाः । रुदितंक्रन्दितंक्रुष्टंतद्दयष्टंतुगह्वरम् ॥ ३८ ॥
मूर्च्छागुणानुरागोत्थःप्रणादःसीत्कृतंनृणां । पर्दनंगुदजेशब्देकर्दनं
कुक्षिसम्भवे ॥ ३९ ॥ क्ष्वेडातुसिंहनादोऽथशब्दनंस्तुभटध्वनिः ।

कोलाहलः कलकलस्तुमुलो व्याकुलो रवः ॥ ४० ॥ मर्मरो वस्त्रपर्णादेर्भूष हे० कां० ६
णानांतु शिञ्जितं । हेषाह्रेषा तुरंगाणां गजानां गर्जबृंहिते ॥ ४१ ॥ विस्फा
रो धनुषां हंभारम्भे गोर्जलदस्य च । स्तनितं गर्जितं गर्जिः स्वनितं रसिता
दि च ॥ ४२ ॥ कूजितं स्याद्विहंगानां तिरश्चां रुतवाशिते । वृकस्य रेषणं रे
षा बुक्कनं भषणं शुनः ॥ ४३ ॥ पीडितानां तु कणितं मणितं रतकूजितं । प्र
क्वाणः प्रक्वणस्तन्त्र्या मर्द्दलस्य तु गुंदलः ॥ ४४ ॥ शिञ्जनं तु कीचका
नां भेर्य्या नादस्तु टंकुरः । तारोऽत्युच्चैर्ध्वनिर्मन्द्रो गम्भीरो मधुरः कलः
॥ ४५ ॥ काकली तु कलः सूक्ष्म एकतालो लयानुगः । काकुर्ध्वनिविकार
स्स्यात्प्रतिश्रुत्प्रतिध्वनिः ॥ ४६ ॥ संघाते प्रकरौघवारनिकरव्यूहाः
समूहश्चयः सन्दोहः समुदायराशिविसरव्राताः कलापो व्रजः । कूटं म
ण्डलचक्रवालपटलस्तोमा गणः पेटकं वृन्दं चक्रकदम्बके समुदयः पुंजो
त्करौ संहतिः ॥ ४७ ॥ समवायो निकुरंबं जालं निवहसंचयौ । जातं मि
श्रं तद्यूथं संघसार्थौ तु देहिनां ॥ ४८ ॥ कुलं त्वेषां सजातीनां निकाय
स्तु सधर्म्मिणां । वर्गस्तु सदृशां स्कंधो नरकुञ्जरवाजिनां ॥ ४९ ॥ ग्रामो वि
षयशब्दास्त्रभूतेन्द्रियगुणाद्व्रजे । समजस्तु पशूनां स्यात्समाजस्त्वन्यदेहि
नां ॥ ५० ॥ स्युः कादीनां गणे शौकमायूरतैत्तिरादयः । भिक्षादेर्भैक्षसाह
स्रगार्भिणयौवनादयः ॥ ५१ ॥ गोत्रार्थप्रत्ययान्तानां स्युरौपगविकादयः ।
उक्षादेरौक्षकं मानुष्यकं वार्द्धकमौष्ट्रकं ॥ ५२ ॥ स्याद्राजपुत्रकं राजकन्य

कमजमातृकं। वात्सकौरभ्रकैदारवार्धकंकमचित्तानामपि ॥ ५३ ॥ हास्तिकन्तु
हस्तिनां स्यादापूपिकाद्यचेतसां। धेनूनां धेनुकं धेन्वं तनां गोधेनुकादयः
॥ ५४ ॥ केदारकं कैदारकं कैदार्यमपि तद्गणे। ब्राह्मणादेर्ब्राह्मण्यं
माणव्यं वाडव्यमित्यपि ॥ ५५ ॥ गणिकानां तु गाणिक्यं केशानां कैश्यकैशि
के। अश्वानामाश्वमश्वीयं पर्शूनां पार्श्वमप्यथ ॥ ५६ ॥ वातूलवात्ये वातानां
गव्या गोत्रा पुनर्गवां। पाश्या खल्यादि पाशादेः खलादेः खलिनी निभाः
॥ ५७ ॥ जनता बंधुता ग्रामता गजता सहायता। जनादीनां रथ्या तु स्या
द्रथ्या रथकट्यया ॥ ५८ ॥ राजिर्लेखा ततिर्वीथी मालाल्यावलिपंक्तयः।
धारणी श्रेण्युभे तु द्वौ युगलं द्वितयं द्वयं ॥ ५९ ॥ युगं द्वैतं यमं द्वंद्वं युग्मं य
मलयामले। षण्णुभ्योगो युगं युग्मपरं षट्केतु षड्गवं ॥ ६० ॥ परःशताद्या
स्तेयेषां परा संख्या शतादिकात्। प्राज्यं प्रभूतं प्रचुरं बहुलं बहु पुष्कलं ॥ ६१ ॥
भूयिष्ठं पुरुहं भूयो भूयिष्ठं पुरु स्फिरं। स्तोकं क्षुल्लं तुच्छमल्पं दभ्रं अणु तलि
नानि च ॥ ६२ ॥ तनु क्षुद्रं कृशं सूक्ष्मं पुनः श्लक्ष्णं च पेलवं। त्रुटिर्मात्रा
लवो लेशः कणो ह्रस्वं पुनर्लघु ॥ ६३ ॥ अत्यल्पेऽल्पिष्ठमल्पीयः कनीयो
ऽणीय इत्यपि। दीर्घायते समे तुंगमुच्चमुन्नतमुद्धुरं ॥ ६४ ॥ प्रांशूच्छ्रि
तमुदग्रं च न्यग्नीचं ह्रस्वमंथरे। खर्वं कुब्जं वामनं च विशालं तु विशंकटं
॥ ६५ ॥ पृथु पृथुलं व्यूढं विकटं विपुलं बृहत्। स्फारं वरिष्ठं विस्तीर्णं
ततं बहु महद्गुरुः ॥ ६६ ॥ दैर्घ्यमायाम आनाह आरोह समुच्छ्रयः।

उत्सेधउदयोच्छ्रायौपरिणाहोविशालता ॥ ६७ ॥ प्रपंचाभोगविस्तार 
व्यामाःशब्देसविस्तरः। समासस्तुसमाहारःसंक्षेपःसंग्रहोऽपिच॥ ६८ ॥
सर्वंसमस्तमन्यूनंसमग्रंसकलंसमं । विश्वाशेषाखण्डकृत्स्नन्यथ्वाणिनि
खिलाखिले ॥ ६९ ॥ खंडेऽर्द्धशकलंभिन्नंनेमशल्कदलानिच। अंशोभा
गस्तुवंटस्स्यात्पादस्तुसतुरीयकः ॥ ७० ॥ मलिनंकच्चरंम्लानंकश्मलंचम
लीमसं। पवित्रंपावनंपूतंपुण्यंमेध्यमथोज्ज्वलं ॥ ७१ ॥ विमलंविशदंवी
ध्रमवदातमनाविलं। विशुद्धंशुचिचोक्षंतुनिःशोध्यमनवस्करं ॥ ७२ ॥
निर्णिक्तंशोधितंमृष्टंधौतंक्षालितमित्यपि । सम्मुखीनमभिमुखंपराचीनंपरा
ङ्मुखं ॥ ७३ ॥ मुख्यंप्रकृष्टंप्रमुखंप्रवर्हंवर्य्यंवरेण्यंप्रवरंपुरोगं। अनुत्तरंप्र
ग्रहरंप्रवेकंप्रधानमग्रेसरमुत्तमाग्रे ॥ ७४ ॥ ग्रामण्यग्रण्यग्रिमजात्याग्र्या
नुत्तमान्यनवरार्द्ध्यवरे । श्रेष्ठपरार्द्ध्यपराणिश्रेयसितुश्रेष्ठसत्तमपुष्कलव
त् ॥ ७५ ॥ स्युरुत्तरपदेव्याघ्रपुंगवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः
स्तल्लजस्तमतल्लिका ॥ ७६ ॥ मचर्चिकाप्रकांडौघौप्रशस्यार्थप्रकाशकाः।
गुणोपसर्जनोपाग्र्याण्यप्रधानेऽधमंपुनः ॥ ७७ ॥ निकृष्टमणकंगर्ह्य
मवद्यंकारडकुत्सिते। अपकृष्टंप्रतिकृष्टंयाप्यंरेफोऽवमंब्रुवं ॥ ७८ ॥
खेटंपापमपशदंकुपूयंचेलमर्वंच । तदासेचनकंयस्याद्दर्शकाद्दृगतृप्य
ति ॥ ७९ ॥ चारुहारिरुचिरंमनोहरंवल्गुकान्तमभिराममबन्धुरे। वा
मरुच्यसुषमाणिशोभनंसञ्जुमञ्जुलंमनोरमाणिच ॥ ८० ॥ साधु

वि॰ चं॰ ६ रम्यमनोज्ञानिपेशलंहृद्यस्तुन्दरे। काम्यंकम्रंकमनीयंसौम्यंचमधुरंप्रि
यं॥ ८१॥ व्युष्टिःफलमसारन्तुफल्गुशून्यन्तुरिक्तकं। शून्यंतुच्छंवशि
कंचनिविडन्तुनिरन्तरं॥ ८२॥ निविरीसंघनंसान्द्रंनीरंध्रंबहलंदृढं।
गाढमविरलंचाथविरलंतनुपेलवं॥ ८३॥ नवंनवीनंसद्यस्कंप्रत्यग्रं
नूतननूतने। नव्यंचाभिनवेजीर्णेपुरातनंचिरंतनं॥ ८४॥ पुराणंप्रतनंप्र
त्नंजरन्मूर्त्तंतुमूर्त्तिमत्। उच्चावचंनैकभेदमतिरिक्ताधिकेसमे॥ ८५॥
पार्श्वंसमीपंसविधंसमीपाभ्यासंसवेशान्तिकसन्निकर्षाः। सदेशमभ्यग्रसनी
डसन्निधानान्युपान्तंनिकटोपकंठे॥ ८६॥ सन्निकृष्टसमर्य्यादाभ्य
र्णान्यासन्नसन्निधी। अव्यवहितेऽनन्तरंसंसक्तमपटान्तरं॥ ८७॥
नेदिष्ठमंतिकतमंविप्रकृष्टपरेपुनः। दूरेऽतिदूरेदविष्ठंदवीयोऽथसनातनं
॥ ८८॥ शाश्वतानश्वरेनित्यंध्रुवंस्थेयस्त्वतिस्थिरं। स्थास्नुस्थेष्ठंतत्कू
टस्थंकालरूप्येकरूपतः॥ ८९॥ स्थावरंतुजंगमान्यज्जंगमंतुचसंच
रं। चराचरंजगदिंगंचरिष्णुश्चाथचंचलं॥ ९०॥ तरलंकम्पनंकम्प्रंप
रिप्लवचलाचले। चटुलंचपलंलोलंचलंपारिप्लवास्थिरे॥ ९१॥ ऋजा
वजिह्मप्रगुणावधाग्रेऽवनतानते। कुंचितंनतमाविद्धंकुटिलंवक्रवे
ल्लिते॥ ९२॥ वृजिनंभंगुरंभुग्नमरालंजिह्ममूर्मिमत्। अनुगेऽनुप
दान्वक्षान्वंच्येकाक्येकएककः॥ ९३॥ एकाग्रानायनसर्गाग्रास्यैकाग्रं
चतद्गतं। अनन्यवृत्त्यैकायतनगतंचाथाद्यमादिमं॥ ९४॥ पौरस्त्यंप्रथमं

पूर्वमादिरग्रमथान्तिमं। जघन्यमन्त्यंचरममन्त्यपाश्चात्यपश्चिमे॥ ९५॥ हे॰ चं॰ ६
मध्यमंमाध्यमंमध्यमीयंमाध्यंदिनंच तत्। अभ्यन्तरमन्तरालंविचालेम
ध्यमान्तरे ॥ ९६॥ तुल्यःसमानःसदृक्षःसरूपःसदृशःसमः। साधा
रणसधर्म्माणौसवर्णाःसन्निभःसदृक्॥ ९७॥ स्युरुत्तरपदेप्रख्यःप्रकारः
प्रतिमोनिभः। भूतरूपोपमाःकाशःसन्निभप्रतिमःपरः॥ ९८॥ औ
पम्यमनुकारोऽनुहारःसाम्यन्तुलोपमा। कश्चोपमानमर्चातुप्रतिमाया
तनानिधिः॥ ९९॥ छायाछन्दःकायारूपंविम्बंमानकृतीअपि। सू
र्मीस्थूणायःप्रतिमाहरिणीस्याद्धिरण्मयी ॥ १००॥ प्रतिकूलंतुविलोम
मपसव्यमपष्ठुरं। वामंप्रसव्यंप्रतीपंप्रतिलोमममपष्ठुच ॥ १०१॥ वामं
शरीरेऽङ्गंसव्यमपसव्यन्तुदक्षिणं। अवाधोच्छृङ्खलोद्दामानियन्त्रितमन
र्गलं॥ १०२॥ निरङ्कुशेस्फुटेस्पष्टंप्रकाशंप्रकटोल्वणे। व्यक्तंवर्तुलंतुवृ
त्तंनिस्तलंपरिमण्डलं॥ १०३॥ बंधुरंतून्नतानतंस्यपुटंविषमोन्नतं।
अन्यदन्यतरद्भिन्नंत्वमेकमितरच्चतत्॥ १०४॥ करम्बःकवरोमिश्रः
संपृक्तःखचितःसमाः। विविधस्तुबहुविधोनानारूपःपृथग्विधः॥ १०५॥
त्वरितंसत्वरंतूर्णंशीघ्रंक्षिप्रंद्रुतंलघु। चपलाविलम्बितेच कम्पासम्या
तपाटवं॥ १०६॥ अनारतंत्वविरतंसंसक्तंसततानिशे। नित्यानवरता
जस्रासक्ताश्रान्तानिसंततं॥ १०७॥ साधारणन्तुसामान्यंदृढसंधितुसंह
तं। कलिलंगहनेसंकीर्णंतुसंकुलमाकुलं॥ १०८॥ कीर्णमाकीर्णंचपूर्णे

हे॰ चं॰ ६ न्वाचितंछन्नपूरिते। भरितंनिचितंव्याप्तंप्रत्याख्यातंनिराकृतं॥ १०९॥
प्रत्यादिष्टंप्रतिक्षिप्तमपविद्धंनिरस्तवत्। परिक्षिप्तेवलयितंनिवृतंप
रिवेष्टितं॥ ११०॥ परिस्कन्नंपरीतंचत्यक्तंन्यूनंसृष्टमुज्झितं। धूतंहीनंवि
धूतंचविन्नंवित्तंविचारिते॥ १११॥ अवकीर्णंचविध्वस्तंसंवीतंरुद्धमावृ
तं। संवृतंपिहितंछन्नंस्थगितंचापवारितं॥ ११२॥ अंतर्हितंतिरोधानं
दर्शितंतुप्रकाशितं। आविष्कृतंप्रकटितमुच्चण्डंत्वविलम्बितं॥ ११३॥
अनादृतमवज्ञातंमानितंगणितंमतं। रीढावज्ञाऽवहेलान्यसूर्क्षणंचाप्य
नादरे॥ ११४॥ व्यवधानंतिरोधानमन्तर्द्धिरपवारणं। छदनव्यव
धान्तर्द्धिपिधानस्थगनानिच॥ ११५॥ उन्मूलितमावर्हितंस्यादुत्पाटि
तमुद्धृतं। प्रेंखोलितंतरलितंलुलितंप्रेंखितंधुतं॥ ११६॥ चलितंकंपितंधूतं
वेल्लितान्दोलितेऽपिच। दोलाप्रेंखोलनंप्रेंखाफांटंकृतमयत्नतः॥ ११७॥
अधःक्षिप्तंन्यंचितंस्यादूर्ध्वक्षिप्तमुदंचितं। नुन्ननुत्तास्तनिष्ठ्यूतान्यविद्धं
क्षिप्तमीरितं॥ ११८॥ समेदिग्धलिप्तेरुग्णाभुग्नेरूषितगुण्ठिते। गूढगु
प्तेवमुषितमूषितेगुणितान्हते॥ ११९॥ स्यान्निशातंशितंशातंनिशितंते
जितंक्षुतं। वृत्तेतुवृत्तव्यावृत्तेह्रीतह्रीणौतुलज्जिते॥ १२०॥ संगूढस्स्या
त्संकलितेसंयोजितंउपाहिते। पक्वेपरिणतंपाकेश्टौणक्यहविर्धान्यवृतं
॥ १२१॥ निष्पक्वंक्वथितेत्रुष्टपुष्टदग्धेषितास्समाः। तनूकृतेत्वष्टतष्टेपवि
द्धेछिद्रितवेधितो॥ १२२॥ सिद्धेनिर्वृत्तनिष्पन्नौविलीनेद्रवितद्रुतौ। उतं

प्रोतं स्यूतमूतमुतं च तंतु सन्तते ॥ १२३ ॥ पाटितं दारितं भिन्ने विदरः स्फुटनं को० कां० ३
भिदा । अङ्गीकृतं प्रतिज्ञातमूरीकृतोररीकृते ॥ १२४ ॥ संश्रुतमभ्युप
गतमुररीकृतमाश्रुतं । संगीर्णं प्रतिश्रुतं च छिन्ने लूनं छितं दितं ॥ १२५ ॥
छेदितं खंडितं वृक्णं क्लृप्तं प्राप्तं प्रभावितं । लब्धमासादितं भूतं पतिते गलितं च्यु
तं ॥ १२६ ॥ स्पष्टं भ्रष्टं स्कन्नपन्ने संशितं तु सुनिश्चितं । मृगितं मार्गितान्वि
ष्टान्वेषिता निगवेषिते ॥ १२७ ॥ तिमिते स्तिमितक्लिन्नसार्द्रार्द्रोक्तास्समु
न्नवत् । प्रस्थापितं प्रतिशिष्टं प्रतिहतप्रेषिते अपि ॥ १२८ ॥ ख्याते प्रती
तप्रज्ञातवित्तप्रथितविश्रुताः । तप्ते संतापितो दूनो धूपायितस्वधूपितः
॥ १२९ ॥ शीनेस्त्यानमुपनतस्तूपसन्न उपस्थितः । निर्वातस्तु ग
तेवाते निर्वाणः पावकादिषु ॥ १३० ॥ प्रवृद्धमेधितं प्रौढं विस्मितान्तर्गते
समे । उद्वान्तमुद्गते गूनं हन्ने मीढं तु मूत्रिते ॥ १३१ ॥ विदितं बुधितं बुद्धं
ज्ञातं स्नितमते अवात् । मनितं प्रतिपन्नं च स्यन्ने रीणं स्तुतं स्रुतं ॥ १३२ ॥
गुप्तगोपायितत्राताविततत्राणानि रक्षिते । कर्मक्रियाविधा हेतुशून्यात्वास्य
विलक्षणं ॥ १३३ ॥ कार्मणं मूलकर्माथ संवननं वशक्रिया । प्रतिबन्धे
प्रतिष्टम्भः स्यादास्या त्वासना स्थितिः ॥ १३४ ॥ परस्परं स्यादन्योन्य
मितरेतरमित्यपि । आवेशाटोपौ संरंभे निवेशो रचना स्थितौ ॥ १३५ ॥
निबन्धोऽभिनिवेशः स्यात्प्रवेशोन्तर्विगाहनं । गतौ वीखा विहारेर्य्यापरि
सर्प्पपरिक्रमाः ॥ १३६ ॥ व्रज्याटाट्यापर्य्यटनं चर्य्या त्वर्य्यापथस्थि
तिः । व्यत्यासस्तु विपर्यासो वैपरीत्यं विपर्य्ययः ॥ १३७ ॥ व्यत्य

हे॰चं॰६ योऽथस्फातिर्वृद्धाप्रीणनेऽवनतर्पणे। परिचार्णंतुपर्य्याप्तिर्हस्तधार
णमित्यपि ॥ १३८ ॥ प्रणतिः प्रणिपातोऽनुनयेऽथ शयने क्रमात्।
विशाय उपशायश्चपर्य्यायोऽनुक्रमः क्रमे ॥ १३९ ॥ परिपाट्यानुपू
र्व्यानदतिपातस्त्वतिक्रमः । उपात्ययः पर्य्ययश्चसमौसंबाधसंकटौ
॥ १४० ॥ कामंप्रकामंपर्य्याप्तंनिकामेष्टंयथेप्सितं । अत्यर्थेगाढमुद्गाढंबा
ढंतीव्रंभृशंदृढं ॥ १४१ ॥ अतिमात्रातिमर्य्यादनितान्तोत्कर्षनिर्भरः ।
भरैकान्तातिवेलातिशयाजृम्भानुजृम्भणं ॥ १४२ ॥ आलिङ्गनंपरिष्व
ङ्गः संश्लेषउपगूहनं । अङ्कपालीपरीरम्भःक्रोडीकृतिरथोत्सवे ॥ १४३ ॥
महःक्षणोद्धवोद्धर्षामेलकेसंगसंगमौ। अनुग्रहोऽभ्युपपत्तिःसमौनिरोधनि
ग्रहौ ॥ १४४ ॥ विघ्नोऽन्तरायप्रत्यूहव्यवायाःसमयेक्षणः । वेलावाराववस
रःप्रस्तावःप्रक्रमान्तरं ॥ १४५ ॥ अभ्यादानमुपोद्घातआरम्भःप्रोप
क्रमः। प्रत्युत्क्रमःप्रयोगस्स्यादारोहणंत्वभिक्रमः ॥ १४६ ॥ आक्रमेऽधिक्र
मक्रान्तीव्युत्क्रमस्तूत्क्रमोऽक्रमौ । विप्रलम्भोविप्रयोगोवियोगोविरहः
समाः ॥ १४८ ॥ आभरणंविभूषाश्रीरभिख्याकान्तिविभ्रमाः । लक्ष्मी
छायाचशोभायांसुषमासातिशायिनी ॥ १४९ ॥ संस्तवस्स्यात्परिच
यआकारस्त्विङ्गइङ्गितं । निमित्तेकारणंहेतुर्वीजंयोनिर्निबन्धनं
॥ १५० ॥ निदानमथकार्य्यंस्यादर्थःकृत्यंप्रयोजनं । निष्ठानिर्वहणे
तुल्येप्रवाहोगमनंवहिः ॥ १५१ ॥ जातिस्सामान्यंव्यक्तिस्तुविशेषःपृथ
गात्मिका । तिर्य्यक्साचिःसंहर्षस्तुस्पर्द्धाद्रोहस्त्वपक्रिया ॥ १५२ ॥

बंध्येमोघा फलमुधा अनर्थे दुर्निरर्थकं । सँस्थानं सन्निवेशः स्यादर्थस्याप
गमेव्ययः ॥ १५३ ॥ संमूर्छनं त्वभिव्याप्तिर्भेषो भ्रंशो यथोचितात् । अभा
वो नाशे संक्रामसंक्रमौ दुर्गसंचरे ॥ १५४ ॥ नीवाकस्तु प्रयामस्स्याद्वेक्षा
प्रतिजागरः । समौ विश्रम्भविश्वासौ परिणामस्तु विक्रिया ॥ १५५ ॥
चक्रावर्त्तो भ्रमो भ्रान्तिर्भ्रमिर्घूर्णिस्तु घूर्णने । विप्रलम्भो विसंवादो विलम्भ
स्त्वतिसर्जनं ॥ १५६ ॥ उपलम्भस्त्वनुभवः प्रतिलम्भस्तु लम्भनं । नि
योगे विधिसंप्रैषौ विनियोगोऽर्पणं फले ॥ १५७ ॥ लवोऽभिलावो लवनं नि
ष्पावः पवनं पवः । निष्ठेवष्ठीवनष्ठ्यूतष्ठेवनानि तु थूत्कृते ॥ १५८ ॥ निवृ
त्तिस्स्यादुपरमो व्यपोपाङ्भ्यः परा रतिः । विधूननं विधुवनं रिंखणं स्खल
नं समे ॥ १५९ ॥ रक्षणस्त्राणो ग्रहो ग्राहे व्यधो वेधे क्षयेक्षिया । स्फरणं
स्फुरणेज्यानिर्जीर्णावथ वरो वृतौ ॥ १६० ॥ समुच्चयस्समाहारोऽपहार
अपचयौ समौ । प्रत्याहार उपादानं बुद्धिशक्तिस्तु निष्क्रमः ॥ १६१ ॥ इ
त्यादयः क्रियाशब्दा लक्ष्या धातुषु लक्षणं । अथाव्ययानि वक्ष्यन्ते स्वः स्व
र्गे भूरसातले ॥ १६२ ॥ भुवो विहायसा व्योम्नि द्यावाभूम्योस्तु रोदसी । उ
परिष्टादुपर्यूर्ध्वं स्यादधस्तादधोप्यवाक् ॥ १६३ ॥ वर्जनेत्वंतरेणर्ते हि
रुग्नानापृथग्विना । साकं सत्रा समं सार्द्धममा सह कृतं त्वलं ॥ १६४ ॥
भवत्वस्तु च किन्तु त्वाः प्रेत्यामुत्र भवांतरे । तूष्णीं तूष्णीकं जोषं च मौनं दि
ष्ट्या तु सम्मदे ॥ १६५ ॥ परितः सर्वतो विष्वक् समन्तात्त्वसमंततः । पु
रः पुरस्तात्पुरतोऽग्रतः प्रायस्तु भूमनि ॥ १६६ ॥ साम्प्रतमधुनेदानीं सम्प्रत्ये

हे०चं० ६ नह्यर्थंजसा। द्राक्स्राग्‌ झटित्याश्वह्नाय च सत्वरं ॥ १६७ ॥ सदा सनानिशं शश्वद्भूयोऽभीक्ष्णं पुनः पुनः। असकृन्मुहुः स्रायं तु दिनात्ययेदिवसे दिवा ॥ १६८ ॥ सहसैकपदे सद्योऽकस्मात्सपदि तत्क्षणे। चिराय चिररात्राय चिरस्य च चिराच्चिरं ॥ १६९ ॥ चिरेणादीर्घकालार्थे कदाचिज्जातु कर्हिचित्। दोषा नक्तमुषा रात्रौ प्रगे प्रातरहर्मुखे ॥ १७० ॥ तिर्य्यगर्थे तिरः साचि निष्फले तु वृथा मुधा। मृषा मिथ्यानृतेऽभ्यर्णे समया निकषा हिरुक् ॥ १७१ ॥ शं सुखे वलवत्सुष्ठु किमुतातीव निर्भरे। प्राक्पुरा प्रथमे सं वदर्थे परस्परं मिथः ॥ १७२ ॥ उषा निशान्तेऽल्पे किंचिन्मनागीषच्च किञ्चन। आहो उताहो किमुत वितर्के किं किमूत च ॥ १७३ ॥ इतिहस्याः सम्प्रदाये हेतौ यन्नद्यतस्ततः। संबोधने गभोः पाट् प्याट् हे है हं हो ऽरे रे पि च ॥ १७४ ॥ श्रौषट् वौषट् वषट् स्वाहा स्वधा देव हविर्दुते। रहस्युपांश्वमध्ये तरं तरे णांतरेंतरा ॥ १७५ ॥ प्रादुराविः प्रकाशे स्यात् भावे त्वन नो न हि। हठे प्रसह्य मामास्म वरणोऽस्तमदर्शने ॥ १७६ ॥ अकामानुमतौ कामं स्यादोमां परमं मते। कच्चिदिष्टपरिप्रश्नेऽवश्यं नूनं च निश्चये ॥ १७७ ॥ बहिर्बहिर्भवेत् ह्यः स्याद्‌तीतेऽह्नि श्वएष्यति। नीचैरल्पे महत्युच्चैः सत्येऽस्तिदुष्ठु निंदने ॥ १७८ ॥ ननु च स्याद्विरोधोक्तौ पक्षान्तरे तु चेद्यदि। शनैर्मन्देऽवरे त्वर्वाक् रोषोक्तावुं नतौ नमः ॥ १७९ ॥ इत्याचार्य्य हेमचन्द्र विरचितायामभिधानचिन्तामणौ नाममालायां सामान्यकाण्डः षष्ठः ॥





॥ ॐ ॥ श्रीगणेशायनमः ॥ ध्यात्वार्हतःकृतैकार्थशब्दसन्दोहसंग्र 
हः। एकस्वरादिषट्कांड्याकुर्वेऽनेकार्थसंग्रहम् ॥ १ ॥ अकारादिक्रमे 
णादावचकादिक्रमस्ततः। उद्देश्यवचनंपूर्वंपश्चादर्थप्रकाशनं ॥ २ ॥
यत्रैकएवरूढोऽर्थोयौगिकस्तत्रदृश्यते। अनेकस्मिंस्तुरूढेऽर्थेयौगि
कःप्रोच्यतेनवा ॥ ३ ॥ पदानांभङ्गतोयोऽस्मिन्ननेकोऽर्थःप्रकाश्यते। प्र
दर्शनीयेनैवासौमस्यानन्यप्रसङ्गतः ॥ ४ ॥ कोब्रह्मण्यात्मनिरवौम
यूरेऽग्नौयमेऽनिले। कंशीर्षेऽम्बुसुखेखंस्वःसंविदिव्योमनीन्द्रिये
॥ ५ ॥ शून्येविन्दौसुखेक्षस्तुसूर्य्येगोरुद्रकेदृशि। स्वर्गेदिशिपशौर
श्मौवज्रेभूमाविषौगिरि ॥ ६ ॥ त्वगवल्कलेचर्म्मणिच न्यग्निम्नेनीचका
र्त्स्न्ययोः। दृक्शोभाकिरणेच्छासुवाग्भारत्यांवचस्यपि ॥ ७ ॥ जूराका
शेसरस्वत्यांपिशाच्यांजवनेऽपिच। ज्ञःस्याद्विचक्षणेपद्मासनेचान्द्रम
सायने ॥ ८ ॥ सद्विद्यमानेसत्येचप्रशस्तार्च्चितसाधुषु। भःशुक्रेभ

हे० चं० मुडौभाशोभूस्तुभूमिरिवक्षितौ ॥ ९ ॥ स्यान्नेषमः पुनः शम्भौ मालक्ष्म्यां
ना० १ वारणेऽव्ययं । किंक्षेपनिन्दयोः प्रश्ने वितर्के ज्यानुमानरि ॥ १० ॥
क्ष्मा मे व्यौंदुर्हि नेवह्वौ द्यौ स्तु स्वर्गे विहायसि । रस्तीक्ष्णे दहने रास्तु
वर्णे जलदे धने ॥ ११ ॥ द्रूः का मरूपिणि स्वर्णे धूर्ध्यानमुखभारयोः ।
पूः शरीरे पत्तने च श्रीर्लक्ष्म्यां सरलद्रुमे ॥ १२ ॥ वेषोपकरणे वेषे रचना
यां मतौ गिरि । शोभा त्रिवर्गसम्पत्त्योः सूः सवे निर्भरेऽपि च ॥ १३ ॥
वः पश्चिमदिगीशे स्यादौपम्ये पुनरव्ययम् । द्यौ स्वर्गनभसोः स्वो ज्ञात्या
त्मनोः स्वं निजे धने ॥ १४ ॥ दृग् दृष्टिरि दर्शनेऽध्यक्षे विट् प्रवेशे न्दवैश्य
योः । तृट् तृष्णावत्तर्षवत्सु मवेह्निप्रापिपासयोः ॥ १५ ॥ त्विट् शोभा
यां जिगीषायां व्यवसाये रुचौ गिरि । भाः प्रभावे मयूखे च मास्तु मासे निशा
करे ॥ १६ ॥

॥ इत्याचार्य्यहेमचन्द्रविरचितेऽनेकार्थसंग्रहे एकस्वरकाण्डः प्रथमः ॥

ना० २ अर्को द्रुभेदे स्फटिके ताम्रे सूर्ये विडौजसि । अकं दुःखाघयोरको भूषा
रूपकलक्ष्मसु ॥ १ ॥ चित्राजौ नाटकांशे स्यान्नेक्रो डैनिकायसोः । ए
कोऽन्यः केवलः श्रेष्ठः संख्या कल्कोऽघविष्ठयोः ॥ २ ॥ दम्भे पापे विनि किट्टे च
कंपो ब्राह्मणलिङ्गिनि । लोहपृष्ठे यमे कङ्कः श्वेताश्वे दर्प्पणे घटे ॥ ३ ॥ क
र्कनको रागौ चक्राकः स्यात्पीठसर्प्पिणि । दीपमानद्रुभेदे गुग्गिरोऽचक्षाः

लनेद्रिके ॥ ४ ॥ काकंकाकसमूहे स्याद्रुतबन्धे च योषितां । काकानुकाक हे०चं०
जंघायां काकोली काकनासयोः ॥ ५ ॥ काकोदुम्बरिका काकमाचिकारक्ति ना० २
कास्वपि । किष्कुः प्रकोष्ठे हस्ते च वितस्तौ कुत्सितेऽपि च ॥ ६ ॥ कोकोवृके
चक्रवाके खर्जूरीद्रुमभेकयोः । छेकोविदग्धे विश्वस्ते मृगनीडकयोरपि
॥ ७ ॥ टंकोनीलकपित्थेऽसिकोशे कोपे श्मदारणे । मानान्तरे खनित्रे च
जंघायां टंकनेऽपि च ॥ ८ ॥ तर्क्को वितर्क्के कांक्षायामूहतर्क्कविशेषयोः
। त्रिकाकूपस्य नेमौ स्यात्त्रिके पृष्ठाधरे त्रये ॥ ९ ॥ तोकं संतानसुतयोर्द्वि
कः स्यात्काककोकयोः । न्यङ्कुर्मृगे मुनौ नाकः स्वः खे नाकुस्तु पर्वते ॥ १० ॥
मुनिवाल्मीकयोर्निष्कः कर्षे हेम्नि तत्पले । दीनारे साष्टसुवर्णशतेव
क्षोविभूषणे ॥ ११ ॥ पङ्कोऽघे कर्दमे पाकः पचने शिशुदैत्ययोः । बको
रक्षोभिदि श्रीदे शिवमल्लिबकोटयोः ॥ १२ ॥ भूकः काले छिद्रे भेकोमे
घमण्डूकभीरुषु । मुष्कोमोक्षद्रुमे संघे तस्करे मांसलाण्डयोः ॥ १३ ॥
मूको दैत्यावाग्दीनेषु रङ्कः कृपणमन्दयोः । राकाकच्छू दृष्टरजः कन्यायां
सरिदन्तरे ॥ १४ ॥ पूर्णेन्दुपूर्णिमायां च रेकः शंकाविरेकयोः । हीनेऽ
पि रोकं कृपणभेदे नाविविले चरे ॥ १५ ॥ रोके भ्रौ लंकातु शाखाशाकिनीकु
लटापुरी । लोको विश्वे जने वल्कं शकले त्वचि शल्कवत् ॥ १६ ॥ शकोदेशे
राजभेदे शंका स्यात्संशये भये । शङ्कुः पत्रशिरा जाले सख्या कीलकशम्भुषु
॥ १७ ॥ यादोभेदयोर्मेर्भेदृशाको द्वीपेन्द्रपे द्रुमे । श्लोको हरितवोचापि

हे०चं० शुकोव्यासजकीरयोः ॥ १८ ॥ रक्षोऽमात्येशुकंवस्त्रेवस्त्राञ्चलशि
ना० २ रस्त्रयोः । शुल्कंघट्टादिदानव्येजामातुस्वापिबन्धके ॥ १९ ॥ शूको
ऽनुक्रोशकिंशार्वोःशोकेऽभिषवशृङ्गयोः । शुकाहस्तेरवेःश्लोकःपद्य
बन्धेयशस्यपि ॥ २० ॥ शौकंशुकानांसमूहेस्त्रीणांचकरणान्तरे । स्तू
काबाणोत्पलवाताःस्तोकःस्याच्चातकाल्पयोः ॥ २१ ॥ ❁ ॥ द्विस्वरेषुका
न्ताः ॥ ❁ ॥ नखंपुनर्गन्धद्रव्येनखःकरजखण्डयोः । न्युङ्खःसामवि
शेषस्यषडोंकार्य्यामतिप्रिये ॥ २२ ॥ पुङ्खःस्यान्मङ्गलाचारेशराङ्गश्येनयो
रपि । प्रेङ्खापर्य्यटनेनृत्येदोलायांवाजिनांगतौ ॥ २३ ॥ मुखमुपायेप्रारम्भे
श्रेष्ठेनिःसरणास्ययोः । रेखास्यादल्पकेछद्मन्याभोगोल्लेखयोरपि ॥ २४ ॥
लेखोलेख्येदैवतेचलेखाज्यायांलिपावपि । वोंखानुशूकशिम्बायांगतिभे
देचनर्त्तने ॥ २५ ॥ शंखःकम्बौनिधिभेदेस्यान्नख्यामलिकास्थनि । शा
खाद्रुमांशेविटांशेभुजेपक्षान्तरेंतिके ॥ २६ ॥ शिखाग्रमात्रेचूडायांकेकि
चूडाप्रधानयोः । ज्वालायांलाङ्गलिकायांशिफाशाखाघृणिष्वपि ॥ २७ ॥
सखासहायेमित्रेचसुखंत्रिदिवशर्म्मणोः । सुखाप्रचेतसःपुर्य्यां ॥ ❁ ॥
द्विस्वरेषुखान्ताः ॥ ❁ ॥ मगस्स्यान्नगवत्तरौ ॥ २८ ॥ शैलेसरीसृपे
भानावङ्गमन्तिकगात्रयोः । उपसर्ज्जनभूतेस्यादभ्युपायप्रतीकयोः
॥ २९ ॥ अङ्गानीवृद्धिशेषेस्यादिङ्गस्स्यादिङ्गितेऽद्भुते । ज्ञानजङ्गमयो
श्चापिखगोऽर्कग्रहपक्षिषु ॥ ३० ॥ शरेदेवेऽपिखङ्गोऽसौखड्गिशृङ्गेचकरक

को। गर्गो मुनिविशेषे स्याद्वृषे किंचुलकेऽपि च ॥ ३१ ॥ टङ्कः खनित्रे जंघायां स्यो हे० चं०
स्यागोवर्ज्जनदानयोः। तुङ्गः पुन्नागनगयोर्बुधे स्यादुन्नतेऽन्यवत् ॥ ३२ ॥ तु ना० २
ङ्गी प्रोक्ता हरिद्रायां बर्बर्यामपीष्यते। दुर्गं भवेद्दुर्गमे तु दुर्गा स्यान्नीलिकोम
योः ॥ ३३ ॥ नागो मतङ्गजे सर्पे पुन्नागे नागकेसरे। क्रूराचारे नागदन्ते मुस्त
के वारिदेऽपि च ॥ ३४ ॥ देहानिलविशेषे च श्रेष्ठे स्यादुत्तरस्थितः। नागं
रङ्गे सीसपत्रे स्त्रीबन्धे करणान्तरे ॥ ३५ ॥ पिङ्गी शम्यां पिङ्गा हिङ्गुनाल्यां गोरो
चनोमयोः। पिङ्गं बलाके पिशङ्गे पूगः क्रमुकसंघयोः ॥ ३६ ॥ फल्गुः का
कोदुम्बरिकावृक्षे निरर्थकेऽपि च। भगोऽर्कज्ञानमाहात्म्ययशोवैराग्यमु
क्तिषु ॥ ३७ ॥ रूपवीर्य्यप्रयत्नेच्छाश्रीधर्मैश्वर्य्ययोनिषु। भङ्गस्तर
ङ्गे भेदे च रुग्विशेषे पराजये ॥ ३८ ॥ कौटिल्ये भयविच्छित्त्योर्भङ्गा शणो
भङ्गिः पुनः। भक्तिर्गौणे भोगे रूपार्द्धके भाग्यैकदेशयोः ॥ ३९ ॥ भृङ्गं
त्वक्पत्रे भृङ्गास्तु खिङ्गधूम्याटमार्कवाः। षट्पदोऽथ भृगुः सानौ जमद
ग्निप्रपातयोः ॥ ४० ॥ भुक्ते रुद्रे च भोगस्तु राज्ये वेश्याभृतौ सुखे। धने
ऽहिकायफणयोः पालनाभ्यवहारयोः ॥ ४१ ॥ मार्गो मृगमदे मासे सौ
म्यर्क्षेऽन्वेषणे पथि। मृगः कुरङ्गे याञ्चायां मृगयायां गजान्तरे ॥ ४२ ॥ प
शौ नक्षत्रभेदे च मृगी तु वनितान्तरे। युगं हस्तचतुर्थे स्याद्रथाद्यङ्गे कृता
दिके ॥ ४३ ॥ वृद्धिनाम्नौषधे युग्मे योगो विस्रम्भघातिनि। अलब्धलाभे सं
गत्यां कार्म्मणध्यानयुक्तिषु ॥ ४४ ॥ वपुःस्थैर्य्यप्रयोगे च सन्नाहे भेषजे

हे०चं ना० २

धने । विष्कम्भादावुपायेच रङ्गः स्यान्नृत्ययुद्धयोः ॥ ४५ ॥ रागेरङ्गंतु त्रपु
णि रागस्स्याल्लोहितादिषु । गान्धारादौक्लेशादिकेऽनुरागेमत्सरेनृपे
॥ ४६ ॥ लङ्गः सङ्गेचषिङ्गेचलिङ्गंमेहनचिह्नयोः । शिवमूर्त्तावनुमा
नेसांख्योक्तप्रकृतावपि ॥ ४७ ॥ वङ्गःकार्पासेवृन्ताकेवङ्गाजनपदान्तरे
। वङ्गंत्रपुणिसीसेचवल्गुश्छागमनोज्ञयोः ॥ ४८ ॥ व्यङ्गोभेकेचहीनाङ्गे
वेगोरयप्रवाहयोः । रेतःकिम्पाकयोस्स्यापि शार्ङ्गंविष्णुधनुर्द्धनुः ॥ ४९ ॥
शृङ्ग्यामातेवटेवृक्षेशृङ्गंचिह्नविषाणयोः । क्रीडाम्बुयन्त्रेशिखरेप्रभु
त्वोत्कर्षसानुषु ॥ ५० ॥ शृङ्गःकूर्चशीर्षेशृङ्गीस्वर्णमीनविशेषयोः । वि
षायामृषभौषध्यांसर्गस्त्यागस्वभावयोः ॥ ५१ ॥ उत्साहेनिश्चयेऽध्या
येमोहानुमतिसृष्टिषु । ॥ ❁ ॥ द्विस्वरगान्ताः ॥ ❁ ॥ अर्घःपूजावि
धौमूल्येऽघंदुःखेव्यसनैनसोः ॥ ५२ ॥ उद्घोहस्तपुटेवह्नौस्याच्छ्लाघायां
देहजानिले । ओघःप्रवाहःसंघातोद्रुतनृत्तंपरंपरा ॥ ५३ ॥ उपदेश
स्वनेघस्तुमुस्तकेजलदेऽपिच । मोघोदीनेनिष्फलेचमोघास्यात्पाटलान
रे ॥ ५४ ॥ लघुःस्पृक्कालघ्वसारंह्रस्वंचार्वगुरुद्रुतं । श्लाघोपास्तीच्छयोः
स्तोत्रे ॥ ❁ ॥ द्विस्वरघान्ताः ॥ ❁ ॥ ऽर्चापूजाप्रतिमापिच ॥ ५५ ॥ क
चःशुष्कव्रणेकेशेबन्धेपुञ्जेचगीष्पतेः । कचाकरेण्वांकाचोऽक्षिरोगेशिक्येम
णौमृदि ॥ ५६ ॥ काञ्चीगुञ्जामेखलयोःपुर्य्यांकूर्चोविकत्थने । श्मश्रुणि
दम्भेभ्रूमध्येक्रौञ्चोद्वीपेखगेगिरौ ॥ ५७ ॥ चर्चास्याच्चर्ममुण्डायांचिन्ता

स्यात्सकयोरपि । चञ्चुः पञ्चांगुलेचोट्यांनीचः पामरखर्बयोः ॥ ५८ ॥ हे० चं०
मोचाशाल्मलिकदल्योर्म्मोचः शिग्रौ रुचिर्द्युतौ । स्पृहाभिष्वङ्गशोभासु ना० २
वचः शुकेवचौषधौ ॥ ५९ ॥ शारिकायांविच्यात्स्यूर्म्मीरवकाशे सुखाल्पयोः
। शचीन्द्राणीशतावर्य्योः शुचिः शुद्धे सितेऽनले ॥ ६० ॥ ग्रीष्माषाढेऽनुप
हतेषूपधाशुद्धमन्त्रिणि । शृङ्गारे सूच्यभिनयेव्यधनेकरणे स्त्रियां ॥ ६१ ॥

॥ ❁ ॥ द्विस्वरचान्ताः ॥ ❁ ॥

अच्छोभल्लूकेस्फटिकेऽमलेऽच्छाभिमुखे
ऽव्ययं । कच्छोद्रुभेदेनौकाङ्गेऽनूपप्रायेनटेऽपि च ॥ ६२ ॥ कच्छाबु
देशेकच्छास्यात्परिधानापरांचले । चीर्य्यांवाराह्यांगुच्छास्याद्गुच्छोहार
कलापयोः ॥ ६३ ॥ पिच्छः पुच्छे पिच्छंवाजे पिच्छाशाल्मनिवेष्टके । पं
क्तिपूगच्छटाकोशमण्डेष्वश्वपदामये ॥ ६४ ॥ मोचायांपिच्छिलेम्ले
च्छोजातिभेदेह्यभाषयो ।

॥ ❁ ॥ द्विस्वरछान्ताः ॥ ❁ ॥

अजश्छागे
हरे विष्णौरघुजेवेधसिस्मरे ॥ ६५ ॥ अब्जोधन्वन्तरौचन्द्रे शङ्खेऽब्जं
पद्मशंखयोः । आजिः क्ष्मोसमक्ष्मायांयुध्यूर्ज्जः कार्त्तिवेबले ॥ ६६ ॥
कंजोवेधसिकेशेचकंजंपीयूषपद्मयोः । कुञ्जोहनौदन्तिदन्ते निकुञ्जेचकु
ञ्जोद्रुमे ॥ ६७ ॥ आरेनरकदैत्येचकुब्जोन्युब्जद्रुभेदयोः । खजादर्वी
मथ्योः खर्ज्जुः खर्ज्जुरीकीटकंडुषु ॥ ६८ ॥ गञ्जोभाण्डागारेरीढाखन्यो
र्गञ्जासुरालये । गुञ्जागुञ्जाशालायांस्यात्पटहेमधुरध्वनौ ॥ ६९ ॥ द्वि
जोविप्रक्षत्रिययोर्वैश्येदन्तेविहंगमे । द्विजाभार्गीरेणुकयोर्ब्जिजः पू

हे०चं० वेदिशोगृहे ॥ ७० ॥ शिश्नेचिह्नेपताकायांखट्वाङ्गेशौण्डिकेपिच । निजो
ना० २ नित्येस्वकीयेचन्युब्जः कुब्जेकुशेस्रुचि ॥ ७१ ॥ अधोमुखेपिचन्युब्जंकर्म्मर
ङ्गतरोःफले । प्रजालोकेसंततौचपिञ्जातूलहरिद्रयोः ॥ ७२ ॥ पिञ्जो
व्यग्रेवधेपिंजंबलेबीजंतुरेतसि । स्यादाधानेचतत्त्वेचहेतावङ्कुरकारणे
॥ ७३ ॥ भुजोबाहौकरेमज्जूःमुद्गौचरजकेपिच । राजीरेखायांपङ्क्तौच
रुजात्वामयभङ्गयोः ॥ ७४ ॥ लज्जःपटेचकाच्छेचलाजस्यादार्द्रतण्डुले
। लाजास्तुभृष्टधानास्युर्लाजंपुनरुशीरके ॥ ७५ ॥ व्रजोऽध्वगोष्ठसंघेषु
वणिग्वाणिज्यजीविनि । वाणिज्येकरणभेदेवाजंसर्पिषिवारिणि ॥ ७६ ॥
यज्ञाग्नेवाजस्तुपक्षेमुनौनिस्वनवेगयोः । व्याजःशाठ्येऽपदेशेचसञ्ज्ञोस
न्नद्धसम्भृतौ ॥ ७७ ॥ सञ्ज्ञौब्रह्मशिवौ ॥ ❁ ॥ द्विस्वरजान्ताः ॥ ❁ ॥
प्रज्ञःप्राज्ञाप्रज्ञातुशेमुषी । यज्ञस्यादात्मनिमखेनारायणहुताशयोः ॥ ७८ ॥
संज्ञानामनिगायत्र्यांहस्ताद्यैरर्थसूचने । चेतनार्कस्त्रियोः ॥ ❁ ॥ द्विस्वर
णान्ताः ॥ ❁ ॥ अट्टोहट्टाट्टालकयोर्भृशे ॥ ७९ ॥ चतुष्कभक्तयोरिष्टमी
प्सितेक्रतुकर्म्मणि । पूज्येप्रेयसिसँस्कारेयोगेऽथेष्टिर्मखेच्छयोः ॥ ८० ॥
संग्रहश्लोकेऽथकटोगजगण्डेकटौभृशं ॥ ८१ ॥ शवेशवरथौष
ध्योःक्रियाकारघूमशानयोः । किलिञ्जेसमयेचापिकष्टंगहनकृच्छ्रयोः
॥ ८२ ॥ कटुकार्य्येमत्सरेचदूषणेचकटूरसे । तिक्तेप्रियङ्गुसुरभिक
टुकाराजिकास्वपि ॥ ८३ ॥ कुटःकोटेशिलाकुट्टेगेहेघटेकुटीसुरा ।

पिंचगुच्छः कुम्भदासी कुटं पूर्द्वारयन्त्रयोः ॥ ८४ ॥ मायादम्भाद्रिशृ हे०चं०
ङ्गेषु सीरङ्गेऽन्द्रततुच्छयोः । निश्चलेऽयोघने राशौ कृष्टिः कर्षणधीमतोः का० २
॥ ८५ ॥ कोट्युत्कर्षाटनीसंख्यास्त्रिषु खटस्तृणेकफे । टङ्कोऽन्धकूपे प्रहा
रे खाटिः शवरथे किणे ॥ ८६ ॥ एकग्राहेऽथ खेटस्स्याद्ग्रामभेदे कफे
ऽधमे । स्फारे मृगव्ये गृष्टिस्तु सकृत्सूतगवी भवेत् ॥ ८७ ॥ वराहकान्ता
चघटा घटने गजसंहतौ । गोष्ठ्यां घटस्त्विभशिरःकूटे समाधिकुम्भयोः
॥ ८८ ॥ घृष्टिः स्पर्द्धा घर्षणयोर्विष्णुक्रान्ता वराहयोः । घोण्टा पूग
बदरयोस्स्याच्चाटुः पिचण्डयोः ॥ ८९ ॥ वन्यासने जटा केशविकारे मां
सिमूलयोः । झाटो व्रणादिसम्मार्ष्टौ कुञ्जकान्तारयोरपि ॥ ९० ॥ त्वष्टाऽ
र्के विश्वकर्मतक्ष्णोस्त्रुटिः संशयलेशयोः । सूक्ष्मैलायां कालमाने त्रोटिश्चञ्चां
खगान्तरे ॥ ९१ ॥ मीनकट्फलयोर्दृष्टं दैवे दिष्टस्तु नेहसि । दिष्टिरा
नन्दे माने च दृष्टिर्ज्ञानेऽक्ष्णि दर्शने ॥ ९२ ॥ पट्टस्तु चत्वरे पीठे राजादेः
शासनान्तरे । व्रणादिबन्धने पेषाश्मनि पट्टी ललाटिका ॥ ९३ ॥ रोधो
ऽथ पटु लवणे पटुस्तीक्ष्णपटोलयोः । स्फुटे रोगविहीने च छत्रायां चतु
रेऽपि च ॥ ९४ ॥ पुष्टिस्स्यात्पोषणे वृद्धौ फटा तु कितवे फणे । भटो वीरे
म्लेच्छभेदेऽपि च भृष्टिस्तु भर्जने ॥ ९५ ॥ शून्यवाट्यामथ श्लिष्टं स्थानम
स्पष्टभाषितं । यष्टिर्भार्ग्यां मधुयष्ट्यां ध्वजदण्डेऽस्त्रहारयोः ॥ ९६ ॥ रि
ष्टं क्षेमेऽशुभे रिष्टोऽसौ लाटो वस्त्रदेशयोः । वटो गोले गुणे भक्ष्ये वृक्षे साम्यव

 राटयोः॥ ९७॥ वाटः पथिवृतौ वाटवरण्डेऽङ्गान्नभेदयोः। वाटीवास्तौ
 गृहोद्याने कट्यां विटस्तु मूषके॥ ९८॥ खदिरे लवणोपिङ्गेऽद्रौ च व्युष्टं
फले दिने। पर्युषिते प्रभाते च व्युष्टिस्तु तिफलर्द्धिषु॥ ९९॥ विष्टिः
कर्म्मकरे मूल्ये भद्राजूप्रेषणेषु च। सटाजटाकेसरयोः स्फुटो व्यक्तप्रफुल्ल
योः॥ १००॥ सिते व्याप्ते स्फुटिस्त्वङ्घ्रिस्फोटे निर्भिन्नचिर्भिटे। सृष्टिः
स्वभावे निर्माणे सृष्टं निश्चुतयुक्तयोः॥ १०१॥ प्रचुरे निर्म्मिते चाथ हृष्टरो
मा च संयुते। जातहर्षेऽप्रतिहते विस्मिते हृषितो यथा॥ १०२॥ ❁॥ इ
ति द्विस्वरटान्ताः॥ ❁॥ कठो मुनौ स्वरे च्छन्दसांभेदे तत्पाठिके द्विजे। कंठो ध्व
नौ सन्निधाने ग्रीवायां मदनद्रुमे॥ १०३॥ काष्ठं दारुणि काष्ठा तु प्रकर्षे स्था
नमात्रके। दिशि दारुहरिद्रायां कालमानप्रभिद्यपि॥ १०४॥ कुण्ठोऽक
र्मण्ये मूर्खे च कुष्ठं भेषजरोगयोः। कोष्ठो निजे कुसूले च कुक्ष्यावन्तर्गृहस्य च
॥ १०५॥ गोष्ठं गोस्थानके गोष्ठी संलापे परिषद्यपि। ज्येष्ठः स्यादग्रजे श्रेष्ठे
मासभेदातिवृद्धयोः॥ १०६॥ ज्येष्ठा भे गृहगोधायां निष्ठोत्कर्षव्यवस्थयोः
। क्लेशे निष्पत्तौ नाशेऽन्ते निर्वाहे याचने व्रते॥ १०७॥ पृष्ठं पश्चिममात्रे स्या
च्छरीरावयवान्तरे। वण्ठः कुन्तायुधे खर्वे भृत्याकृतविवाहयोः॥ १०८॥
शठो मध्यस्थपुरुषे धूर्त्ते धत्तूरकेपि च। श्रेष्ठोऽग्र्ये धनदे षष्ठी गौरी षष्ठ्यां च
पूरणी॥ १०९॥ हठो बुपर्ण्यां प्रसभे॥ ❁॥ द्विस्वरठान्ताः॥ ❁॥ ऽण्ड
पेशी कोशमुष्कयोः। इडेला वत्स्वर्गे नाडी भूवाग्गोषु बुधस्त्रियां॥ ११०॥

काण्डो नालेऽधमे वर्गे द्रुस्कन्धेऽवसरे शरे । रहःश्लाघाम्बुषु स्तम्बे क्रीडा केल्यामनादरे ॥ १११ ॥ कुण्डी कमण्डलौ कुण्डो जाराज्जीवत्पतेः सुते । देवताम्भःशये स्थाल्यां क्ष्वेडः कर्णामये ध्वनौ ॥ ११२ ॥ विषे वक्रे क्ष्वेडा सिंहनादे वंशशलाकयोः । क्ष्वेडं लोहितार्कफले घोषपुष्पे दुरासदे ॥ ११३ ॥ क्रोडः कोले शनौ क्रोडमङ्के षंडोर्द्धरेऽश्ववे । मणिदोषे च गण्डस्तु वीरे पिटकचिह्नयोः ॥ ११४ ॥ कपोले गण्डके योगे वाजिभूषणबुद्बुदे । गडुः पृष्ठगुडे कुब्जे गडो मीनान्तराययोः ॥ ११५ ॥ गुडः कुञ्जरसन्नाहे गोलके क्षुविकारयोः । गुडा तु गुडिकास्नुह्योर्गण्डस्त्या हृद्धुनाभिके ॥ ११६ ॥ पामरजातौ च चण्डस्तु यमदासेऽतिकोपने । तीव्रे दैत्यविशेषे च चण्डी तु शिवयोषिति ॥ ११७ ॥ चण्डा धनहरीशङ्खपुष्प्योश्चूडा शिखाग्रयोः । बाहुभूषावलभ्योश्च चोडः कञ्चुकदेशयोः ॥ ११८ ॥ जडो मूर्खे हिमाघाते जडा स्यात्कूकशिम्बिका । ताडोऽद्रौ ताडने घोषे मुष्टिमेयतृणादिके ॥ ११९ ॥ ताडी तालीदलतरौ दण्डः सैन्ये दमे यमे । मानव्यूहग्रहभेदेष्वश्वेऽर्कानुचरे मथि ॥ १२० ॥ प्रकाण्डे लगुडे कोणे चतुर्थोपायगर्वयोः । नाडी कुहनचर्यायां घटिकागण्डदूर्वयोः ॥ १२१ ॥ नाले गुणान्तरे स्नायौ नीडं स्थाने खगालये । पंडः शण्डे पण्डा बुद्धौ पाण्डुः कुन्तीपतौ सिते ॥ १२२ ॥ पिण्डो वृन्दे जपापुष्पे गोले बोलेऽङ्गसिह्लयोः । कवले पिण्डं तु वेश्मैकदेशे जीवनायसोः ॥ १२३ ॥ बलेसान्द्रे पिण्ड्यलाबूखर्जूर्यास्तगरेऽपि च । पी

हे० चं०

नां० २

हे॰ चं॰ ऊर्म्मिमद्गोत्रंसस्यपासुसरलद्रुमे ॥ १२४ ॥ भाण्डंमूलवणिग्वित्तेतुर
ना॰ २ ङ्गाणाञ्चमण्डने । नदीकूलद्वयीमध्येभूषणेभाजनेऽपिच ॥ १२५ ॥
मण्डोमस्तुनिभूषायामेरण्डेसारपिच्छयोः । शाकेमण्डात्वामलक्यांमुण्डो
मुण्डितशीर्षयोः ॥ १२६ ॥ राहौदैत्यान्तरेरण्डात्वाखुपर्णीमृतप्रिया ।
व्याडोहिंस्रपशौसर्पेशुण्डाकरिकरःसुरा ॥ १२७ ॥ जलेभीनंनलि
नीवारस्त्रीमुण्डोमदनिर्भरे । शौण्डीचविकपिप्पल्योःशौण्डोविख्यातम
त्तयोः ॥ १२८ ॥ षण्डःपेयान्तरेभेदेषण्डःकाननदूरे ।॥ ❀ ॥ द्विस्व
रडान्ताः ॥ ❀ ॥ गूढंरहःसंवृतयोर्द्रढंद्राभिलाषयोः ॥ १२९ ॥
दृढःशक्तेभृशेस्थूलेबाढंभृशप्रतिज्ञयोः । माढिर्दैन्यंपत्रसिराचमूढस्त
न्द्रितेजडे ॥ १३० ॥ राढापुर्यांशोभायांव्यूढान्यस्तोरुसंहताः । वोढा
स्याद्भारिकेसूतेवण्ठवर्णितुसौविदौ ॥ १३१ ॥ वध्यपुंसीङ्गरेक्लीवेसौ
ढामर्षणासक्तयोः । ॥ ❀ ॥ द्विस्वरढान्ताः ॥ ❀ ॥ अणिरणिवदश्रौ
स्त्रीमन्यश्राग्रकीलके ॥ १३२ ॥ अणुर्व्रीह्यल्पयोरुष्णोग्रीष्मदक्षा
नपाहिमाः । ऊर्णाभूमध्यगावर्त्तेमेषादीनाञ्चलोमनि ॥ १३३ ॥ कर
णंदेयेजलेदुर्गेकणोधान्यांशलेशयोः । कणाजीरकपिप्पल्योःकर्णस्तुपार्थ
तौश्रुतौ ॥ १३४ ॥ क्षणःकालविशेषेस्यात्पर्वण्यवसरेमहे । व्यापार
विकलत्वेचपरतन्त्रत्वमध्ययोः ॥ १३५ ॥ कीर्णःक्षिप्तेहतेछन्नेकुणिः
कुकारवृक्षयोः । कृष्णःकाकेपिकेवर्णेविष्णौव्यासेऽर्जुनेकलौ ॥ १३६ ॥

कृष्णातु नील्यां द्रौपद्यां पिप्पलीद्राक्षयोरपि । कृष्णंतु मरिचे लोहे कोणो
वीणादिवादने ॥ १३७ ॥ लगुडेऽश्रौ लोहिताङ्गे गणः प्रमथसंख्ययोः ।
समूहे सैन्यभेदे च गुणो ज्यासूदतन्तुषु ॥ २३८ ॥ रज्जौ सत्त्वादौ संध्या
दौ शौर्यादौ भीम इन्द्रिये । रूपादौ च प्रधाने च दोषान्यस्मिन्विशेषणे
॥ १३९ ॥ गेष्णुर्नटे गायके च घ्राणंतु घ्रातृघ्रेययोः । घृणातु स्याज्जुगु
प्सायां करुणायां घृणिः पुनः ॥ १४० ॥ अंशुज्वालातरङ्गेषु चूर्णानि वा
सयुक्तिषु । चूर्णः क्षोदे क्षारभेदे जीर्णो जीर्णद्रुमेत्वृषु ॥ १४१ ॥ जिष्णु
शक्रेऽर्ज्जुने विष्णौ जित्वरेऽर्केवसुष्वपि । भ्रूणिः क्रमुकभेदे स्याद्दृष्टदेव
श्रुतावपि ॥ १४२ ॥ त्राणं त्राते रक्षणे च त्रायमाणौषधावपि । तीक्ष्णं समुद्र
लवणे विषायोमरकाजिषु ॥ १४३ ॥ आत्मत्यागिनि तिग्मे च तूणी नीलीनि
षङ्गयोः । द्रुणः स्याद्वृश्चिके भृङ्गे द्रुणं चापकृपाणयोः ॥ १४४ ॥ द्रुणी कू
र्म्यां जलद्रोण्यां देष्णुर्दातरि दुर्द्दमे । द्रोणः पार्थगुरौ काके माने द्रोणीतु नीवृ
ति ॥ १४५ ॥ नौभेदे शैलभेदे च पणः कार्षापणे ग्लहे । विक्रय्यशाकादि
मुष्टौ बद्धे मूल्ये भृतौ धने ॥ १४६ ॥ व्यवहारे च दानाद्युत्सृष्टे गण्डकविंशतौ
। पर्णः स्त्रियां पर्णं तु पत्रे प्राणोऽनिले बले ॥ १४७ ॥ हृदायोपूरिते गन्धर
से प्राणास्तु जीविते । पार्ष्णिः कुंभ्यां च भूपृष्ठे पादमूलोन्मदस्त्रियोः ॥ १४८ ॥
पूर्णः कृत्स्ने पूरिते च फाणिर्गुडकरण्डयोः । बाणो वृक्षविशेषे स्याच्छरस्या
वयवे शरे ॥ १४९ ॥ बलिपुत्रेऽप्यथ भ्रूणो गर्भिण्यां श्रोत्रियद्विजे । अ

हे॰ चं॰ र्भकस्त्रैणगर्भे च मणिस्त्वजागलस्तने ॥ १५० ॥ मेढ्राग्रेऽलिञ्जरे रत्नेमो
ना॰ २ णः सर्पकरण्डके । वानेन क्रमक्षिकायां रणः कोणो क्वणो युधि ॥ १५१ ॥
रेणुर्धूल्यां पर्प्पटके वर्णास्स्वर्णे व्रते स्तुतौ । रूपे द्विजादौ शुक्लादौ कुथाया
मक्षरे गुणे ॥ १५२ ॥ भेदे गीतक्रमे चित्रे यशस्तालविशेषयोः । अङ्ग
रागे च वर्णन्तु कुङ्कुमे वाणिरम्बुदे ॥ १५३ ॥ व्यूतौ मूल्ये सरस्वत्यां वीणा स्याद्व
ल्लकीतडित् । वृष्णिर्मेषे यादवे च वेणी सेतुप्रवाहयोः ॥ १५४ ॥ देवता
डे केशबन्धे त्रेणुर्वंशे नृपान्तरे । शाणः कषे मानभेदे श्रेण्याल्यां कारुसंहतौ
॥ १५५ ॥ शोणो नदे रक्तवर्णे स्योनाकेऽश्वे हयान्तरे । स्थाणुः कीले हरे स्थू
णास्तूर्म्यां स्तम्भेरुगन्तरे ॥ १५६ ॥ ❁ ॥ द्विस्वरणान्ताः ॥ ❁ ॥ अ
न्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः । अवयवेऽप्यथार्हन्स्यात्पूज्ये
तीर्थकरेऽपि च ॥ १५७ ॥ अस्तः क्षिप्ते पश्चिमाद्रौ वर्त्तिः खटनिपीडयोः
। आप्तो लब्धे च सत्ये चाथाप्तिः सम्बन्धलाभयोः ॥ १५८ ॥ ईतिरजन्ये
प्रवासे स्याद्भूतिः स्फूर्त्तिरक्षयोः । ऋतं शिलोञ्छे पानीये पूजिते दीप्तसत्य
योः ॥ १५९ ॥ ऋतिर्जुगुप्सा कल्याणगतिस्पर्द्धास्वथो ऋतुः । स्त्रीणां
पुष्पे वसन्तादावेतः कर्बुर आगते ॥ १६० ॥ क्षत्ता शूद्रान्नक्षत्रियायां जाते
सारथिवेधसोः । नियुक्ते दासजे द्वाःस्थे कन्तुः कामकुशूलयोः ॥ १६१ ॥
कान्तो रम्ये प्रिये ग्राव्णिकान्ता प्रियङ्गुयोषितोः । कान्तिः शोभाकामनयोः क्षि
तिर्गेहे भुवि क्षये ॥ १६२ ॥ कीर्त्तिर्यशसि विस्तारे प्रसादे कर्दमेऽपि च । क्र

तं पर्य्याप्तयुगयोर्विहिते हिंसितेफले ॥ १६३ ॥ छातं छिन्ने चेष्टिते च केतु हे॰ चं॰
र्द्युतिपताकयोः । ग्रहोत्पातादिचिह्नेषु गर्त्तोऽवटे कुकुन्दरे ॥ १६४ ॥ त्रिग ना॰ २
र्त्ता शेप्यथ ग्रस्तं जग्धे लुप्तपदोदिते । गतिर्वृत्त व्रणो ज्ञाते यात्रोपायदशा
स्वसु ॥ १६५ ॥ गान्तापुंस्कोकिले भृङ्गे गन्धर्वे रोषणेपि च । गीतिश्छ
न्दसि गाने च गीतं शब्दितगानयोः ॥ १६६ ॥ गुप्तं गूढे त्राते गुप्तिर्यमे भू
गर्त्तरक्षयोः । कारायां घृतमाज्याम्बुदीप्तेष्वथ चिता चितौ ॥ १६७ ॥ मृ
तार्थदारुषु चये जगल्लोके गवायुषु । जातं जातेऽथ जनिषु जातिः सामा
न्यगोत्रयोः ॥ १६८ ॥ मालत्यामामलक्यां च चुल्ल्यां कंपिल्लजन्म
नोः । जातीफले छन्दसि च ज्ञातिः पितृसगोत्रयोः ॥ १६९ ॥ ततं वी
णादिवाद्ये स्यात्ततो व्याप्तेऽनिले पृथौ । तातोऽनुकंप्ये पितरि तिक्तस्तु र
भेरसे ॥ १७० ॥ तिक्तातु कटुरोहिण्यां तिक्तं पर्पटको मधे । त्रेता युगेऽ
ग्निचितये दन्तो दशनसानुनोः ॥ १७१ ॥ दन्त्यौषध्यामथ दितिर्दै
त्यमातरि खण्डने । दीप्तं निर्भासने दग्धे द्रुतं शीघ्रविलीनयोः ॥ १७२ ॥
द्युतिस्त्विषो भादीधित्योर्धाता वेधसि पालके । धातू रसादौ श्लेष्मादौ भ्वादिग्रा
व विकारयोः ॥ १७३ ॥ महाभूतेषु लोकेषु शब्दादाविन्द्रियेऽस्थनि । धु
तं त्यक्ते कम्पने च धूतौ कम्पितभर्त्सितौ ॥ १७४ ॥ धूर्त्तस्तु खण्डलवणे धू
र्त्ते धत्तूरमायिनोः । धृतिर्योगविशेषे स्याद्धारणाधैर्य्ययोः सुखे ॥ १७५ ॥
सन्तोषाध्वरयोश्चापि नक्तस्तगरनप्तयोः । नीतिर्नयेप्रापणे च पंक्तिर्गौ

हे॰चं॰ रवपाकयोः ॥ १७६ ॥ पंक्तिश्छन्दःश्रेण्योः पत्तिःसेनाभित्पद्गयोर्गतौ ।
ना॰ २ प्राप्तिर्म्महोदयेलाभेपित्सन्पिपतिषन्यथा ॥ १७७ ॥ पतनेच्छौविह
ङ्गेचपीतोवर्णेनिपीतयोः । पीताहरिद्रापीतिःपानेऽश्वेप्रीतिःस्मरस्त्रियां
॥ १७८ ॥ प्रेम्णियोगमुदोःपुस्तंशिल्पलेप्यादिकर्म्मणि । पुस्तकेप्लुतमश्व
स्यगतौप्लुतस्त्रिमात्रके ॥ १७९ ॥ पूर्त्तंपूरितखातादयोःपृषतवत्पृषन्मृगे ।
बिन्दौप्रेतोमृतेभूतविशेषेचपरेतवत् ॥ १८० ॥ पोतःशिशौप्रवहणेप्रो
तंगुम्फितवाससोः । भक्तमन्नेतत्परेचभर्त्तापोष्टरिधारके ॥ १८१ ॥
भक्तिःसेवागौणवृत्त्योर्भङ्ग्यांश्रद्धाविभागयोः । भास्वान्दीप्तेरवौभ्रान्तिर्मि
थ्याज्ञानेऽनवस्थितौ ॥ १८२ ॥ भित्तिःकुड्येप्रदेशेचभूतंसत्योपमानयोः ।
प्राप्तेऽतीतेपिशाचादौपृथ्व्यादौजंतुयुक्तयोः ॥ १८३ ॥ भूभृन्महीधरेपृथ्वी
पतौभूतिस्तुभस्मनि । मांसपाकविशेषेचसम्पदुत्पातयोरपि ॥ १८४ ॥
भृतिर्म्मूल्याभरणयोर्म्मतंस्यात्सम्मितेऽर्चिते । महद्वृहतिधीतत्त्वेराज्ये
महत्सुरेऽनिले ॥ १८५ ॥ मतिर्बुद्धीच्छयोर्म्मातागौर्दुर्गाजननीमही ।
मातरस्तुब्रह्माण्याद्यामितिरैयत्यमानयोः ॥ १८६ ॥ मुक्तामौक्तिकपुं
श्चल्योर्मुक्तिर्म्मोचनमोक्षयोः । मूर्त्तिःपुनःप्रतिमायांकायकाठिन्ययोरपि
॥ १८७ ॥ मृतंमृतौयाचितेऽपियन्तासूतेनिषादिनि । यतिर्न्निकारेविर
तौभिक्षौयुतोऽन्वितेपृथक् ॥ १८८ ॥ युक्तिर्न्याययोजनेचरक्तंनी
ल्यादिरञ्जिते । कुङ्कुमेऽसृज्यनुरक्तेप्राचीनामलकेऽरुणे ॥ १८९ ॥

रतिः स्मरस्त्रियां रागे रते रीतिस्तु पित्तले । वैदर्भ्यादौ लोहकिट्टे सीमनि स्रव
णे गतौ ॥ १९० ॥ लता ज्योतिष्मती दूर्वा शाखा वल्ली प्रियंगुषु । स्पृक्का मा
धव्योः कस्तूर्यां लिप्तं भुक्तविलिप्तयोः ॥ १९१ ॥ विषाक्ते लूतानुरोगे पिपी
लिकोर्णनाभयोः । वर्त्तिर्गात्रानुलेपिन्यां दशायां दीपकस्य च ॥ १९२ ॥
दीपे भेषजनिर्म्माणे नयनाञ्जनलेखयोः । व्यक्तो मनीषिस्फुटयोर्वार्त्ता
वार्त्ताक्युदन्तयोः ॥ १९३ ॥ कृष्यादौ वर्त्तने वार्त्तं त्वारोग्यारोगफल्गुषु ।
वृत्तिः शालिन्यथ व्याप्तिर्व्यापने लम्भनेऽपि च ॥ १९४ ॥ वास्तु स्याद्गृह
भूपूर्व्यां गृहे सीमन्तुरज्ज्वयोः । वित्तं विचारिते ख्याते धने वित्तिस्तु सम्भवे
॥ १९५ ॥ ज्ञाने लाभे विचारे च वीतमंकुशकर्म्मणि । असारश्वगजे श्रान्ते
वीतिरश्वेऽशने गतौ ॥ १९६ ॥ प्रजने धावने दीप्तौ वृत्तं वृत्तौ दृढे मृते । च
रित्रे वर्त्तुले छन्दस्यतीताधीतयोर्वृते ॥ १९७ ॥ वृन्तं स्तनमुखे पुष्पबन्धे
वृत्तिस्तु वर्त्तने । कैशिक्यादौ विवरणे वृत्तिर्वरणवाटयोः ॥ २९८ ॥ श
क्तिरायुधभेदे स्यादुत्साहादौ बले स्त्रियां । शस्तं क्षेमे प्रशस्ते च शान्तोदान्ते
रसान्तरे ॥ १९९ ॥ शास्ता जिने शासके च शान्तिर्भद्रे शमेऽर्हति । शि
तं शातौ कृशे तीक्ष्णे शितिर्भूर्जे सितेऽसिते ॥ २०० ॥ श्रीमान्मनोज्ञे तिलके
पादपे धनवत्यपि । शीतो हिमे च जिह्मे च वानीरबहुवारयोः ॥ २०१ ॥
शीतं गुणे मुक्तमस्त्रे पूते भूते च कर्क्कशे । शुक्तिः शंखनखे शंखे कपाल
खण्डदृग्रुजोः ॥ २०२ ॥ न स्त्री स्याद्वर्त्तयोर्मुक्तास्फोटदुर्नामयोरपि ।

 श्रुतमाकर्णितेशास्त्रेश्रुतिराम्नायवार्त्तयोः ॥ २०३ ॥ षड्जाद्यारम्भिकायां
 चकर्णाकर्णनयोरपि । श्वेतंरूप्येश्वेताद्वीपेवर्णेशैलेकपर्द्दके ॥ २०४ ॥
श्वेतातुशंखिनीकाष्ठपाटल्योःस्यात्सतीपुनः । कात्यायन्यांचसाध्व्यांसाति
र्दानावसानयोः ॥ २०५ ॥ सितस्त्ववसितेबद्धेवर्णेसितातुशर्करा ।
स्थितऊर्द्धेसप्रतिज्ञेस्थितिःस्थानेचसीम्निच ॥ २०६ ॥ सीताजनकजागंगा
भेदयोर्हलपद्धतौ । सुतःपुत्रेनृपेसुप्तिःस्वापेस्पर्शाज्ञतारुजि ॥ २०७ ॥
सूतःपारदसारथ्योःप्रसूतेरितवन्दिषु । ब्राह्मण्यांक्षत्रियाज्जा
तेतक्ष्णिसृतिर्निर्गमेपथि ॥ २०८ ॥ स्मृतिःस्मरणधीच्छासुशास्त्रेसेतु
स्तुसंचरे । नदीसंक्रमेऽथहस्तःकरेमानदुभेदयोः ॥ २०९ ॥ केशात्क
लापेशुण्डायांहरिद्विपितृणान्तरे । वर्णभेदेऽश्वभेदेचहितंपथ्येगतेधृ
ते ॥ २१० ॥ इतिर्च्चोलास्त्रसूर्य्यांशु ॥ ❁ ॥ द्विस्वरतान्ताः ॥ ❁ ॥ ध्व
र्थेहेतौप्रयोजने । निवृत्तौविषयेवाच्येप्रकारद्रव्यवस्तुषु ॥ २११ ॥ आ
स्थायत्नालम्बनयोरास्थानापेक्षयोरपि । कंथापुरेप्रावरणेव्यथाव्यसनदुः
खयोः ॥ २१२ ॥ द्रव्यनिष्पाकेऽथकुथःस्यादास्तरणदर्भयोः । कोथस्तुम
थनेनेत्ररुग्भेदेशटितेऽपिच ॥ २१३ ॥ ग्रन्थोगुम्फेधनेशास्त्रेद्वात्रिंश
द्वर्णनिर्मिते । ग्रन्थिर्वस्त्रादिबन्धेरुग्भेदेकौटिल्यपर्वणोः ॥ २१४ ॥ ग्र
न्थिस्तुग्रन्थिपर्णेस्याद्गाथावाग्भेदवृत्तयोः । तीर्थंशास्त्रेगुरौयज्ञेपुण्यक्षेत्रेचाव
तारयोः ॥ २१५ ॥ ऋषिजुष्टेजलेसत्रिण्युपाध्येस्त्रीरजस्यपि । योनौपात्रे

दर्शनेचतुत्थोऽग्नौतुत्थमञ्जने ॥ २१६ ॥ तुत्थानील्यांसूक्ष्मलायांदुःस्थो छे० चं०
दुर्गतमूर्खयोः। प्रस्थःसानौमानभेदेपोथोऽर्केपीथमम्बुनि ॥ २१७ ॥ पृथु ना० २
विशालेभूपालेवापिकाकृष्णजीरयोः। प्रोथोऽश्वघोणाध्वगयोः कट्यांम
न्थोरवौमथि ॥ २१८ ॥ साक्तवेनेत्ररोगेचयूथंतिर्य्यग्गणेगणे। यूथीतुमा
गधीपुष्पविशेषयोः कुरंटके ॥ २१९ ॥ रथस्तुस्यन्दनेपादेशरीरेवेतस
द्रुमे। वीथीवर्त्मनिपङ्क्तौचगृहाङ्गेनाट्यरूपके ॥ २२० ॥ संस्थानाशेव्यवस्था
यांव्यक्तिसादृश्ययोःस्थितौ। क्रतुभेदेसमाप्तौचचरेचनिजराष्ट्रके ॥ २२१ ॥
सार्थोवणिग्गणेवृन्देधनेनसहितेऽपिच। सिक्थंनील्यांमधूच्छिष्टेसिक्थोभ
क्तपुलाकके ॥ २२२ ॥ ❁ ॥ द्विस्वरथान्ताः ॥ ❁ ॥ अब्दःसंवत्सरेमेघेमुस्त
केगिरिभिद्यपि। अन्दुःस्यान्निगडेभूषाभेदेककुदवत्ककुत् ॥ २२३ ॥ श्रे
ष्ठेविषाङ्गेराजचिह्नेक्रव्यान्मांसाशिरक्षसोः। कन्दोऽब्देसूरणेसस्य
मूलेकुन्दोच्युतेनिधौ ॥ २२४ ॥ चक्रभ्रमौचमाघ्येचक्षोदःपेषणचूर्णयोः।
गदःकृष्णानुजेरोगेगदाप्रहरणान्तरे ॥ २२५ ॥ छदःपत्रेपतत्रेचग्र
न्थिपर्णतमालयोः। छन्दोवशेऽभिप्रायेचदृषत्पाषाणमात्रके ॥ २२६ ॥
निष्पेषणार्थपट्टेऽपिधीदाकन्यामनीषयोः। नदोह्रदेऽब्धौनिनदेन
द्यासम्पद्यलिञ्जरे ॥ २२७ ॥ तिथिभेदेचनन्दिस्तुप्रतीहारेपिनाकि
नः। आनन्दनेचद्यूतेचनिन्दाकुत्सापवादयोः ॥ २२८ ॥ पदंस्थाने
विभक्त्यन्तेशब्देवाक्यैकवस्तुनोः। त्राणेपादेपादचिह्नेव्यवसायापदेश

है॰चं॰ यो: ॥ २२९ ॥ पादोमूलेऽस्ततुर्य्यांशाङ्घ्रिषुप्रत्यन्तपर्वते । भद्रंकल्याणे
ना॰ २ सौख्येचभसङ्ख्यास्वरमासयोः ॥ २३० ॥ भेदोविदारणेद्वैधेऽप्युपजापवि
शेषयोः । मदोरेतस्यहंकारेमद्येहर्षेभदानयोः ॥ २३१ ॥ कस्तूरिका
यांक्षैव्येचमदीचषकवस्तुनि । मन्दोमूढेशनैारोगिण्यलसेभाग्यवर्जि
ते ॥ २३२ ॥ गजजातिप्रभेदेऽल्पेस्वैरेमदरतेखले । मृदुतीक्ष्णेकोम
लेचरदोदन्तोविलेखने ॥ २३३ ॥ विदाज्ञानधियोर्विन्दुर्विप्रुट्ज्ञाचोर
दक्षणे । वेदिरङ्गुलिमुद्रायांबुधेऽलंकृतभूतले ॥ २३४ ॥ शब्दोऽक्षरेय
शोगीत्योर्वाक्येखेश्रवणोध्वनौ । शरद्वर्षात्ययेवर्षेशादःकर्द्दमशष्पयोः
॥ २३५ ॥ संवित्संभाषणेज्ञानेसंयमेनाम्निनोषणे । क्रियाकारेप्रतिज्ञायां
संकेताचारयोरपि ॥ २३६ ॥ सम्पद्वृद्धौगुणोत्कर्षेहारेस्यादुस्तुन्दरे ।
मृष्टेसूदःसूपकारेव्यंजनेऽपिचसूपवत् ॥ २३७ ॥ स्वेदोघर्मेस्वे
दनेच ॥ ❁ ॥ द्विस्वरदान्ताः ॥ ❁ ॥ ऽन्धोऽधकारेऽक्षिवर्ज्जिते ।
अर्द्धःखण्डेऽर्द्धंसमांशेब्धाऽब्धिःसरसिसागरे ॥ २३८ ॥ आधिर्मनो
व्यथायांव्यसनेऽधिष्ठानेबन्धकाशयोः । ऋद्धंसमृद्धेसिद्धान्तेगन्धस्सम्बन्ध
लेशयोः ॥ २३९ ॥ गन्धकामोदगर्वेषुगाधःस्यात्स्थानलिप्सयोः ।
गोधाप्राणिविशेषेस्याज्ज्याघातस्यचवारणे ॥ २४० ॥ दधिगोरसभेदेस्यात्त्र
थाश्रीवासवासयोः । दिग्धोलिप्तेविषाक्तेऽग्नौप्रवृद्धस्नेहयोरपि ॥ २४१ ॥
दुग्धंक्षीरेपूरितेचदोग्धागोपालवत्सयोः । अर्थोपजीविनिकवौबन्धआ

धौचबन्धने ॥ २४२ ॥ बंधुर्भ्रातृबान्धवयोर्बाधादुःखनिषेधयोः । बुधःसौ
म्येकवौबुद्धःपण्डितेबोधितेजिने ॥ २४४ ॥ बोधिर्बौद्धसमाधौचार्हद्धर्मा
सौचपिप्पले । मधुश्चैत्यर्तुदैत्येषुजीवाशोकमधूकयोः ॥ २४४ ॥ म
धुक्षीरेजलेमद्येक्षौद्रेपुष्परसेपिच । मिद्धंचिन्ताभिसंश्लेषेनिद्रालसित
योरपि ॥ २४५ ॥ मुग्धोमूढेरम्येमेधःक्रतौमेधातुधीमुषी । राधोवैशाखमा
सेस्याद्राधाविद्युद्विशाखयोः ॥ २४६ ॥ विष्णुक्रान्तामलक्योस्तुगोपीविध
विशेषयोः । लुब्धआकांक्षिणिव्याधेवधोहिंसकहिंसयोः ॥ २४७ ॥
वधूःपत्न्यांस्नुषानार्य्योःपृक्कासारिवयोरपि । नवपरिणीतायांचव्याधोमृ
गयुदुष्टयोः ॥ २४८ ॥ विद्धंसदृग्वेधितयोःक्षिप्तेविधर्द्धिमूल्ययोः । प्र
कारेभान्नविधिषुविधिर्ब्रह्मविधानयोः ॥ २४९ ॥ विधिर्वाक्येचदैवेचप्रका
रेकालकल्पयोः । विधुश्चन्द्रेच्युतेविष्णौस्वनायांविटपेऽपिच ॥ २५० ॥ वृ
द्धःप्राज्ञेस्थाविरेचवृद्धंशैलेयरूढयोः । वृद्धिःकलान्तरेहर्षेवर्द्धनेभेषजा
न्तरे ॥ २५१ ॥ श्रद्धास्तिक्येऽभिलाषेचश्राद्धंश्रद्धासमन्विते । हव्यकव्य
विधानेचशुद्धःकेवलपूतयोः ॥ २५२ ॥ स्कन्धःप्रकाण्डेकायेंशेविज्ञानादि
षुपंचसु । नृपेसमूहेव्यूहेचसंधास्थितिप्रतिज्ञयोः ॥ २५३ ॥ सन्धिर्योनौ
सुरुङ्गायांनाट्याङ्गेश्लेषभेदयोः । साधुर्जिनेमुनौवार्द्धुषिकेसज्जनरम्य
योः ॥ २५४ ॥ सिद्धोव्यासादिकेदेवयोनौनिष्पन्नमुक्तयोः । नित्येप्रसि
द्धेसिद्धिस्तुमोक्षेनिष्पत्तियोगयोः ॥ २५५ ॥ सिन्धुर्नद्यांगजमदेऽब्धौ

हे॰ चं॰
ना॰ २

हे०चं० देशनदभेदयोः । सुधागंगेष्टिकास्नुह्योर्मूर्वालेपाऽमृतेषु च ॥ २५६ ॥
ना० २ ॥ ❁ ॥ द्विस्वरधान्ताः ॥ ❁ ॥ अन्नंभक्तेऽशितेऽर्काम्भेऽधमेध्वाकाल
वर्त्मनोः । संस्थानेस्यादवस्कन्धेऽर्थिनौयाचकसेवकौ ॥ २५७ ॥ आत्मा
चित्तेधृतौयत्नेधिषणायांकलेवरे । परमात्मनिजीवेऽर्केहुताशनसमीरयोः
॥ २५८ ॥ स्वभावेऽथेनईशेऽर्केऽथोन्नंक्लिन्नेदयापरे । ऊष्माणस्तुनि
दाघोष्णग्रीष्माःशषसहाअपि ॥ २५९ ॥ कर्म्मकारकभेदेस्यात्क्रियायां
चशुभाशुभे । कामीस्यात्कमनेचक्रवाकेपारावतेऽपिच ॥ २६० ॥ कृ
तीयोग्येबुधेखड्गीगण्डकेखड्गधारिणि । ग्रावाश्मनिगिरौगोमीफेरौगोमत्यु
पासके ॥ २६१ ॥ घनस्सान्द्रेदृढेदार्ढ्येविस्तारेमुद्गरेम्बुदे । सङ्घेमुस्ते
घनंमध्यनृत्यवाद्यप्रकारयोः ॥ २६२ ॥ चर्म्मत्वचिस्फटेचर्म्मीभूर्जेफ
लकिभृंगिणोः । चक्रीकोकेकुलालेऽहौविकुण्ठेचक्रवर्त्तिनि ॥ २६३ ॥
चिह्नमङ्कपताकायांचीनोदेशेणतन्तुषु । ब्रीहौवस्त्रेछद्मशाठ्येऽपदेशेघा
तिकर्म्मणि ॥ २६४ ॥ छन्नंरहस्छादितयोश्छिन्नास्यादमृतेत्वरी । छिन्नं
भिन्नेजनोलोकेजगद्भेदेपृथग्जने ॥ २६५ ॥ जनीस्नुषावनितयोर्जि
नोऽर्हद्बुद्धविष्णुषु । ज्योत्स्नास्याज्ज्योतिःसंयुक्तनिशिचन्द्रातपेपिच
॥ २६६ ॥ ज्योत्स्नीपटोलीज्योत्स्नावन्निशोस्तनुर्वपुस्त्वचोः । विरलेऽ
ल्पेकृशेदण्डीयमेद्वाःस्थसदण्डयोः ॥ २६७ ॥ दानंमतंगजमदेरक्ष
णच्छेदशुद्धिषु । विश्राणनेऽप्यथद्युम्नंद्रविणवद्धनौजसोः ॥ २६८ ॥

धनं वित्ते गोधने च स्याद्धन्व स्थलचापयोः । धन्वा मरौ धन्वी पार्थे छेके क
कुभ चापिनोः ॥ २६९ ॥ धनुः शस्त्रे पियाले च राशिभेदे धनुष्यपि । धा है० चं०
म रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः ॥ २७० ॥ धाना भृष्टयवेंकुरे धा ना० २
न्याके चूर्णे सक्तुषु । धेनः समुद्रे धेना तु नद्यां स्याद्धारनीभिदि ॥ २७१ ॥
धेनुर्गीमात्रके दोग्ध्र्यां गविनग्नो विवाससि । मागधे च क्षपणके नग्नी गिरि
शवेत्रिणि ॥ २७२ ॥ गर्ह्ये भाण्डे वटे न्यूनं हीनवन्तो नगर्ह्ययोः । पर्व प्र
स्तावोत्सवयोर्ग्रन्थौ विषुवादिषु ॥ २७३ ॥ दर्शप्रतिपत्सन्धौ च तिथिग्रन्थवि
शेषयोः । पक्ष्माक्षिलोम्नि तन्त्वादिसूक्ष्मांशे कुसुमच्छदे ॥ २७४ ॥ ग
रुत्किञ्जल्कयोश्चापि पत्त्री काण्डे खगे द्रुमे । रथोऽङ्गे रथिके श्येने प्रेमा तु स्नेह
नर्मणोः ॥ २७५ ॥ ब्रह्मा तु तपसि ज्ञाने वेदेऽध्यात्मे द्विजे विधौ । ऋ
त्विग्योगभिदोश्चाथ बध्नो गिरिशमूलयोः ॥ २७६ ॥ भर्म्म भारे भृतौ हेम्नि भा
नुरंशौ रवौ दिने । भिन्नोऽन्यः सङ्गतः फुल्लो दीर्णो भोगी भुजङ्गमे ॥ २७७ ॥
वैयावृत्तिकरे राज्ञि ग्रामण्यां नापितेऽपि च । मानं प्रमाणे प्रस्थादौ मानश्चि
त्तोन्नतौ ग्रहे ॥ २७८ ॥ मीनो मत्स्ये राशिभेदे मुनिर्वाचंयमेऽर्हति । पि
यालागसि पालाशे मृत्स्ना मृत्सा तु वार्ध्यपि ॥ २७९ ॥ यानं युग्ये गतौ यो
निः कारणे भगतोययोः । रत्नं स्वजातिश्रेष्ठे स्यान्मणौ राजा तु पार्थिवे
॥ २८० ॥ निशाकरे प्रभौ शक्रे यक्षक्षत्त्रिययोरपि । रास्नैला पर्णीस
र्पाक्ष्योः रागी कामिनि रञ्जरि ॥ २८१ ॥ रोही रोहितकेऽश्वत्थे वटे लग्न

णुलञ्छिते । राशीनामुदयेसक्तेलक्ष्मप्रधानचिह्नयोः ॥ २८२ ॥ व
नंप्रस्नवणेगेहेप्रवासेंभसिकानने । वस्नंवस्नेधनेमूल्येमृतौवर्षंपुन
स्तनौ ॥ २८३ ॥ प्रमाणेस्नुःत्रकारेवर्त्मनेचच्छदेऽध्वनि । वर्णीपुन
श्चित्रकरेलेखकेब्रह्मचारिणि ॥ २८४ ॥ वानंशुष्कफलेशुष्केसीवने
गमनेकटे । जलसंप्लुतवातोर्मिस्तुरङ्गासौरभेषुच ॥ २८५ ॥ वाग्मीप
टुबृहस्पत्योर्वाजीवाणेहयेखगे । विन्नंविचारितेलब्धेस्थितेवृषातुवासवे
॥ २८६ ॥ वृषभेतुरगेपुंसिशाखीतुद्रुमवेदयोः । राजभेदेशिखीत्वग्नौवृ
क्षेकेतुग्रहेशरे ॥ २८७ ॥ चूडावतिबलीवर्देमयूरेकुक्कुटेहये । शीनो
मूर्खाजगरयोःश्येनःशुक्लेपतत्त्रिणि ॥ २८८ ॥ स्वप्नःस्वापेसुप्तज्ञाने
स्थानंस्थित्यवकाशयोः । सादृश्येसन्निवेशेचस्नानंस्नानीयआप्लवे
॥ २८९ ॥ स्त्यानंस्यात्स्निग्धआलस्येप्रतिध्वानघनत्वयोः । सादीतुरङ्ग
मारोहेनिषादिरथिनोरपि ॥ २९० ॥ स्वामीप्रभौगुहेसूनंपुष्पेसूनापु
नःसुता । अधोजिह्वावधःस्थानंसूनुःपुत्रेऽनुजेरवौ ॥ २९१ ॥ ह
नुःकपोलावयवेमरणामययोरपि । हरिद्रायामायुधेचहलीकृषकसीरि
णोः ॥ २९२ ॥ ❁ ॥ द्विस्वरनान्ताः ॥ ❁ ॥ कल्पोविकल्पेकल्पाद्रौ
संवर्त्तेब्रह्मवासरे । शास्त्रेन्यायेविधौकूपोगर्त्तेन्धौगुणवृक्षके ॥ २९३ ॥
मृन्मानेकूपकेक्षेपोगर्वेलंघननिन्दयोः । विलम्बेरणहेलासुगोपोभूपा
लवल्लवौ ॥ २९४ ॥ ग्रामौघगोष्ठाधिकृतौगोपंगोपालसुन्दरी । शा

रिवारस्त्रिकातल्पमट्टेशय्याकलत्रयोः ॥ २९५ ॥ त्रपालज्जाकुल हे॰चं॰
टयोस्त्रपुसीसकरङ्गयोः । तापःसन्तापेकृच्छ्रे चतापीतुसरिदन्तरे ना॰ २
॥ २९६ ॥ दर्पोमृगमदेगर्वेपुष्पंविकासआर्त्तवे । धनदस्यविमानेचकुसु
मेनेत्ररुज्यपि ॥ २९७ ॥ वाप्यऊष्माश्रुजलयोःस्यादूपंश्लोकशब्दयोः ।
पशावाकारेसौन्दर्य्येनाणकेनाटकादिके ॥ २९८ ॥ ग्रन्थावृत्तौस्वभा
वेचरेपःक्रूरेविगर्हिते । रोपौरोपणेषौरोपंरोध्रेलेपस्तुलेपने ॥ २९९ ॥
अशनेचसुधायांचवपाविवरमेदसोः । शष्पंतुप्रतिभाहीनतायांबालतृ
णेपिच ॥ ३०० ॥ शापःशपथआक्रोशेशिल्पंस्रुवेक्रियादिके । स्वापोनि
द्रायांरुग्भेदेशयनाज्ञानमात्रयोः ॥ ३०१ ॥ ❁ ॥ द्विस्वरपान्ताः ॥ ❁ ॥
गुंफोदोर्भूषणेदृब्धौरेफोऽवद्यरवर्णयोः । शफंखुरेगवादीनांमूलेविट
पिनामपि ॥ ३०२ ॥ शिफामातरिमांस्यांचजटायांस्यात्सरित्यपि । ॥ ❁ ॥
द्विस्वरफान्ताः ॥ ❁ ॥ कंबिर्वंशलतादर्व्योः कम्बुर्वलयशंखयोः ॥ ३०३ ॥
गजेशम्बूकेकर्चूरेग्रीवायांनलकेऽपिच । जम्बूर्मेरुनगाद्रिण्यांद्वीपवृक्षवि
शेषयोः ॥ ३०४ ॥ डिम्बःशरारुभययोर्विप्लवेबालेहिपुप्फुसे । बिम्बंतुप्र
तिबिम्बेस्यान्मण्डलेबिम्बिकाफले ॥ ३०५ ॥ शम्बःपवौलोहकांच्यांस्तम्ब
आलानगुल्मयोः । व्रीह्यादीनांप्रकाण्डेच ॥ ❁ ॥ द्विस्वरबान्ताः ॥ ❁ ॥
कुम्भोवेश्यापतौघटे ॥ ३०६ ॥ द्विपाज्जेराक्षसेराशौकुम्भीनिवृतिगुग्गुलौ ।
कुंभुषायांपाटलायांवारिपर्ण्यांचकट्फले ॥ ३०७ ॥ गर्भःकुक्षौशिशौसंधौ

हे० च० भूर्णे पनसकण्टके । मध्यमे चापवरके जम्भः स्याद्दानवान्तरे ॥ ३०८ ॥
ना० २ दन्तभोजनयोरंशे हनौ जम्बीरतूणयोः । जृम्भा जृम्भणे विकासे डिम्भो वैधे
यबालयोः ॥ ३०९ ॥ दम्भः कल्के कैतवे च दर्भो ग्रन्थे कुशेऽपि च । दृग्भूः
पवौ भास्करे च नाभिः क्षत्रच प्रधानयोः ॥ ३१० ॥ चक्रमध्ये मृगमदे प्राण्य
ङ्गे मुख्यराज्ञि च । निभस्स्यात्सदृशे व्याजे रम्भो वेणौ वदण्डके ॥ ३११ ॥
रम्भा चित्रशभामिन्यां कदल्यां च विभुः प्रभौ । व्यापके शङ्करे नित्ये शम्भु
र्ब्रह्मार्हतोः शिवे ॥ ३१२ ॥ स्तुभो युगे स्तुभं भद्रे शोभा कान्तीच्छयोर्मता ।
स्तम्भो जाड्ये स्थूणायां सभा द्यूत समूहयोः ॥ ३१३ ॥ गोष्ठ्यां सभ्येषु शा
लायां स्वभूर्विष्णौ विधावपि । स्तोभस्त्याम विस्क्षेदे हेलने स्तम्भनेऽपि
च ॥ ३१४ ॥ ❁ ॥ द्विस्वरभान्ताः ॥ ❁ ॥ आमोऽपक्वे रोगभेदे रोगे चेध्मः
समिद्धिदि । कामे वसन्तो काष्ठे स्याद्द्रुमो नगर घट्टयोः ॥ ३१५ ॥ उमा गौ
र्य्यां हरिद्रायां कीर्त्तिकान्त्यतसीषु च । ऊर्म्मिः पीडाजवोत्कण्ठा भङ्ग प्रका
श्यवीचिषु ॥ ३१६ ॥ वस्त्र संकोच लेखायां क्रमः कल्पांघ्रि शक्तिषु । परि
पाट्यां क्षमः शक्ते हिते युक्ते क्षमावति ॥ ३१७ ॥ क्षमा क्षान्तौ क्षितौ कार्म
बाढेऽनुमतिरेतसोः । कामः स्मरेच्छाकाम्येषु क्षुमा स्यान्नीलिका तसी
॥ ३१८ ॥ कृमिः क्रिमिवल्लाक्षायां कीटे क्षेमस्तु मङ्गले । लब्ध संरक्ष
णे मोक्षे क्षेमो माधनहर्य्यपि ॥ ३१९ ॥ क्षौमं स्यादतसी वस्त्रे दुकूलेऽ
ट्टालकेऽपि च । धर्म्मं क्षौमे पौरुषे च गमोध्वद्यूतभेदयोः ॥ ३२० ॥ सद्द

कृपाठेप्यथग्रामेवृन्दे शब्दादिपूर्वकः । खड्गादौसंवसथेचगुल्मःसैन्योप
रक्षणे ॥ ३२१ ॥ रुक्सैन्यघट्टभेदेषुस्तम्भेगुल्मीपटीकसि । आमल हे०च०
क्येलयोर्वन्यामथ घर्मोनिदाघवत् ॥ ३२२ ॥ स्वेदाम्भस्यातपेग्रीष्मो ना०२
ष्मणोर्जोल्मस्तुपामरे । असमीक्ष्यकारिणिचजामिःस्वसृकुलस्त्रियोः
॥ ३२३ ॥ जिह्मःकुटिलेमन्देचजिह्मंतगरपादपे । तोक्मंकर्णमलेतोक्मः
स्याद्धरितेहरिद्यवे ॥ २२४ ॥ दमस्स्यात्कर्दमेदण्डेमदनेदमथेऽपिच ।
दस्मस्तुहव्यवाहेस्याद्यजमानेमलिम्लुचे ॥ ३२५ ॥ द्रुमस्तुपादपेपारि
जातेकिंपुरुषेश्वरे । धर्मोयमोपमापुण्यस्वभावाचारधन्वसु ॥ ३२६ ॥
सत्सङ्गेऽर्हत्यहिंसादौन्यायोपनिषदोरपि । धर्मंदानादिकेनेमस्त्व
र्द्धेप्राकारगर्त्तयोः ॥ ३२७ ॥ अवधौकैतवेकालेनेमिःकूपत्रिकाप्रधिः ।
तिनिशेऽरिष्टनेमिस्तुपद्मोव्यूहेनिधावहौ ॥ ३२८ ॥ संख्याब्जयोःप
द्ममिभबिन्दौब्राह्मीतुभारती । शाकभेदःपंकगंडीहञ्जिकासोमवल्लरी
॥ ३२९ ॥ ब्रह्मशक्तिर्भ्रमस्तुस्याद्भ्रमणेवारिनिर्गमे । भ्रान्तौकुन्दाख्य
यन्त्रेचभामःक्रोधेरुचौरवौ ॥ ३३० ॥ भीमोवृकोदरेघोरेशंकरेप्यऽ
म्लवेतसे । भीष्मोरुद्रेचगाङ्गेयेराक्षसेचभयंकरे ॥ ३३१ ॥ भूमिःक्षि
तौस्थानमात्रेभौमोमङ्गलदैत्ययोः । यमःकालयमजयोरहिंसादिषुपं
चसु ॥ ३३२ ॥ संयमेयमनेध्वांक्षेयामौप्रहरसंयमौ । रमःकान्तेर
क्ताशोकेमन्मथेचरमाश्रियां ॥ ३३३ ॥ रश्मिर्घृणिप्रग्रहयोरमःश्या

 मेहलायुधे। पश्वभेदे सिते चारौ राघवे रेणुकासुते ॥ ३३४ ॥ रामन्तु वा
 स्तुके कुष्ठे रामा हिङ्गुलिनि स्त्रियोः। रुक्मं लोहे सुवर्णे च रुमास्याल्लव
णाकरे ॥ ३३५ ॥ सुग्रीवपत्न्यां लक्ष्मीः श्रीशोभासंपत्प्रियङ्गुषु। वमिर्वा
न्तेऽनले वामः कामे सव्ये पयोधरे ॥ ३३६ ॥ उमानाथे प्रतिकूले चारौ
वामा तु योषिति। वामी सृगाल्यां करभी रासभी वडवासु च ॥ ३३७ ॥
शमी द्रुभेदे वल्गुल्यां शिंब्यां श्यामोऽम्बुदे शितौ। हरिते प्रयागवटे कोकिले
वृद्धदारके ॥ ३३८ ॥ श्यामं सैन्धवे मरिचे श्यामा सोमलता निशाः।
शारिवा वागुजी गुन्द्रा त्रिवृत्कृष्णा प्रियङ्गुषु ॥ ३३९ ॥ अप्रसूतस्त्रियां नी
ल्यां श्रामो मण्डपकालयोः। सुषमो जसि सूर्ये च समं साध्वखिलं सदृ
क् ॥ ३४० ॥ सीमा घाटे स्थितौ क्षेत्रे सूक्ष्मोऽणौ सूक्ष्ममल्पके। अध्यात्मे
कतके सोमस्त्वोषधीतद्रसेन्दुषु ॥ ३४१ ॥ दिव्यौषध्यां घनसारे समी
रे पितृदैवते। वसुप्रभेदे सलिले वानरे किन्नरेश्वरे ॥ ३४२ ॥ हिमं तुषा
रे शीते च हिमस्तु चन्द्रे नपादपे। होमिः सर्पिषि वह्नौ च स्या ॥ ❁ ॥ द्वि
स्वरमान्ताः ॥ ❁ ॥ दर्यः स्वामिवैश्ययोः ॥ ३४३ ॥ अर्थ्यं शिलाजतुन्य
र्थ्यः संप्रार्थ्ये न्याय्यविज्ञयोः। अन्योऽसदृशेतरयोरन्त्यस्त्वन्त्यभवेऽधमे
॥ ३४४ ॥ अर्घ्यमर्घार्थमर्घार्हमास्यं मुखभवे मुखे। मुखान्तरे स्यात्तु स्थित्यामा
र्य्यै सज्जनसंविदे ॥ ३४५ ॥ आर्य्या मा छन्दसोरिज्या दाने संगेऽश्वरेऽर्च
ने। इभ्यो धनवतीभ्या तु करेणुः सल्लकीतरौ ॥ ४४६ ॥ कल्यं प्रभाते मधुनि स्व

कजेदक्षेनिरामये। कल्याकल्याणवाचीस्यात्कश्यंकशार्हमद्ययोः॥ ३४७॥ हे॰चं॰
अम्बमध्येक्ष्ययोगेहे कल्पान्तेऽपचयेरुजि। कन्यानार्य्यांकुमार्य्यांञ्चराश्यै नाः २
षधिविशेषयोः॥ ३४८॥ कक्ष्यागृहप्रकोष्ठेस्यात्स्यादृश्योद्योगकांचि
षु। वृहत्निकेभनाड्योस्त्रुकार्य्यंहेतौप्रयोजने॥ ३४९॥ कायःकटैवतेमूर्त्तौ
सङ्घेलक्ष्यस्वभावयोः। कायंमनुष्यतीर्थेचकाव्यास्यात्पूतनाधियोः॥ ३५०॥
काव्यंग्रन्थेकाव्यःशुक्रेकांस्यंतैजसवाद्ययोः। पानपात्रेमानभेदेक्रि
याकारणचेष्टयोः॥ ३५१॥ कर्मोपायचिकित्सास्तुनिष्कृतौसम्प्रधारणे
। अर्चाप्रारम्भशिक्षास्तुकल्यंतुकुलजेऽस्थनि॥ ३५२॥ स्रूर्प्यामिषाष्ट
द्रोणेषुकुल्यासरितिसारणौ। कृत्यौविद्विषिकार्य्येचकृत्यास्याद्देवताक्रि
या॥ ३५३॥ गव्यंक्षीरदिकेज्यायांस्यागवस्तुनिगोहिते। गव्यागोवृन्दग
व्यूत्योर्ग्राम्योग्रामभवेजने॥ ३५४॥ ग्राम्योरतबंधेस्त्रीलेगुह्यःकमठद
म्भयोः। गुह्यमुपस्थेरहस्येगृह्यान्तुमलवर्त्मनि॥ ३५५॥ गृह्योऽस्वैरि
णिपक्षेचगृहासक्तमृगाण्डजे। गृह्यानुशाखानगरेगेयौगातव्यगायनौ
॥ ३५६॥ गोप्यौदासेरगोप्तव्यौचयःप्राकारपीठयोः। समूहेप्यथच
व्यास्याच्चविकाशतपर्वणोः॥ ३५७॥ चित्यंमृतकचैत्येस्याच्चित्यामृतचि
तावपि। चित्यंजिनौकस्तद्बिम्बंचैत्योजिनसभातरुः॥ ३५८॥ उद्दे
शवृक्षस्येचाद्यन्तुपेर्य्येप्रश्नेऽद्भुतेऽपिच। छायापंक्तौप्रतिमायामर्कयोषित्य
नातपे॥ ३५९॥ उत्कोचेपालनेकान्तौशोभायांचतमस्यपि। जयोज

है०चं० यन्तोविजयेजयोमातत्सखीतिथिः ॥ ३६० ॥ पथ्याजयन्त्यग्निमन्थोज
ना० २ न्यो जामातृवत्सले । जनकेजननीयेचनवोढानुचरादिषु ॥ ३६१ ॥ ज
न्यंतौलोनेयुध्यहट्टेजन्यामातृसखीमुदोः । जन्युस्स्याज्जन्तुमात्रेचपावके
परमेष्ठिनि ॥ ३६२ ॥ त्रयीत्रिवेद्यांचितयेपुरंध्र्यांसुमतावपि । ताक्ष्र्यस्तु
स्यन्दनेवाहेगरुडेगरुडाग्रजे ॥ ३६३ ॥ अश्वकर्णाह्वयतरौस्यात्ता
र्क्ष्येतुरसाञ्जने । तिष्यःपुष्यवत्कलौभेतिष्यात्वामलकीतरौ ॥ ३६४ ॥
द्रव्यंभव्येधनेक्ष्मादौजतुद्रुमविकारयोः । विनयेभेषजेरीत्यांदस्यु
ःप्रत्यर्थिचोरयोः ॥ ३६५ ॥ दायोदानेयौतुकादिधनेसोल्लुंठभाषणे
। विभक्तव्यपितृद्रव्येदिव्यंवल्गुलवङ्गयोः ॥ ३६६ ॥ द्युभवेदिव्यामलक्यां
दूष्यंवासस्सितद्रुहे । दूषणीयेचाथदैत्योऽसुरेदैत्यामुरौषधौ ॥ ३६७ ॥
धन्यःपुण्ययुतेधन्यामलक्यामुपमातरि । धान्यंतुव्रीहौधान्यकेधिष्ण्यं
स्थानेउडुवेश्मसु ॥ ३६८ ॥ बलेधिष्ण्योऽग्नौशुक्रेचनयःस्यान्नैगमादि
षु । नीतिद्यूतभिदोर्न्नाट्यंलास्येतौर्य्यत्रिकेऽपिच ॥ ३६९ ॥ नित्यंतते
ध्रुवेपथ्यंहितंपथ्याहरितकी । पद्यान्त्यवर्णेस्यात्पद्यंश्लोकेपद्यातुवर्त्मनि
॥ ३७० ॥ प्रायोवयस्यनशनेमृतौबाहुल्यतुल्ययोः । प्रियोवृद्ध्यौषधे
हृद्येधवेपुण्यन्तुसुन्दरे ॥ ३७१ ॥ सुकृतेपावनेधर्मेपूज्यःश्वशुरवं
द्ययोः । पेयंपातव्यपयसोःपेयाश्राणाच्छमण्डयोः ॥ ३७२ ॥ बल्यं
रेतोबलकृतोर्भयंभीतौभयंकरे । कुब्जकपुष्पेभव्यन्तुफलेयोग्येशुभेऽस्त्र

नि ॥ ३७३ ॥ सत्येभाविनिभव्यस्तु कर्म्मरङ्गतरौ सति । भव्योमाकरि
पिप्पल्योर्भाग्यंकर्म्मशुभाशुभं ॥ ३७४ ॥ मध्यंन्याय्येऽवलग्नेन्तर्मेयादैत्यो हे॰ चं॰
ष्टवेसराः । मत्स्योमीमान्तरेमीनेविराटेऽभिख्ययाद्वे ॥ ३७५ ॥ मयुर्मृगा ना॰ २
श्वमुखयोर्मन्युर्दैन्येक्रतौक्रुधि । माल्यंमालाकुसुमयोः स्यान्मायाशाम्बरी
कृपा ॥ ३७६ ॥ दम्भोबुद्धिस्त्वमायस्तुपीताम्बरेऽम्बरेऽपिच । मूल्यंवस्त्रेचे
तनेचययुर्यज्ञहयेहये ॥ ३७७ ॥ याम्याप्राच्यांभरण्यांचयोग्यायोगार्द्ध
शक्तयोः । उपायिनिप्रवीणेचयोग्यमृद्धावृद्धयौषधे ॥ ३७८ ॥ योग्या
र्क्कयोषित्यभ्यासेरम्यस्त्वम्पकहृद्ययोः । रम्यंरश्चावथरथ्योरथांसेरथबोढरि
॥ ३७९ ॥ रथ्यातुरथसंघातेप्रतोल्यांपथिचत्वरे । रूप्यमाहतहेमा
स्ययोः । लभ्यंलभ्यवेयुक्तेचविंध्योव्याधाद्रिभेदयोः ॥ ३८१ ॥ विंध्या
त्रुटौलवल्यांचवीर्य्यंतेजःप्रभावयोः । शुक्रेशक्तौचवीक्ष्यंतुद्रष्टव्येवि
स्मयेऽपिच ॥ ३८२ ॥ वीक्ष्यस्तुलासकेवाहेवेश्यन्तुगणिकागृहे
। वेश्यातुपण्ययोषायांशल्यस्त्याश्मदनद्रुमे ॥ ३८३ ॥ नृपभेदेश्वा
विधिचसोश्निशस्त्रशलाकयोः । शय्यातल्पेशब्दगुम्फेशून्यंविन्दौचनिर्ज्जे
ने ॥ ३८४ ॥ शून्यातुतूलिकाशौर्य्येचारभट्यांबलेऽपिच । सह्यमारो
ग्येसोढव्येसह्योऽद्रौसव्यदक्षिणे ॥ ३८५ ॥ वामेचप्रतिकूलेचसत्य
गुशपथेद्वाने । तथ्येतकृतिसत्यस्तुलोकभित्संख्यमाहवे ॥ ३८६ ॥

हे० चं० संख्यैकादौविचारेचसंध्याकालनदीभिदोः। चिन्तायांसंश्रवेसीम्निसन्ध्या
ना० २ नेकुसुमान्तरे ॥ ३८७ ॥ साध्योयोगेसाधनीयेगणोदैवतभिद्यपि
। सायःपरेपराह्णेवस्थेयोऽक्षदृक्पुरोधसोः ॥ ३८८ ॥ सेव्यःसुग्री
वसेवार्हेसैन्यंसैनिकसैन्ययोः। सौम्यःसोमात्मजेऽनुग्रेमनोज्ञेसोमदैव
ते ॥ ३८९ ॥ सौम्यापुनर्मृगशिरःशिरःस्थाःपञ्चतारकाः। हार्य्यःक
लिद्रोर्हर्त्तव्येहृद्यंधवलजीरके ॥ ३९० ॥ हृत्प्रियेहृद्गतेहृज्जेहृद्या
तुवृद्धिभेषजे। हृद्यस्त्ववशकृन्मन्त्रे ॥ ❁ ॥ द्विस्वरयान्ताः ॥ ❁ ॥ ऽ
ग्रंपुरःप्रथमेऽधिके ॥ ३९१ ॥ उपर्यालम्बनेश्रेष्ठेपरिमाणेपलस्यच
। भिक्षाप्राकारेसंघातेप्रान्तेऽप्यद्रिस्तुपर्वते ॥ ३९२ ॥ सूर्येशाखिनिचा
भ्रन्तुत्रिदिवेगगनेऽम्बुदे। अस्रःशिरसिजेकोणेस्यादस्रंशोणितेऽश्रुणि
॥ ३९३ ॥ अस्त्रंचापेप्रहरणेऽप्यंघ्रिःपादद्रुमूलयोः। अरोऽजिनेऽरं
चक्राङ्गेशीघ्रशीघ्रगयोरपि ॥ ३९४ ॥ आरोरीतिःशनिर्भौमआराचर्मप्रभे
दिनी। इराम्भोवाक्सुराभूमिष्विन्द्रःशक्रेनरात्मनि ॥ ३९५ ॥ आदित्ये
योगभेदेचस्यादिन्द्रातुफणिज्झके। उग्रःक्षत्रियतःशूद्रासूनावुत्कटरु
द्रयोः ॥ ३९६ ॥ उग्रावचाछिक्किकयोरुस्रागव्योपचित्रयोः। उस्रोमयू
खेस्यादुष्ट्रीमृद्भाण्डेकरभस्त्रियां ॥ ३९७ ॥ ऐन्द्रिरिन्द्रसुतेकाकेऽथोड
ड्राजनपदान्तरे। ओड्राजनेजपापुष्पेकरःप्रत्यायशुण्डयोः ॥ ३९८ ॥
रश्मौवर्षोपलेपाणौक्षरोमेघेक्षरंजले। कद्रुःकनकपिङ्गेस्यात्कद्रूःस्यान्नाग

मातरि॥ ३९९॥ कारोबलेबधेयत्नेहिमाद्रौनिश्चयेयतौ। काराबन्धन हे॰ चं॰
शालायांबन्धेदूत्यांप्रसेवके॥ ४००॥ स्याद्धेमकारिकायांचक्षारःकाचेरसे ना॰ २
गुडे। भस्मनिधूर्त्तेलवणेकारिःशिल्पिक्रियापिच॥ ४०१॥ कारुस्तु
कारकेशिल्पेविश्वकर्म्मणिशिल्पिनि। कीरःशुकेजनपदेक्षीरंपानीयदुग्ध
योः॥ ४०२॥ क्षुरोगोक्षुरकेकोकिलाक्षेछेदनवस्तुनि। क्षुद्रोदरिद्रेकृपणे
निकृष्टेऽल्पनृशंसयोः॥ ४०३॥ क्षुद्राव्याघ्रीनटीव्यङ्गावृहतीसरघासुच
। चाङ्गेरिकायांहिंस्रायांमक्षिकामात्रवेश्ययोः॥ ४०४॥ कुरुःस्यादोदनेभू
पभेदेश्रीकण्ठजांगले। क्रूरान्नृशंसघोरोष्णकठिनाःकृच्छ्रमंहसि॥ ४०५॥
काष्ठेसान्तापनेक्षेत्रंभारतादौभगाङ्गयोः। केदारेसिद्धभूपत्न्योःक्रोष्ट्रीक्षी
रविदारिका॥ ४०६॥ शृगालिकालांगलीचक्षौद्रंतुमधुनीरयोः।
खरोरक्षोन्तरेतीक्ष्णेदुःस्पर्शेरासभेऽपिच॥ ४०७॥ खरुस्स्यादश्व
हरयोर्दर्पदन्तसितेषुच। खुरःशफेकोलदलेगरस्तूपविषेविषे॥ ४०८॥
रोगेगरंस्यात्करणेगात्रमङ्गशरीरयोः। गजाग्रदेशेऽथगिरिःपूज्येऽ
क्षिरुजिकंदुके॥ ४०९॥ शैलेगैरीयकेगीर्णावपिगुन्द्रस्तुतेजने। गु
न्द्राप्रियङ्गौकैवर्त्तीमुस्तकेभद्रमुस्तके॥ ४१०॥ गुरुर्महत्यांगिरिशे
पित्रादौधर्म्मदेशके। अलघौदुर्जरेचापिगृध्रोगृध्नौखगान्तरे॥ ४११॥
गोत्रंक्षेत्रेऽन्वयेछत्रेसंभाव्यबोधवर्त्मनोः। वनेनाम्निचगोत्रोऽद्रौगोत्रा
भुविगवांगणे॥ ४१२॥ गौरःश्वेतेऽरुणेपीतेविशुद्धेचन्द्रमस्यपि।

हे॰ च॰ विशदे गौरस्तु श्वेते सर्षपे पद्मकेसरे ॥ ४१३ ॥ गौर्य्युमा नग्निकोर्व्वीषु प्रि
मा॰ २ यङ्गौ वरुणस्त्रियां । रजन्यां रोचनीनद्योर्घस्रो वासरहिंस्रयोः ॥ ४१४ ॥
घोरो हरे दारुणे च चरस्स्याज्जङ्गमे स्पशे । चले द्यूतप्रभेदे च चक्रं प्रहर
णे गणे ॥ ४१५ ॥ कुलालाद्युपकरणे राष्ट्रे सैन्यरथाङ्गयोः । जलावर्त्तेद
म्भे चक्रः कोके चन्द्रोऽम्बुकाम्ययोः ॥ ४१६ ॥ स्वर्णे सुधांशौ कर्पूरे काम्पिल्ये
मेचकेऽपि च । चरुर्हव्यान्नभाण्डे च चारो बन्धावसर्प्पयोः ॥ ४१७ ॥
गतौ पियालवृक्षे च चित्रं खे तिलकेऽद्भुते । आलेख्ये कर्बुरे चित्रा त्वाखुप
र्ण्णी सुभद्रयोः ॥ ४१८ ॥ गोडुम्बाप्सरसोर्दन्त्यां नक्षत्रोरगभेदयोः । चीरं
वाससि चूडायां गोस्तने सीसपत्रके ॥ ४१९ ॥ चीरी कच्छाटिकाझिल्ल्योश्चु
क्रम्म्लेऽम्लवेतसे । वृक्षाम्ले चुक्री चाङ्गेर्य्यां चैत्रो मासाद्रिभेदयोः ॥ ४२० ॥
चैत्यं मृतकचैत्ये च चौरो दस्युसुगन्धयोः । छत्रं स्यादातपत्राणे छत्रा मधु
रिकौषधौ ॥ ४२१ ॥ धान्याके च शिलीन्ध्रे च छिद्रं विवररन्ध्रवत् । गर्त्ते दो
षे जारस्तूपपतौ जार्य्यौषधीभिदि ॥ ४२२ ॥ जीरस्तु जाज्यां खड्गे च
टारो लङ्गतुरङ्गयोः । तन्त्रं सिद्धान्ते राष्ट्रे च परच्छन्दप्रधानयोः ॥ ४२३ ॥
अगदे कुटुम्बकृत्ये तन्तुवाने परिच्छदे । श्रुतिशाखान्तरे शास्त्रे करणोभय
र्थसाधके ॥ ४२४ ॥ इतिकर्त्तव्यतातन्त्रे स्तन्त्रीस्याद्वल्लकीगुणे । अ
मृतायाञ्च नाड्यां च सिरायां च पुषोऽपि च ॥ ४२५ ॥ तरिर्द्रोण्यां वेडायां व
स्त्रादीनां च पेटके । तन्द्री निद्राप्रमीला च तारो निर्मलमौक्तिके ॥ ४२६ ॥

मुक्ताशुद्धावुच्चनादे नक्षत्रमेचमध्ययोः । तारं रूप्ये तारा बुद्धदेव्यां सुर हे०चं०
गुरुस्त्रियां ॥ ४२७ ॥ सुग्रीवपत्न्यां ताम्रं तु शुल्बे शुल्वनिभेऽपि च । न०२
तीव्रं कटूष्णात्यर्थेषु तीव्रा तु कटुरोहिणी ॥ ४२८ ॥ गण्डदूर्वा सुरीती च
बङ्गे तीरं पुनस्तटे । तोत्रं वेणुके प्रतोदे दरः स्याद्भयगर्त्तयोः ॥ ४२९ ॥
दरी तु कन्दरे दस्रः खरे दस्रौ रवेः सुतौ । द्वारं निर्गमेऽभ्युपाये धरः कूर्मा
धिपे गिरौ ॥ ४३० ॥ कर्प्पासतूलेऽथ धरा मेदोभूमिजरायुषु । धारो जलध
रसारवर्षे स्याद्दृणेऽपि च ॥ ४३१ ॥ धारोत्कर्षे खड्गाद्यग्रे सैन्याग्रे वाजि
नां गतौ । जलादिपाते सन्तत्यां धात्री भूम्युपमातरि ॥ ४३२ ॥ आमल
क्यां जनन्यां च धीरो ज्ञे धैर्य्यसंयुते । स्वैरे धीरं तु कुङ्कुमे नरो मर्त्येऽर्जुनेऽ
च्युते ॥ ४३३ ॥ नरं तु राम कर्पूरे नक्रं नासाग्रदारुणोः । नक्रो यादसि
नीध्रं तु बलीकवननेमिषु ॥ ४३४ ॥ चन्द्रे चरेवती भे च नेत्रं वस्त्रे मथो गु
णे । मूलाक्षिनेतृषु परो दूरान्यश्रेष्ठशत्रुषु ॥ ४३५ ॥ परं तु केवले प
न्त्र्यां मंपक्ष्मच्छदश्छुरी । पारं प्रान्ते परतटे पारी पूरपरागयोः ॥ ४३६ ॥
पात्र्यां कर्क्करिकायाश्च पादबन्धे च हस्तिनां । पात्रं तु कूलयोर्मध्ये पर्णे नृपतिम
न्त्रिणि ॥ ४३७ ॥ योग्यभाजनयोर्यज्ञभाण्डे नाट्यानुकर्त्तरि । पुरं शरी
रे नगरे गृहपाटलिपुत्रयोः ॥ ४३८ ॥ पुरः स्याद्गुग्गुलौ पुण्ड्रः क्रिमौ दैत्येक्षु
भेदयोः । वासन्त्यां तिलके पुण्डरीके पुण्ड्रा स्तु नीवृति ॥ ४३९ ॥ पुरः प्र
भे प्रचुरे स्वर्ल्लोकान्तपभेदयोः । पूरः स्याज्जलसंवृद्धौ व्रणसंशुद्धिखाद्ययोः

हि०चं० ॥ ४४० ॥ पोत्रं वस्त्रे मुखाग्रे च सूकरस्य हलस्य च। पौरं कतृणे पुरजे बभ्रुः
ना० २ पिङ्गाग्निशूलिषु ॥ ४४१ ॥ मुनौ विशाले नकुले विष्णौ भद्रन्तु मङ्गले।
मुस्तकश्रेष्ठयोः साधौ काञ्चने करणान्तरे ॥ ४४२ ॥ भद्रो राम चरे ह
स्तिजातौ मेरुकदम्बके। गवि शम्भौ भद्रा विष्टौ नभःसरिति कट्फले
॥ ४४३ ॥ कृष्णानन्तारास्नासु च भरोऽतिशयभारयोः। भरुर्भर्तृकन
कयोर्भीरोदग्रशतीद्वये ॥ ४४४ ॥ पलानां वीवधे चापि भीरुर्योषित्काते
रे। भूरिः स्वर्णे प्रचुरे च मन्त्रो देवादिसाधने ॥ ४४५ ॥ वेदांशे गुप्तवादे च
मरुः पर्वतदेशयोः। मारोऽनङ्गे मृतौ विघ्ने मारी चण्ड्यां जनक्षये ॥ ४४६ ॥
मात्रं त्ववधृतौ स्वार्थे कार्त्स्न्ये मात्रा परिच्छदे। अक्षरावयवे द्रव्ये मानेऽल्पे क
र्णभूषणे ॥ ४४७ ॥ कालवृत्ते च मित्रन्तु सख्यौ मित्रो दिवाकरे। यन्त्रं
देवाद्यधिष्ठाने पात्रभेदे नियन्त्रणे ॥ ४४८ ॥ यात्रोत्सवे गतौ वृत्तौ स
छुमुत्यातनीवृतोः। रुरुर्दैत्ये मृगे वेत्रं पीयूषपटवासयोः ॥ ४४९ ॥
रेतः सूतकयो रोध्रो लोध्रे रोध्रमघागसोः। रौद्रो भीष्मे रसे तीव्रे रौद्री गौर्यां च
रोवृतौ ॥ ४५० ॥ विटे जामातरि श्रेष्ठे देवतादेरभीप्सिते। वरन्तु घुसृणे
किञ्चिदिष्टे वरी शतावरी ॥ ४५१ ॥ वक्रं पुटभेदे वक्रः कुटिलक्रूरभौम
योः। वक्त्रमास्ये छन्दसि च वप्रः प्राकाररोधसोः ॥ ४५२ ॥ क्षेत्रे ताते चये रे
णौ वज्रं कुलिशहीरयोः। बालके वज्रा त्वमृता वर्द्ध्रः सीसवरत्रयोः
॥ ४५३ ॥ व्यग्रो व्यापृतकुलयोर्वारः सूर्यादिवासरे। महेश्वरावसरयोः

भृङ्गे कुब्जाख्यपादपे ॥ ४५४ ॥ वारस्तु मदिरापात्रेवारिह्रीबेरनीरयोः। हे० अं० का०
वारिर्वाच्यां सरस्वत्यां गजबन्धनभूम्यपि ॥ ४५५ ॥ व्याघ्रः करञ्जे शार्दूले ना० २
रक्तैरण्डतरावपि। श्रेष्ठेतूत्तरपदस्थस्स्याद्व्याघ्रीकण्टकारिका ॥ ४५६ ॥
वीरो जिने नटे श्रेष्ठे वीरं शृङ्ग्यां नतेऽपि च। वीरा गम्भारिकारम्भातामल
क्येलवालुका ॥ ४५७ ॥ मदिराक्षीरकाकोलीगोष्ठोदुम्बरिकासु च।
पतिपुत्रवतीक्षीरविदारीदुग्धिकास्वपि ॥ ४५८ ॥ वृत्रो मेघे रिपौ ध्वान्ते
दानवे वासवे गिरौ। वेरं घुसृणवृन्ताकशरीरे घुशरं जले ॥ ४५९ ॥ श
रः पुनर्दधिसारे काण्डतेजनयोरपि। शक्रोऽर्जुनतरविन्द्रे कुटजे
शस्त्रमायुधे ॥ ४६० ॥ लोहे शस्त्री क्षुरिकायां शद्रिर्जिष्णौ तडित्यपि।
शरुः कोपे शरे वज्रे शारः शबलवातयोः ॥ ४६१ ॥ द्यूतस्य चोपकर
णे शास्त्रं ग्रन्थनिदेशयोः। शारिः कुञ्जरपर्य्याणे शकुनौ द्यूतसाधने
॥ ४६२ ॥ शिग्रुः शोभाञ्जने शाके शीघ्रं त्वचकाङ्गतूर्णयोः। उशीरे शुक्र
स्तु शुक्रो ज्येष्ठमासेऽग्निकाव्ययोः ॥ ४६३ ॥ शुक्रं तु रेतोऽक्षिरुजोः शु
भ्रं दीप्तेऽभ्रके सिते। शूरश्चारभटे सूर्य्ये सरौदध्यग्रसायकौ ॥ ४६४ ॥
स्वरः शब्देऽचि षड्जादौ सत्रमाच्छादने क्रतौ। सदादाने वने दम्भे सत्रः
स्याद्धूपषण्डके ॥ ४६५ ॥ अध्वरे कुलिशे बाणे सारो मज्जास्थिरांशयोः।
बले श्रेष्ठे च सारं तु द्रविणन्याय्यवारिषु ॥ ४६६ ॥ स्फारस्तु स्फरकादौ
स्यांबुद्बुदे विपुलेऽपि च। स्थिरो मोक्षे निश्चले च स्थिरा भूः शालपर्ण्यपि

हे॰चं॰ ॥ ४६७ ॥ सिप्रः स्वेदे सिप्रा नद्यां सिरा नाड्यम्बुवाहिनी । सिरस्तु पिप्प
ना॰ २ लीमूलं सीरस्स्यादंशुमालिनि ॥ ४६८ ॥ लाङ्गलेऽथ सुरो देवे सुरा चष
कमद्ययोः । सूचनं तु सूचनाकारि ग्रन्थे तन्तुव्यवस्थयोः ॥ ४६९ ॥
स्वैरो मन्दे स्वतन्त्रे च हरो नाशकरुद्रयोः । वैश्वानरेऽप्यथ हरिर्दिवाकर
समीरयोः ॥ ४७० ॥ यमवासवसिंहांशुशशाङ्ककपिवाजिषु । पि
ङ्गवर्णे हरिद्वर्णे भेकोपेन्द्रशुकाहिषु ॥ ४७१ ॥ लोकान्तरे च हारस्तु मु
क्तादामनि संयुगे । हिंस्रः स्याद्घातुके हिंस्रा मांसी काकादनी वसा ॥ ४७२ ॥
हीरो वज्रे हरे सर्पे हीरा पिपीलिकाश्रियोः । होरा तु लग्ने राश्यर्द्धे शास्त्रे रेखाप्र
भिदयोः ॥ ४७३ ॥ ❁ ॥ द्विस्वररान्ताः ॥ ❁ ॥ अलिः सुरापुष्पलि
होरम्लो रसेऽम्लवेतसे । अम्ली चाङ्गेर्य्यामालं स्यादनल्पहरितालयोः
॥ ४७४ ॥ आलिः सख्यावलीसेत्वनर्थेषु विशदाशये । आलुर्गल
न्तिकायां स्यादालुर्भेलककन्दयोः ॥ ४७५ ॥ इलोर्वीवाग्बुधस्त्रीगौः क
लन्त्वजीर्णे रेतसोः । अव्यक्तमधुरध्वाने कलास्यात्कालशिल्पयोः
॥ ४७६ ॥ कलने मूलरैवृद्धौ षोडशांशे विधोरपि । कलिर्विभीतके शूरे
विवादेन्त्ययुगे युधि ॥ ४७७ ॥ कालः पुनः कृष्णवर्णे महाकालकृतान्तयोः
। मरणानेहसोः काली कालिका क्षीरकीटयोः ॥ ४७८ ॥ मातृभेदो म
षीनव्यमेघौघपरिवादयोः । कालाकृष्णात्रिवृन्नील्योर्जिंग्यां कीलोऽ
ग्नितेजसि ॥ ४७९ ॥ कफोणिस्तम्भयोः शङ्कौ कीलारतद्धूनावपि ।

कुलं कुल्यगणे देहे जनपदेऽन्वयेऽपि च ॥ ४८० ॥ कूलं तटे सैन्यपृष्ठे हे० चं०
तडागस्तूपयोरपि । कोलो भेलक उत्सङ्गेऽङ्कपाल्यां श्विचके किरौ ना० २
॥ ४८१ ॥ कोलन्तु वदरे कोला पिप्पल्याञ्चव्यभेषजे । खलः कल्के भुवि स्था
नेक्रूरे कर्णेजपेऽधमे ॥ ४८२ ॥ खल्लो निम्ने वस्त्रभेदे चर्म्मचातकपक्षि
णोः । खल्ली तु हस्तपादावमर्द्दनाह्वयरुज्यपि ॥ ४८३ ॥ गलः कण्ठे
सर्ज्जरसे गोलस्स्त्र्यां त्वर्ववर्त्तुले । गोला पाञ्चाञ्जने गोदावर्य्यां सख्याम लि
ञ्जरे ॥ ४८४ ॥ मण्डले च कुनट्यां च बालक्रीडनकाष्ठके । चिल्लः ख
गे स चुल्लस्त्वपिल्लवत् क्लिन्नलोचने ॥ ४८५ ॥ क्लिन्नाक्षिणि चुल्ली तूद्धा
मे चेलं गर्हितवस्त्रयोः । चोला कूर्पासके देशे चोलं कर्म्मणि मुण्डने ॥ ४८६ ॥
छलं छद्मस्खलितयोश्छल्ली सन्तानवीरुधोः । वल्कले पुष्पभेदे च जलं
गोकलले जडे ॥ ४८७ ॥ ह्रीवेरेम्बुनि जालन्तु गवाक्षे क्षारके गणे । द
म्भानामययोर्जालो नीपे जाली पटोलिका ॥ ४८८ ॥ झल्ला पुच्छा मात
पोर्म्भीभिर्झल्ली तूद्वर्त्तनाशके । वर्त्यान्तपरुचोस्त्री यर्थ्यां तलं ज्याघातवारणे
॥ ४८९ ॥ तलस्त्वपेटेना लट्ठा स्वभावाधारयोः त्सरौ । तल्लो जलाधारभे
दे तल्ली तु वरुणस्त्रियां ॥ ४९० ॥ नासः कालक्रियामाने हस्तमानद्रुभे
दयोः । करास्फोटे करतले हरितालेत्सरावपि ॥ ४९१ ॥ तुलामानेप
लशते सादृश्ये राशिभाण्डयोः । गृहाणां दारुबन्धायपीठ्यां तूलन्तु खे
पिचौ ॥ ४९२ ॥ ब्रह्मदारुण्यथ दलं शस्त्रीकंदेऽर्द्धपर्णयोः । उत्सेध

हे० च० वद्वस्तुनि च नलो राज्ञि कपौ नडे ॥ ४९३ ॥ पितृदैवे नलन्तु स्यात्पद्मे नली
ना० २ मनःशिला । नालं काण्डे मृणाले च नाली शाके कलम्बके ॥ ४९४ ॥ नील
वर्णे मणौ शैले निधि वानरभेदयोः । नीली ओषध्यां लाञ्छने च पलमुन्मान
मांसयोः ॥ ४९५ ॥ पल्लिस्तु ग्रामके कुड्यां पालिर्यूकाश्रिपंक्तिषु । जातश्म
श्रुस्त्रियां प्रान्ते सेतौ कल्पितभोजने ॥ ४९६ ॥ प्रशंसा कर्णलतयोरुत्सं
गे प्रस्थ चिह्नयोः । पीलुः पुष्पद्रुमे काण्डे परमाणौ मतंगजे ॥ ४९७ ॥
तालास्थि खण्डेऽथ पुलः पुलके विपुलेऽपि च । फलं हेतुफले जातीफले
फलक सस्ययोः ॥ ४९८ ॥ त्रिफलायां च कक्कोलि शस्त्राग्रे व्युष्टिलाभ
योः । फली फलिन्यां फालस्तु वाससि फलउन्तुनौ ॥ ४९९ ॥ कुशिके च
बलं रूपे स्थामनि स्थौल्य सैन्ययोः । बोले बलस्तु बलिनि काके दैत्ये हला
युधे ॥ ५०० ॥ बलीत्वौषधिभेदे स्याद्बलिर्दैत्योपहारयोः । करे चा
मरदण्डे च गृहदारुदरांशयोः ॥ ५०१ ॥ त्वक्संकोचे गन्धके च बालो
ऽज्ञेऽश्वेभ पुच्छयोः । शिशौ ह्रीवेर कचयोर्बाला तु त्रुटियोषितोः ॥ ५०२ ॥
बाली भूषान्तरे मेध्ये वेला तूच्चैः श्रवोह्वये । बिलं रन्ध्रे गुहायां च भल्लो भल्लू
कबाणयोः ॥ ५०३ ॥ भल्ली भल्लातके भालं स्याल्ललाटे महस्यपि । मेल
स्त्रवे मुनिभेदे भीरौ बुद्धिविवर्जिते ॥ ५०४ ॥ मल्लः कपोले बलिनि मल्लेपा
त्रे मलस्त्वघे । किट्टे कट्ये विष्ठायां मासं तु कपटे वने ॥ ५०५ ॥ मालो
जने स्यान्माला तु पंक्तौ पुष्पादिदामनि । मालुः स्त्रियां पत्रवल्यां मूलं पार्श्वे

योरुडौ ॥ ५०६ ॥ निकुञ्जशिफयोर्म्मेलात्वञ्जनेमेलकेऽपिच । मौलिः हे०चं०
किरीटेधम्मिल्लेचुडाकङ्केलिमूर्द्धसु ॥ ५०७ ॥ लीलाकेलिर्विलाशश्चशृ ना० ३
ङ्गारभावजाक्रिया । लोलश्चलेसतृष्णेचलोलातुरसनाश्रियोः ॥ ५०८ ॥
वल्लीस्यादजमोदायां लतायांकुसुमान्तरे । व्यालोदुष्टगजेसर्प्पेशठे
श्वापदसिंहयोः ॥ ५०९ ॥ वेलाबुधस्त्रियांकालेसीमनीश्वरभोजने ।
अक्लिष्टमरणेऽम्भोधेस्तीरनीरविकारयोः ॥ ५१० ॥ शालोहालेमत्स्यभे
देशालोकस्तत्परदेशयोः । स्कन्धशाखायांशालिस्तुगंधोलोकलमादिषु
॥ ५११ ॥ शालुः कषायद्रव्येस्याच्चौरकाख्यौषधेऽपिच । शिलमुञ्छःशि
लोद्वारणधोदारुकुनटीदृषत् ॥ ५१२ ॥ शीलीगण्डूपदीशीलंसाधुवृत्तस्व
भावयोः । शुल्लंरूप्येशुल्लोयोगेश्वेतेशूलंरुगस्त्रयोः ॥ ५१३ ॥ योगेशू
लातुपण्येस्त्रीवधहेतुस्वकीलकः । शैलोभूभृतिशैलन्तुशैलेयेतार्क्ष्यशैलके
॥ ५१४ ॥ सालःसर्ज्जतरौवृक्षमात्रप्राकारयोरपि । स्थालंभाजनभेदेस्था
लीस्थालीतुपाटलोखयोः ॥ ५१५ ॥ स्थूलःपीनेजडेहालःसीतवाहनपा
र्थिवे । हालासुरायांहेलातुस्यादवज्ञाविलासयोः ॥ ५१६ ॥ हेलिरालि
ङ्गनेसूर्य्येऽ ॥ ❁ ॥ दिस्वरसान्ता ॥ ❁ ॥ पविर्म्मूषिककाम्बले । मेषेरवौ
पर्वतेचस्यादूर्द्ध्वन्तुसमुच्छ्रिते ॥ ५१७ ॥ उपर्य्युन्नतयोःकरवोमुनौक
रवन्तुकल्मषे । क्षवःक्षुतिराजिकायांकविःकाव्यस्यकर्त्तरि ॥ ५१८ ॥ विच
क्षणेदैत्यगुरौस्यात्कवीतुखलीनके । किरावंपापेस्तुणवीजेक्लीबेपोरुषक

हे॰ सं॰ सञ्ज्योः ॥ ५१९ ॥ खर्वे ह्रस्वे न्यग्वामनौ ग्रीवे शिरोधितच्छिरे । छवि
का॰ २ स्तु रुचिशोभायां जवस्त्याद्वेगवेगिनोः ॥ ५२० ॥ जवो ड्रपुष्पे जिह्वा तु
वाचि ज्वालारसज्ञयोः । जीवस्त्याच्चिदशाचार्ये द्रुमभेदे शरीरिणि
॥ ५२१ ॥ जीविते ऽपि च जीवा तु वचायां धनुषो गुणे । शिञ्जिते क्षितिजीव
न्त्योर्वृत्तौ न त्वं परात्मनि ॥ ५२२ ॥ वाद्यभेदे स्वरूपे च द्रवो विद्रवन
र्मणोः । प्रद्रावे रसगत्योश्च द्वंद्वः से द्वंद्वमाहवे ॥ ५२३ ॥ रहस्ये मिथु
ने युग्मे दवदावौ वनानले । वने दर्वी फणातर्व्योर्दार्वी स्याद्देवदारुणि
॥ ५२४ ॥ हरिद्रादितये चापि दिवं खे त्रिदिवे वने । देवं हृषीके देवस्तु नृ
पतौ तोयदे सुरे ॥ ५२५ ॥ देवी कृताभिषेकायां तेजनीस्पृक्क्योरपि । ध
वो धूर्त्ते नरे पत्यौ द्रुभेदे ऽथ ध्रुवो वटे ॥ ५२६ ॥ वसुयोगभिदोः शम्भौ शंका
वुत्तानपादजे । स्थिरे नित्ये निश्चिते च ध्रुवं खे ऽजस्रतर्कयोः ॥ ५२७ ॥
ध्रुवा मूर्वाशालपर्ण्योः स्रुग्भेदे गीतभिद्यपि । नवो नव्ये स्तुतौ नीवी स्त्री कटीव
स्त्रबन्धने ॥ ५२८ ॥ मूलद्रव्ये परिपणे प्लवः प्लक्षे प्लुतौ कपौ । शब्दे
कारण्डवे म्लेच्छजातौ भेलकभेकयोः ॥ ५२९ ॥ क्रमनिम्नमहीभागे
कुलके जलवायसे । जलान्तरे प्लवंगन्धतृणे मुस्तकभिद्यपि ॥ ५३० ॥ प
क्वं परिणते नाशाभिमुखे पार्श्वमन्तिके । कक्षाधो ऽवयवे चक्रोपान्तपर्शुस
मूहयोः ॥ ५३१ ॥ प्राध्वं दूरपथे प्रह्वे बन्धे पूर्वन्त्वनुपूर्वजे । प्रागग्रे श्रुतिभे
दे च भवः सत्ताप्तिजन्मसु ॥ ५३२ ॥ रुद्रे श्रेयसि संसारे भावो ऽभिप्राय

वस्तुनोः। स्वभावजन्मसत्त्वात्मक्रियालीलाविभूतिषु ॥ ५३३ ॥ चे हे० चं०
ष्टयोन्योर्बुधेजन्तौ स्मृतःप्राणादेस्तुकारणे। शब्दप्रवृत्तिहेतौ च यवोधान्ये ना० २
पृथक्कृते ॥ ५३४ ॥ यावो लक्तोपाकभेदे रेवामन्मथयोषिति। नीलामे
कलकन्यायां लवःकालभिदिच्छिदि ॥ ५३५ ॥ विलासेरमजेलेशे ल
ज्ञापक्षिकुसुम्भयोः। लघ्वीहस्वविवक्षायांप्रभेदेस्यन्दनस्यच॥ ५३६॥
विम्बास्तुरेषुविम्बन्तुम्बुंल्यांभुवनहात्म्नयोः। विम्बाविषायांशिवन्तुमे
क्षेक्षेमेसुखेजले ॥ ५३७ ॥ शिवोयोगान्तरेवेदेगुग्गुलौबालकेहरे।
पुण्डरीकेद्रुमेकीलेशिवाझाटामलोमयोः ॥ ५३८ ॥ फेरौशम्यांपथ्या
धात्रोःशिविर्भूर्जेन्द्रपान्तरे। शुल्बंताम्रेयज्ञकर्मण्याचारेजलसन्निधौ
॥ ५३९ ॥ सत्त्वंद्रव्येगुणेचित्तेव्यवसायस्वभावयोः। पिशाचादावात्म
भावेबलेप्राणेषुजन्तुषु ॥ ५४० ॥ सान्त्वंसामनिदाक्षिण्येस्तुवामूर्वास्तुवः
स्तुचि। द्ववस्तुसप्ततन्तौस्यान्निदेशाह्वानयोरपि ॥ ५४१ ॥ ❁ ॥ द्वि
स्वरवान्ताः ॥ ❁ ॥ अंशोविभाजनेप्रोक्तःएकदेशेऽपिवस्तुनः। अं
शुःसूत्रादिसूक्ष्मांशेकिरणेचण्डदीधितेः ॥ ५४२ ॥ आशाककुभितृष्णा
यामाशुस्तुव्रीहिशीघ्रयोः। ईशःस्वामिनिरुद्रेचस्यादीशाहलदण्ड
के ॥ ५४३ ॥ कशास्याद्रश्मनाउन्यांरज्ज्वांमुखेगुणेऽपिच। काशस्तृणे
रोगभेदेकीशःकपौदिगम्बरे ॥ ५४४ ॥ कुशोरामसुतेदर्भेपापिष्ठेयोक्त्र
सनयोः। कुशीलोहविकारेस्यात्कुशावल्गाकुशंजले ॥ ५४५ ॥ केशः स्य

मे०चं० रसिजेपाशेपाशोह्रीबेरदैत्ययोः। क्रोशोरोगादौदुःखेचकोशः कोषवदण्ड
शा० २ के॥५४६॥ कुड्मलेचषकेदिव्येऽर्थचयेयोनिशिम्बयोः। जातीकोशेऽसि
पिधानेदर्शस्सूर्येन्दुसङ्गमे ॥५४७॥ पक्षान्तेऽप्यथदर्शनेचदंशोवर्म
णिमर्म्मणि। दोषेवनमक्षिकायांखण्डनेभुजगक्षते ॥५४८॥ दशा
वर्त्तावबस्थायांदशास्तुवसनाञ्चले। नाशःपलायनेमृत्यौपरिध्वस्ताव
दर्शने॥५४९॥ निशारात्रौहरिद्रायांपशुश्छागेमृगादिषु। प्रमथेपि
चपाशस्तुमृगपक्ष्यादिबन्धने ॥५५०॥ कर्णान्तेशोभनार्थस्स्यात्कचान्ते
निकरार्थकः। छात्राद्यन्तेचनिन्द्यार्थःपेशीमांस्यसिकोशयोः ॥५५१॥ म
ण्डभेदेपलपिण्डेसुपक्वकलिकेऽपिच। भूस्पृक्वैश्येमानवेचरश्मिर्म्मेषा
दिपुंजयोः॥५५२॥ वशोजन्मस्पृहायत्तेष्वायतत्वप्रभुत्वयोः। वशा
नार्य्यांवंध्यगव्यांहस्तिन्यांदुहितर्य्यपि॥५५३॥ वंशःसंघेऽन्वयेवेणौ
पृष्ठाद्यवयवेऽपिच। वेशोवेश्यागृहेगेहेनेपथ्येचशशःपशौ॥५५४॥ बो
लेलोध्रेद्रुमभेदेचस्पशोहेरिकयुद्धयोः। स्पर्शोवर्गाक्षरेदानेस्पर्शनेस्पर्श
केरुजि॥५५५॥ ❀ ॥ द्विस्वरशान्ताः ॥ ❀ ॥ अक्षोरथस्यावयवे
व्यवहारेविभीतके। पाशकेशकटेकर्षेज्ञानेचात्मनिरावणौ ॥५५६॥
अक्षंसौवर्चलेतुत्थेहृषीकेस्याद्दृषानिशि। वाणपुत्र्यांचऋक्षस्तुस्यान्नक्षत्रा
च्छभल्लयोः॥५५७॥ महीधरविशेषेचशोणाकेकृतवेधने। ऋषिर्वेदे
मुनौकर्षःकर्षकेमानभिद्यपि॥५५८॥ कक्षोवीरुधिदोर्म्मूलेकच्छेशु

कक्षवनेतृणे। पापेकक्षात्विभरज्ज्वांकांच्यांगेहप्रकोष्ठके ॥ ५५९ ॥ भित्तौ हे०चं०
साम्येरथभागेंतरीयपश्चिमाञ्चले। उद्ग्राहिण्यांचकर्षस्तुतुषाग्नौकृषि ना० २
कुल्ययोः ॥ ५६० ॥ घोषःकांस्येस्वनेगोपघोषकाभीरपल्लिषु। घोषातु
शतपुष्पायांचोक्षःशुद्धरगीतयोः ॥ ५६१ ॥ झषोमकरेव
नेमीनेझषापुनः। नागलतायांतुषस्तुधान्यत्वचिविभीतके ॥ ५६२ ॥
दक्षःप्रजापतौरुद्रवृषभेकुक्कुटेपटौ। द्रुमेदक्षातुमेदिन्यांध्वांक्षःकाके
बकेऽर्थिनि ॥ ५६३ ॥ गृहेध्वांक्षीतुकाकोल्यांन्यक्षःकार्त्स्न्येनिकृष्टयोः।
जामदग्न्येऽपिपक्षस्तुमासार्द्धेग्रहसाध्ययोः ॥ ५६४ ॥ चुल्लीरंध्रेबले
पार्श्वेवर्गेकेशात्परस्चये। पिच्छेविरोधेदेहाङ्गेसहायेराजकुञ्जरे ॥ ५६५ ॥
प्लक्षोद्वीपेगर्दभाण्डेऽश्वत्थेजटिनिपक्षके। प्रेक्षाधीरीक्षणंनृत्तंप्रैषःप्रेष
प्रपीडने ॥ ५६६ ॥ पौषोमासप्रभेदेस्यात्प्रोषन्तुमहयुद्धयोः। भिक्षा
सेवाप्रार्थनयोर्भृतौभिक्षितवस्तुनि ॥ ५६७ ॥ माषोमानेधान्यभेदेमूर्खे
त्वग्दोषभेद्यपि। मिषंव्याजेस्पर्द्धनेचमेषोराश्यन्तरेहुडौ। ५६८ ॥
मोक्षोनिःश्रेयसेवृक्षविशेषेमोचनेमृतौ। यक्षःश्रीदेगुह्यकेचरक्षारक्षा
भस्मनोः ॥ ५६९ ॥ रूक्षोस्निग्धपरुषयोर्लक्षंव्याजशरव्ययोः।
संख्यायामपिवर्षस्तुसमाद्वीपांशवृष्टिषु ॥ ५७० ॥ वर्षधरेऽपिवर्षा
स्तुप्रावृष्यथविषंजले। क्ष्वेडेविषात्वतिविषावृषोगव्यासुधर्मयोः ॥ ५७१ ॥
पुंराशिभेदयोःशृंग्यांवासकेमुष्कलेऽपिच। श्रेष्ठेस्यादुत्तरस्थस्त्ववृषीतु

ध्वनिविष्टरे ॥ ५७२ ॥ वृषाचित्राकपिकच्छ्वोः प्रुषिः प्लुषिरशोषयोः।
शेषोऽनन्तेवधेशीरिण्युपयुक्तेतरेऽपिच ॥ ५७३ ॥ शेषानिर्माल्यदाने
स्याच्छोषः शोषणयक्ष्मणोः । ॥ ❁ ॥ द्विस्वरषान्ताः ॥ ❁ ॥ अंसः
स्कन्धेविभागेस्यादसिःखड्गेनदीभिदि ॥ ५७४ ॥ अर्चिर्मयूखशिखयोर
देऽन्यचपरत्वच । आगस्स्यादेनस्यवस्त्रेमंतावाशीर्हितैषिणि ॥५७५॥
उरगस्यचदंष्ट्रायामुषःसंध्याप्रभातयोः । उरोवक्षसिमुख्येस्यादोजोदी
प्तिप्रकाशयोः ॥ ५७६ ॥ अवष्टम्भेबलेधातुतेजसोःकन्तुसद्मनि ।
ओकस्त्वाश्रयमात्रेस्यात्कंसस्तैजसमानयोः ॥५७७॥ पानपात्रेदैत्य
भेदेकासूःशक्त्यायुधेरुजि । बुद्धौविकलवाचिस्याद्गुत्सःस्तम्बगुलुच्छ
योः ॥ ५७८ ॥ हारभेदेग्रंथिपर्णे गोसेवालविभातयोः । चासइक्षु
पक्षिभिदोश्छन्दःपद्येच्छयोःश्रुतौ ॥ ५७९ ॥ ज्यायान्वृद्धेप्रशस्येच
ज्योतिर्वह्निदिनेशयोः । प्रकाशेदिशिनक्षत्रेतपःकृच्छ्रादिकर्मणि
॥ ५८० ॥ धर्मेलोकप्रभेदेचतपाःशिशिरमाघयोः । तमोराहौगुणेपा
पेध्वान्तेतरोजवेबले ॥ ५८१ ॥ त्रासोभयेमणिदोषेतेजस्त्विट्रेतसो
बले । नवनीतप्रभावेऽग्नौदासोधीवरभृत्ययोः ॥ ५८२ ॥ वृषलेदान
पात्रेचदासीभाँट्यपिचेट्यपि। धनुःशरासनेराशौप्रियालद्रौधनुर्द्धरे
॥ ५८३ ॥ नभोव्योम्निनभाघ्राणेबिसतन्तौपतद्ग्रहे । प्रावृषिश्रावणे
नासाघोणाद्वारोर्द्ध्वदारुणोः ॥ ५८४ ॥ पयःक्षीरेचनीरेचप्रस्तरश्म

जनन्यपि । बर्हिः कुशेऽग्नौ भास्तु भासि गृध्रशकुन्तयोः ॥ ५८५ ॥ हे०चं०
महस्तेजस्युत्सवे च मिसिर्मिस्यजमोदयोः । शतपुष्पा मधुर्य्योश्च मृत्सा वा ना० २
सौनु मृत्तिका ॥ ५८६ ॥ रसः स्वादे जले वीर्य्ये शृङ्गारादौ विषे द्रवे । बोले
रागे देहधातौ तिक्तादौ पारदेऽपि च ॥ ५८७ ॥ रसा तु रसनापाठा सल्ल
की क्षितिकंगुषु । रहो गुह्ये रतेतत्त्वे रजो रेणुपरागयोः ॥ ५८८ ॥ स्त्रीपु
ष्पे गुणभेदे च रासः क्रीडा तु गोदुहां । भाषाशृङ्खलके वत्सा उरस्तु ग्वर्षत
र्षकाः ॥ ५८९ ॥ वयस्तारुण्ये बाल्यादौ खगे वर्चस्तु तेजसि । गूथेरू
पे वस्तुत्वग्नौ देवभेदेन्दुपे रुचि ॥ ५९० ॥ योत्रोष्मुक्ष्वे वसु स्वादौ रत्ने वृ
द्ध्यौषधे धने । वपुः शस्ताकृतौ देहे व्यासो मुनिप्रपञ्चयोः ॥ ५९१ ॥ वा
सो वेश्मन्यवस्थाने वासाः स्यादाटरूषके । विद्वान् ज्ञात्मविदोः प्राज्ञे वेधा
धातृज्ञविष्णुषु ॥ ५९२ ॥ शंसा वचसि वाञ्छायां शिरो मूर्द्ध प्रधानयोः ।
सेनाग्रभागे श्रेयस्तु मङ्गले धर्मशस्तयोः ॥ ५९३ ॥ सहो बले ज्योतिषि
च सहा हेमन्तमासयोः । स्रोतः प्रवाह इन्द्रिययोः हंसोऽर्कमत्सरेऽच्युते
॥ ५९४ ॥ खगाश्वयोगिमन्त्रादिभेदेषु परमात्मनि । निर्लोभनृपतौ प्रा
णवाते श्रेष्ठेऽग्रतःस्थिते ॥ ५९५ ॥ हविः सर्पिषि होतव्ये हिंसा चौर्य्या
दिके वधे ।॥ ❀ ॥ द्विस्वरसान्ताः ॥ ❀ ॥ अहिस्सर्प्पे वृत्रे वप्रे स्यादीहोद्य
मवाञ्छयोः ॥ ५९६ ॥ कूहुर्नष्टेन्दुदर्शे स्यात्कूजिते कोकिलस्य च । ग्र
हो ग्रहणनिर्बंधानुग्रहेषु रणोद्यमे ॥ ५९७ ॥ उपरागे पूतनादावादित्या

हे०चं० दैविधुन्तुदे। ग्राहोग्रहेजलचरेगुहःस्कन्दे गुहापुनः ॥ ५९८ ॥ गह्व
ना० २ रेसिंहपुच्छ्यांचगृहादारेषुसद्मनि। प्रोहोनिपुणतर्केस्याद्गजांघ्रिपर्वणो
रपि ॥ ५९९ ॥ बर्हं पत्रेपरीवारे कलापबहुभूयसि। त्र्यादिकास्तुच
संख्यास्तुमहावुत्सवतेजसी ॥ ६०० ॥ महीभुवि नदीभेदेमोहोमूर्छा
विपर्य्ययोः। लोहंकालायसेसर्वे तैजसेजोंगकेऽपिच ॥ ६०१ ॥ वहोवृ
षस्कन्धदेशेवायौवाहोऽश्वमानयोः। वृषेवाहातुबाहौस्याद्व्यूहोनिर्माण
तर्कयोः ॥ ६०२ ॥ समूहेबलविन्यासे सहःक्षमेबलेऽपिच। सहोर्व्यां
सहदेवायांकुमार्य्यांनखभेषजे ॥ ६०३ ॥ मुद्गपर्ण्यांचसिंहस्तुराशिभे
देमृगाधिपे। श्रेष्ठेस्यादुत्तरस्थश्चसिंहीस्वर्भानुमातरि ॥ ६०४ ॥ वासावृ
हत्योःक्षुद्रायांस्नेहःप्रेम्णिघृतादिके। ॥ ❁ ॥ द्विस्वरहान्ताः ॥ ❁ ॥
॥ इत्याचार्य्यहेमचन्द्रविरचितेऽनेकार्थसंग्रहे द्विस्वरकाण्डो द्वितीयः ॥



ना० ३ अणुकोनिपुणोऽल्पेचाशोकोकंकेल्लिवंजुलौ। निःशोकपारदौचाप्यशोका
तुकटुरोहिणी ॥ १ ॥ अभीकोनिर्भयेकम्रेऽप्यनीकंरणसैन्ययोः। अ
लीकमप्रियेभालेवितथेऽनूकमन्वये ॥ २ ॥ शीलेऽनूकोगतजन्मन्यं
शुकंसूक्ष्मवाससि। उत्तरीयेवस्त्रमात्रेप्यलकाश्चूर्णकुन्तलाः ॥ ३ ॥
अलकातुकुबेरस्यनगर्य्यामन्तिकंपुनः। पार्श्वेऽन्तिकातुचुल्ल्यांस्यात्सात

लाख्यौषधेऽपिच ॥ ४ ॥ नाट्योक्तौ ज्येष्ठभगिनी अन्निकाप्रोच्यतेऽपि हे० चं०
सा । अलर्कोन्त्रपेऽश्वेतार्के रोगोन्मादितश्वुन्यपि ॥ ५ ॥ अम्बिकोमापा ना० ३
ण्डुमाचोर्देवताभिद्भिमातरि । अन्धिकातुकैतवेस्यात्स्वर्षपीसिद्धयोरपि
॥ ६ ॥ अम्लिकातिंतिडीकाम्लोद्गारचाङ्गेरिकासु च । आलोकोदर्शनेवन्दि
भाषणोद्योतयोरपि ॥ ७ ॥ आनकः पटहे भेर्य्यां ध्वनन्मेघमृदङ्ग
योः । आतंकोरुजिशंकायां सन्तापेमुरजध्वनौ ॥ ८ ॥ आह्निकंस्या
त्पुनरहर्निर्वर्त्त्येनित्यकर्म्मणि । भोजनेग्रंथभागेचाढकः प्रस्थचतुष्टये
॥ ९ ॥ आढकीतुबरीक्ष्वाकुः कटुतुंब्यांनृपान्तरे । उलूकः स्यात्तुकाकारि
विन्द्रेभारतयोधिनि ॥ १० ॥ उष्ट्रिकामृद्भांडभेदेकरभस्त्रियोषिति
। उदर्कस्त्ववुत्तरकालफलेमदनकंटके ॥ ११ ॥ उष्मकोघर्मउद्युक्तातु
रयोरूर्म्मिकापुनः । उत्कण्ठायां भृङ्गनादे वस्त्रभङ्गेंगुलीयके ॥ १२ ॥
वीच्यांचकनकंहेम्निकनकोनागकेसरे । धत्तूरेचम्पकेकांचनारकिंशुक
योरपि ॥ १३ ॥ करकोदाडिमेपक्षिभेदेकरेकमण्डलौ । लङ्काकरञ्ज
योर्वर्षोपलेचकटुकंकटु ॥ १४ ॥ कटुरोहिणीव्योषयोस्त्वकंचुकस्त्वोलव
स्त्रयोः । वर्द्धापकगृहीताङ्गवसनेवारवाणके ॥ १५ ॥ निर्मोकेकटके
त्वद्रिनितम्बेबाहुभूषणे । सेनायांराजधान्यांचक्रमुकोभद्रमुस्तके
॥ १६ ॥ गूवाकेपट्टिकालोध्रेकण्टकःक्षुद्रवैरिणि । वेणौद्रुमाङ्गेरोमाञ्चे
कलंकोऽङ्कापवादयोः ॥ १७ ॥ कालायसमलेचापिकर्णिकाकर्णभूषणे

हे०थं० । वीजकोशे सरोजस्य करमध्याङ्गुलावपि ॥ १८ ॥ कुट्टिन्यां हस्तिह-
ना० ३ स्ताग्रे कर्णिकास्त्री सूक्ष्मवस्तुनि । अग्निमन्थे कामुकास्तु काम्यशोकातिमुक्तकाः
॥ १९ ॥ कारकं कर्तृकर्माद्योः कारिकायातनानटी । कृतिर्विवरणश्लोको
नापितादिककर्म्मे च ॥ २० ॥ कावृकः कुक्कुटे कोके पीतमुण्डेऽथ कार्मुकः ।
वंशे कार्मुकमिष्वासे कर्म्मठे क्षारको रसे ॥ २१ ॥ कोरके पक्ष्यादिपाशे कालि-
का योगिनीभिदि । स्वर्णादिदोषे मेघाल्यां सुरगौर्य्यौ नवाम्बुदे ॥ २२ ॥ क्र-
मदेयवस्तुमूल्ये कार्ष्ये वृश्चिकपत्त्रयोः । रोमाल्यान्धूसरीकांस्योः काकीघटो-
लशाखयोः ॥ २३ ॥ किम्पाको वृक्षभिदज्ञे कीटको निष्ठुरे कृमौ । कीचको
ध्वनिमद्वंशे दैत्यभेदे द्रुमान्तरे ॥ २४ ॥ कुलकं पञ्चादिश्लोकसमन्वये
पटोलके । कुलकः कुलप्रधाने वल्मीके काकतिन्दुके ॥ २५ ॥ कुलिक-
स्तु कुलश्रेष्ठे द्रुमनागविशेषयोः । कुशिको मुनिभेदे स्यात्फाले सर्जे वि-
भीतके ॥ २६ ॥ क्षुल्लकः पामरे स्वल्पे कनिष्ठे दुःखिते खले । कूपको गु-
णवृक्षे स्यात्तैलपात्रे कुकुन्दरे ॥ २७ ॥ कूर्चिका क्षीरविकृतौ कुञ्चिकायां
च कुड्मले । आलेख्यकूर्चिकासूच्योः कृषकौ फालकर्षकौ ॥ २८ ॥
कोरकन्तु कुड्मले स्यात्कक्कोलकमृणालयोः । कौतुकं नर्म्मणीच्छायामुत्सवे
कुतुके मुदि ॥ २९ ॥ पारम्पर्य्यागतख्याते मङ्गलोद्वाहसूत्रयोः ।
गीतादौ भोगकाले च कौशिकः शक्रघूकयोः ॥ ३० ॥ कोशज्ञे गुग्गुलौ व्या-
ह्नितुशिड्डके नकुले मुनौ । कौशिकी चण्डिकानद्योः खनकः सन्धितस्क-

रे ॥ ३१ ॥ मूषकेभूमिविन्नेशेखट्टिकोमांसविक्रयी । मह्लिषीक्षीरफेन हे० चं०
स्वक्षुल्लकःस्वल्पनीचयोः ॥ ३२ ॥ खोलकःपूगकोषेस्याच्छिरस्त्रेनाकु ना० ३
पाकयोः । ग्रन्थिकंपिप्पलीमूलेग्रन्थिपर्णाकभेषजे ॥ ३३ ॥ ग्रन्थिकोगु
ग्गुलौदैवज्ञेमाद्रेयकरीरयोः । गण्डकोविघ्नेविद्यायांसंख्यावच्छेदख
ड्गिषु ॥ ३४ ॥ गण्डकीतुसरिद्भेदेगणकोग्रहवेदिनि । गणिकेभ्यांयूथि
कायांतर्कार्य्यांपण्ययोषिति ॥ ३५ ॥ ग्राहकोग्रहीतरिस्याद्व्याधानांघाति
पक्षिणि । गन्धिकोलेखकेगन्धवणिजेगुण्डकःपुनः ॥ ३६ ॥ कलो
क्तौमलिनेधूलौस्नेहपात्रेऽथगैरिकं । स्वर्णेधातौगोलकस्तुजारतोवि
धवासुते ॥ ३७ ॥ अलिञ्जरेगुडेपिण्डेगोरङ्कुर्नग्नवन्दिनोः । खगेचच
षकोमद्यसरकेमद्यभाजने ॥ ३८ ॥ चत्तुकःप्रस्थेनेभाण्डप्रभेदेचुलुको
यथा । चतुष्कोमशकहर्म्यांपुष्करिण्यन्तरेपिच ॥ ३९ ॥ चारकोऽश्वा
दिपालेस्याद्बन्धेसंचारकेऽपिच । चित्रकस्तुचित्रकारेद्रुमौषधिविशेषयोः
॥ ४० ॥ चुम्बकःकामुकेधूर्तेबहुगुर्वश्मभेदयोः । चुह्नकीकुण्डिकाभेदे
शिशुमारेकुलान्तरे ॥ ४१ ॥ चूतकःकूपआम्रेचचूलिकानाटकांगके । क
रिणःकर्णमूलेचजनकःपितृभूपयोः ॥ ४२ ॥ जंबुकोवरुणेफेरौजतुकंहिं
गुलाक्षयोः । जतुकाचर्मचटकाजीवकोवृद्धजीविनि ॥ ४३ ॥ क्षपणोप्रा
णकेपीतसालसेवकयोर्द्रुमे । व्यालग्राहेजीविकानुजीवन्त्यांवर्तनेऽपिच
॥ ४४ ॥ झिल्लीकाझिल्लिकावन्त्याचीर्यांरुच्यातपस्यच । विलेपनस्यच

हे०चं० मलेतक्षकस्तक्ष्णिपन्नगे ॥ ४५ ॥ द्रुमभेदेतंडकस्तुसमस्तपदजात
के । तरुस्कंधेवेश्मदारुमायाबकुलयोरपि ॥ ४६ ॥ फेनखंजनयोश्चा
ना० ३ पितारकः कर्णधारके । दैत्येचतारकमुडौनेत्रतन्मध्ययोरपि ॥ ४७ ॥
तालांकः करपत्रेस्याच्छाकभेदेऽच्युताग्रजे । महालक्षणसंपूर्णपुरुषेपु
स्तकेहरे ॥ ४८ ॥ तिलकोऽश्वद्रुमभिदोः पुंड्रकेतिलकालके । तिलकंरु
चकेक्लोम्नित्रिशंकुः शलभेनृपे ॥ ४९ ॥ मार्जारेऽथतुरुष्कस्तुदेशेश्रीवा
ससिह्लयोः । तूलिकातूलशय्यास्यादालेख्यस्यचलेखनी ॥ ५० ॥ दर्श
कोदर्शयितरिप्रतीहारप्रवीणयोः । द्रावकस्तुशिलाभेदेस्यान्मोषकवि
दग्धयोः ॥ ५१ ॥ दारकोभेदकेपुत्रेदीपकंस्यादलंकृति । दीपकोदीप्रि
श्रद्वेपिदीप्यकंत्वजमोदके ॥ ५२ ॥ मयूरशिखायवान्योर्दूषिकातूलिका
स्मृता । नयनस्यमलेऽपिस्याद्धनिकोधान्यकेधवे ॥ ५३ ॥ धनाढ्येध
निकावध्वांधेनुकाधेनुरित्यपि । धेनुकंधेनुसंहत्यांकरणेपिचयोषितां
॥ ५४ ॥ नरकोदैत्यनिरयोनंदकःकुलपालके । हर्षकेहरिखड्गेचनर्त
कःकेलकेनटे ॥ ५५ ॥ द्विपेपोटगलेचापिनर्तकीलासिकाद्विपी । न
ग्निकाऽनृतुकन्यायांनग्नकोजिनवन्दिनोः ॥ ५६ ॥ नालीकोऽब्जेऽशरेशल्ये
नालीकंपद्मवर्द्धने । नायकोमणिभिन्नेतृप्रधानेष्वथनालिका ॥ ५७ ॥
नालेकालेचुल्लिरंध्रेविवरेवेणुभाजने । निपाकःपचनेस्वेदासत्कर्मफल
योरपि ॥ ५८ ॥ निर्मोकोव्योम्निसन्नाहेमोक्षकेसर्पकंचुके । पद्मकःस्या

न्यद्मकाष्ठेविन्दुजालकयोरपि ॥ ५९ ॥ पक्षकस्तुपार्श्वद्वारेपार्श्वमात्रेऽपि
कथ्यते। पर्यंकोमंचपर्यस्त्योःप्रतोकोगप्रतीपयोः ॥ ६० ॥ पताकांकेध्वजे
केतौसौभाग्येनाटकांशके। पातुकोजलमातंगेपतयालुप्रपातयोः ॥ ६१ ॥
प्राणकोजीवकतरौसत्त्वजातीयबोलयोः। पाटकोरोधसिग्रामैकदेशेक्षा
दिपातके ॥ ६२ ॥ वाद्यभेदेमहाकिष्कौमूल्यस्यापचयेपिच। पालंकःशा
कभेदेस्याच्छ्येनकांवाजिपक्षिणि ॥ ६३ ॥ पावकोऽग्नौसदाचारेवह्नि
मन्थेचचित्रके। भल्लातकेविडंगेचशोधयितृनरेपिच ॥ ६४ ॥ पिनाकः
शिवकोदंडेपांशुवृष्टित्रिशूलयोः। प्रियकस्तुचंचरीकेनीपेकश्मीरज
न्मनि ॥ ६५ ॥ प्रियंगौचित्रहरिणेपीतसालतरावपि। पिटकःस्यात्तुवि
स्फोटेमंजूषायामपीष्यते ॥ ६६ ॥ पिष्टकोनेत्ररोगेस्याद्धान्यादिचमसेपि
च। पिण्याकःकुंकुमेहिङ्गौसिह्लकेतिलचूर्णके ॥ ६७ ॥ पुलकोगजान्न
पिंडेरोमांचेप्रस्तरांतरे। असुरज्यांमणिदोषेगल्वर्केतालकेकृमौ ॥ ६८ ॥
पुलाकंभक्तसिक्थेस्यात्संक्षेपासारधान्ययोः। पुष्पकंमृत्तिकागारशकट्यां
रत्नकंकणे ॥ ६९ ॥ कासीशेश्रीदविमानेनेत्ररोगेरसांजने। लोहकां
स्येरीतिकायांपुत्रकःशरभेशठे ॥ ७० ॥ शैलेवृक्षप्रभेदेचपुत्रिकायाव
तूलके। पांचालिकादुहित्रोस्त्वपूर्णकःस्वर्णचूडके ॥ ७१ ॥ पुर्णिकानासि
काछिन्त्यांपृथुकश्चिपिटेऽर्भके। पृदाकुश्चित्रकव्याघ्रवृश्चिकेषुसरीसृपे
॥ ७२ ॥ पेचकःकरिलांगूलमूलेघूकेऽथपेटकं। मंजूषायांसमूहेचबक्रको

जलखादके ॥ ७३ ॥ दाम्भूहे कर्कटेऽर्के च बंधूकः पीतसालके । बंधुजीवे बंध
कस्तु सत्यंकारेऽथ बंधकी ॥ ७४ ॥ स्वैरिण्यां च वारिण्यां च बालिका कर्णभूषणे ।
पिंजोलायां वालुकायां बालायां बालकः पुनः ॥ ७५ ॥ शिशौ मूर्खेऽश्वगज
योर्बालधौ भस्मकं रुग्जि । विडंगे कलधौते च भ्रामकः फेरुधूर्त्तयोः ॥ ७६ ॥
सूर्यावर्त्ते श्मभेदे च भालांकः कच्छपे हरे । महालक्षणसंपूर्णपुरुषे करप
त्रके ॥ ७७ ॥ रोहिते शाकभेदे च भूतिकं कद्फलौषधे । यवान्यां घ
नसारे च भूनिंबे भूस्तृणेऽपि च ॥ ७८ ॥ भूमिका तु रचनायां रूपांतरप
रिग्रहे । मशकः क्षुद्ररुग्जंतुभेदयोर्मधुकं त्रपु ॥ ७९ ॥ मधुयष्टिश्च
मधुको ब्रह्मिश्रीवदपक्षिणोः । मंडूकी मंडूकपर्ण्यां मंडूकौ भेकशोणयोः
॥ ८० ॥ मल्लिको हंसभेदे स्यान्मल्लिका कुसुमांतरे । मीने मृत्पात्रभेदे स्या
न्मातृका करणेश्वरे ॥ ८१ ॥ मातृवर्णसमाम्नायोपमातृष्वथ मालिका ।
पक्षिभेदे सरिद्भेदे ग्रैवेये पुष्पदामनि ॥ ८२ ॥ मामकं तु मदीये स्यान्माम
की मातुले स्मृतः । मेचकः श्यामले कृष्णे तिमिरे बर्हिचंद्रके ॥ ८३ ॥ मो
चको मोक्षकदलीशिग्रुद्रुमविरागिषु । मोदको हर्षुको खाद्ये यमको यमजे व्रते
॥ ८४ ॥ यमकं वागलंकारे याजको राजकुंजरे । याज्ञिकेऽथ युतकं तु यौतके
युग्मयुक्तयोः ॥ ८५ ॥ संशये चलनाग्रे स्त्रीवस्त्रभेदे पटांचले । रजकौ धा
वकाम्बुकौ रसिका कटिसूत्रके ॥ ८६ ॥ रसनायां रसालायां रल्लकः कंबले
स्मृतः । तथैव कंबलमृगे रत्नकं पंचरात्रके ॥ ८७ ॥ राजकस्तु गणवधूगृहं ।

त्वैर्येवासिनि । राजिकापंक्तौ रेखायां केदारे राजसर्षपे ॥ ८८ ॥ रुचकं तु हे॰चं॰
मातुलुङ्गे निष्कसौवर्चलेऽपि च । रोचनायां बिडङ्गे च मंगलद्रव्यदन्तयोः ना॰रु
॥ ८९ ॥ अश्वस्याभरणे माल्ये ग्रीवाकटेऽपि प्रकीर्त्तितः । रूपकं नाटकेऽप्रा
त्कं काव्यालंकारधूर्त्तयोः ॥ ९० ॥ रेणुका तु हरेणौ स्याज्जमदग्नेश्च योषिति ।
लंपाको लंपटे देशे लासकौ केकिनर्त्तकौ ॥ ९१ ॥ लूनकस्तु पशौ भिन्ने लोच
को नीलवाससि । कज्जले मांसपिंडेऽक्षितारे स्त्रीभालभूषणे ॥ ९२ ॥ मि
थुन्द्वौ कर्णिकाभीचाज्यास्तु प्रश्नस्त्वथ चर्मणि । वराकः शोच्यरणयोर्वर्त्तकोऽश्व
खुरे खगे ॥ ९३ ॥ वंचको जंबुके गेहनकुले खलधूर्त्तयोः । व्यलीकं त्वंगवै
लक्ष्यप्रियाकार्येषु पीडने ॥ ९४ ॥ वल्मीको नाकु वाल्मीकयो रोगभेदेऽथ व
र्णकः । विलेपने मलयजे चारणे वस्तुकं पुनः ॥ ९५ ॥ शेमके वस्तुकस्तु
स्याच्छिवमल्यकं पर्णयोः । वार्षिकं त्रायमाणायां वर्षाभवेऽथ वाह्लिकः
॥ ९६ ॥ देशभेदेऽश्वभेदे च वाह्लिकं हिंगुकुंकुमे । वाह्लीकवद्वार्द्धकं तु वृ
द्धत्वे वृद्धकर्मणि ॥ ९७ ॥ वृद्धानां समवाये च मालुकेऽथ शिवालुके । वा
सकास्तु सिकतास्तु विनके संशयोह्ययोः ॥ ९८ ॥ विपाकः परिणामे च दु
र्गति स्वादुनोरपि । विवेकः पुनरेकान्ते जलद्रोण्यां विचारयोः ॥ ९९ ॥
वृषाकः साधुमहाशाले शूकरे पुमहत्स्नके । वृश्चिकस्तु द्रुणे राशौ वौषधेऽक्ष्मूककी
टके ॥ १०० ॥ वैजिकं त्वारणे शिग्रुतैले च वैजिकोऽकुरे । शुंखकं च लये कं
ब्धोऽसंख्य कस्तु शिरोरुजि ॥ १०१ ॥ शम्पाकस्तु विपाके स्याद्यावके च तुरंगु

हे॰ चं॰ ले। शंबूको दैत्यविशेषे करिकुम्भान्तशङ्खयोः ॥ १०२ ॥ शलाका शारि
ना॰ ३ कायां शल्यं श्वाविदालेख्यकूर्चिका। छत्रपंजरकाष्ठीषु शल्लकी श्वाविधिद्रुमे
॥ १०३ ॥ शार्ककः स्याद्दुग्धफेने शर्करायाश्च पिंडके। शिशुकः पादपे बाले
शिशुमारेऽथ शीतकः ॥ १०४ ॥ शीतकालेऽलसेऽस्वस्थे शूककः प्रवटे रसे।
स्वस्तिको मंगलद्रव्ये गृहभेदे चतुष्कयोः ॥ १०५ ॥ स्यमीकः पादपे नाकौ
स्यान्स्यमीका तु नीलिका। सरको मदिरापात्रे मदिरापानमद्ययोः ॥ १०६ ॥
सस्यको नालिकेरान्तः सस्याभमणिखड्गयोः। सम्पर्कः सुरते पृक्तौ सायकः ख
ड्गबाणयोः ॥ १०७ ॥ स्यासको हस्तबिंबे स्यात्करकादेश्च बुद्बुदे। सूत
कं जन्मनि रसे सूचकः श्वनि दुर्जने ॥ १०८ ॥ कथके सीवनद्रव्ये मार्जारे
वायसेऽपि च। सृदाकुर्वज्रेदावाग्नौ प्रनिसूर्ये समीरणे ॥ १०९ ॥ सेवको
ऽनुगे प्रसेवे सेचकः सेक्तृमेघयोः। हारको गद्यविज्ञानभिदोः कितवचौ
रयोः ॥ ११० ॥ डुडुको मदमत्ते स्याद्दात्यूहे वाद्यभिद्यपि। हेतुकस्तु म
हाकालगणबुद्धविशेषयोः ॥ १११ ॥ ❁ ॥ त्रिस्वरकांताः ॥ ❁ ॥ गो
मुखं वाद्यभेदे स्याल्लेपने कुटिलौकसि। त्रिशिखो रक्षस्त्रिशिखं स्यात्कि
रीटत्रिशूलयोः ॥ ११२ ॥ दुर्मुखो मुखरे नागराजे वाजिनि वानरे। प्र
मुखं प्रथमे मुख्ये मयूखो ज्वालरुक्त्विषः ॥ ११३ ॥ विशिखा खनित्रिका
यां रथ्यायां विशिखः शरे। विशाखो याचके स्कंदे विशाखा भे कठिल्लके
॥ ११४ ॥ वैशाखः खजके राधे सुमुखो गरुडात्मजे। पंडिते फणिभेदे स्या

॥ ❁ ॥ त्रिस्वरगांताः ॥ ❁ ॥ दयोगः कठिनोद्यमे ॥ ११५ ॥ विश्लेषे
विधुरेकूटेऽपांगोनेत्रांतपुंड्रयोः । अंगहीनेऽप्यनंगंखेचित्तेऽनंगस्तुमन्मथे हे०चं०
॥ ११६ ॥ आभोगःपरिपूर्णत्वेवरुणच्छत्रयत्नयोः । आयोगोगंधमाल्यो ना० ३
पहारेव्यापृतिरोधयोः ॥ ११७ ॥ आशुगोऽर्केशरेवायावुत्सर्गस्त्यागदा
नयोः । वर्जनेसामान्यविधावुद्वेगंपूगिकाफले ॥ ११८ ॥ उद्वेगस्तूद्वेज
नेस्यात् स्तिमितेशीघ्रगामिनि । उद्ग्राहोचभयेपिस्यात्कलिंगानीवृदंतरे
॥ ११९ ॥ पूतीकरंजेधूम्याटेस्यात्कलिंगानितंबिनी । कलिंगंकौटजफले
कालिंगस्तुभुजंगमे ॥ १२० ॥ द्विरदेभूमिकर्कार्यांकालिंगीराजकर्कटी । च
क्रांगःश्वेतगरुत्यपिचक्रांगीकटुरोहिणी ॥ १२१ ॥ जिह्मगोमंदनेसर्पेतुरं
गोवाजिचित्तयोः । तुरगीत्वश्वगंधायांधारांगस्तीर्थखड्गयोः ॥ १२२ ॥ न
रंगःशेफेवरंडेनारंगोविटजन्मिनोः । कशारसेनागरंगेनिषंगस्तूणसंग
योः ॥ १२३ ॥ निसर्गःसर्गस्वभावेनीलांगुःकृमिजातिके । भंभराल्यांप्र
सूनेचप्लवगःकपिभेकयोः ॥ १२४ ॥ अर्कसूतेपन्नगस्तुपद्मकाष्ठेभुजं
गमे । परागश्चंदनेरेणौगिरौख्यात्युपरागयोः ॥ १२५ ॥ स्नानीयपुष्परजसोः
पतंगःसूर्यपक्षिणोः । पारदेशरभेशालौपतंगंरक्तचंदने ॥ १२६ ॥
भूर्जपद्मकयोस्त्वापिप्रयागोवाजिशक्रयोः । यज्ञेतीर्थविशेषेचप्रयोगस्तु
निदर्शने ॥ १२७ ॥ कर्मणिचप्रयुक्तौचप्रियंगूराजसर्षपे । पिप्पल्यां
फलिनीकंग्वोःपुन्नागःपादपांतरे ॥ १२८ ॥ जातीफलेनरश्रेष्ठेभुजंगःस

मे॰ चं॰ पैषिङ्गयोः। मातङ्गः श्वपचो हस्ती मृदङ्गो घोषवाद्ययोः ॥ १२९ ॥ र
ना॰ ३ क्ताङ्गो भौमे रक्ताङ्गं कंपिल्ले विद्रुमेऽपि च। रक्ताङ्गा जीवंतिकायां रथाङ्गः कोक
पक्षिणि ॥ १३० ॥ रथाङ्गं चक्रे वराङ्गं योनौ शीर्षे गुडत्वचि। कुञ्जरे च वि
डङ्गस्तु स्याद् भिज्ञकृमिघ्नयोः ॥ १३१ ॥ विसर्गो विसर्जनीये वर्चसि त्या
गदानयोः। संभोगो भोग रतयोः मुंडायां सर्वगं जले ॥ १३२ ॥ सर्वग
स्तु विभौ रुद्रे सारंगो विहगांतरे। चातके चंचरीके च द्विपेणे शवलेषु च
॥ १३३ ॥ ❁ ॥ त्रिस्वरगान्ताः ॥ ❁ ॥ अमोघः सफलेऽमोघा पुनः प
थ्या विडंगयोः। अनघः स्याद् गतपापे मनोज्ञे निर्मलेऽपि च ॥ १३४ ॥ उष्णा
घो निपुणे दुःखे शुचिनीरोगयोरपि। कामघस्तु मूषिके स्यात्क्रान्त कुम्भो मंड
के ॥ १३५ ॥ परिघोऽस्त्रे योगभेदे परिघाते ऽर्गलेऽपि च। पलिघः काच
कलशे घटे प्राकारगोपुरे ॥ १३६ ॥ प्रतिघो रुट् प्रतिघातौ महार्घो ला
वकांडजे। महामूल्येऽथ ॥ ❁ ॥ त्रिस्वरघान्ताः ॥ ❁ ॥ वीचिस्तरङ्गे
न्तरकांतरे ॥ १३७ ॥ कवचस्तु तनुत्राणे पटहे नन्दिपादपे। क्रकचः
करपत्रे स्याद् ग्रन्थिलाख्यतरावपि ॥ १३८ ॥ कणीचिः पुष्पित लतागुञ्ज
योः शकटेऽपि च। नमुचिर्दितिजे कामे नाराचो लोहसायके ॥ १३९ ॥ ज
लेभे नाराच्येषण्याम्प्रपंचो विप्रलंभने। विस्तारे संचये चापि मरीचिः कृपणे घृ
णौ ॥ १४० ॥ ऋषिभेदे च मारीचः कक्कोले याजक द्विपे। रक्षोभेदेऽथ ॥
❁ ॥ त्रिस्वरचान्ताः ॥ ❁ ॥ ऽराडजः स्याच्छरटेऽहौ खगे मत्स्ये ॥ १४१ ॥

अण्डजातुमृगीनाभावंगजोमन्मथेस्तुते । मद्रेकेशेसुन्दरेचकंबोजोनीवृ हे॰ चं॰
दन्तरे ॥ १४२ ॥ शंखहस्तिभिदोस्स्यात्करंजोनखवृक्षयोः । कांबोजः ना॰ २
पुनरश्वानांभेदेपुंनागपादपे ॥ १४३ ॥ बलक्षखदिरेचापिकांबोजीमा
षपर्णिका । कारुजः कलभेफेनेवल्मीकेनागकेसरे ॥ १४४ ॥ गैरिकेशि
ल्पिनांचित्रेस्वयंजाततिलेपिच । कुटजोऽगस्त्येद्रुभेदेद्रोणेगिरिजमभ्रके
॥ १४५ ॥ शिलाजतुनिलोहेचगिरिजामातुलुंग्युमा । जलजंकमलेशं
खेनीरजंपद्मकुष्ठयोः ॥ १४६ ॥ परंजोऽसौतैलयंत्रेक्षुरिकाफलफेन
योः । बाकुजस्तुस्वयंजाततिलेक्षुचियकीरयोः ॥ १४७ ॥ भूमिजोन
रकाङ्गारेभूमिजाजनकात्मजा । वलजंगोपुरेसस्यैक्षेत्रसंगरयोरपि
॥ १४८ ॥ सदाकारेबलजातुपृथिव्यांवरयोषिति । बनजोमुस्तकेस्तंबे
रमेवनजमंबुजे ॥ १४९ ॥ वनजातुमुद्गपर्ण्यांसहजःसहसंभवे ।
निसर्गेचसामजस्तुसमाख्येकुञ्जरेऽपिच ॥ १५० ॥ हिमजोमेनकापुत्रे
हिमजापार्वतीशची । क्षेत्रज्ञावात्मनिपुणौदोषज्ञःप्राज्ञवैद्ययोः ॥ १५१ ॥
सर्वज्ञस्तुजिनेन्द्रेस्यात्सुगतेशंकरेऽपिच । ॥ ❀ ॥ त्रिस्वरजान्ताः ॥ ❀
॥ अवटःकूपबिलयोर्गर्त्तेकुहकजीविनि ॥ १५२ ॥ अरिष्टोलशुने
निम्बफेनिलेकंककाकयोः । अरिष्टंसूत्यगारेऽन्तस्विह्नेतक्रेशुभेऽशुभे
॥ १५३ ॥ अवटुर्गर्त्ताधुघाटास्तूत्कटस्तीव्रमत्तयोः । उच्चटाटंभेच
र्यायांप्रभेदेलशुनस्यच ॥ १५४ ॥ करटःकरिगण्डेस्यात्कुसुम्भेनिंद्य

हे०चं० जीविनि। काकेबाद्येदुर्दुरूटेनवश्चाद्धेऽथकर्कटः॥१५५॥कुलीरेकरणे
ता० ३ स्त्रीणांसशैखगेऽथकर्कटी। शाल्मलीफलवालुंक्योःकार्पटोजतुकार्य्योः
॥१५६॥ कीकटःकृपणेनिःस्वेदेशभेदेतुरङ्गमे। कुरुंटोभिंटिकाभेदे
कुरुंटीदारुपुत्रिका॥१५७॥ कुक्कुटःकुक्कुभेताम्रचूडेवह्निकणेऽपिच।
निषादशूद्रयोःपुत्रेकूपीटमुदरेजले॥१५८॥ चक्राटोधूर्त्तदीनार
विषवैद्येऽथचर्पटः। चपेटेस्फारविपुलेपर्पटेचिपिटःपुनः॥१५९॥
पृथुकेपिच्चटेपिस्याच्चिरंटीतुसुवासिनी। तरुणीचजकुटस्तुवार्त्ताककु
सुमेमुनि॥१६०॥ यमलेत्र्यंगटोधीतास्त्र्यन्यांशिक्यभिदीश्वरे। त्रिकू
टंसिंधुलवणेत्रिकूटस्तुसुवेलके॥१६१॥ त्रिपुटौतीरसतीनौत्रिपु
टात्रिवृदौषधौ। सूक्ष्मैलायांमल्लिकायांद्रोहाटोमृगलुब्धके॥१६२॥
चतुःपदीप्रभेदेचबिडालव्रतिकेऽपिच। धाराटस्चातकेऽश्वेचनिर्दटोनिः
प्रयोजने॥१६३॥ निर्दयेऽन्यदोषरतेनिष्कुटोगृहवाटिका। केदारकः
कपाटस्तुपर्पटोभेषजांतरे॥१६४॥ स्याच्चैवपिष्टविकृतौपरीक्षापरि
चर्ययोः। स्यात्कर्कटीसुक्ष्मतरौपूगादेर्नूतनेफले॥१६५॥ पिच्चटस्तु
नरोगेपिच्चटंत्रपुसीसयोः। वर्बटीव्रीहिभिद्वेश्याभाकूटःशैलमीनयोः
॥१६६॥ भावाटोभावकेसाधुनिवेशेकामुकेऽपिच। मर्कटस्तुकपावूर्ण
नाभेस्त्रीकरणांतरे॥१६७॥ मर्कटीकरंजभेदेशूकशिंब्यांचमोरटं।
सप्तरात्रात्परेक्षीरेऽङ्कोटमूलेक्षुमूलयोः॥१६८॥मोरटातुमूर्विकायां

मोचाटः कृष्णजीरके । चन्दनेकदलीगर्भेवर्णाटस्त्रिचकारिणि ॥ १६९ ॥ हे०चं०
गायनेस्त्रीकृताजीवेवरटाहंसयोषिति । गंधोल्यांचाथविकटःपृथुलेपृथु नाि० ३
रम्ययोः ॥ १७० ॥ वेकटोजातताारुण्येमणिकारेऽथवेरटः । मिश्रीकृते
चनीचेचवेरटंवरटीफले ॥ १७१ ॥ शैलाटोदेवलेम्युक्लकाचेसिंहकि
राततयोः । संसृष्टंतुसंगतेस्यात्कुद्धेचवमनादिना ॥ १७२ ॥ ❁ ॥ त्रि
स्वरटांताः ॥ ❁ ॥ अंबष्ठोविप्रतोवैश्यातनयेनीवृदंतरे । अंबटास्याद
स्त्रलोण्यांपाठायूथिकयोरपि ॥ १७३ ॥ कनिष्ठोऽल्पेऽनुजेयूनिकनिष्ठात्वं
तिमांगुलौ । कमठःकच्छपेदैत्यविशेषेमुनिभाजने ॥ १७४ ॥ जरठःक
र्कशेजीर्णेनर्मठौखिङ्गचूचुकौ । प्रकोष्ठःकूर्पराधस्ताद्रूपकक्ष्यांतरेऽपिच
॥ १७५ ॥ हस्तेचविस्तृतकरेप्रतिष्ठागौरवेस्थितौ । कंटोजातौयोगसिद्धौ
मुकुष्ठोधान्यमंथरौ ॥ १७६ ॥ लघिष्ठोभेलकेऽल्पेचस्याद्वरिष्ठस्तुति
त्तिरौ । वरिष्ठंमरिचेताम्रेवरोरुतमयोरपि ॥ १७७ ॥ वैकुंठोवासवे
विष्णौश्रीकंठःकुरुजांगले । शङ्करेचाथसाधिष्ठोन्यायेदृढतमेपिच
॥ १७८ ॥ ❁ ॥ त्रिस्वरठांताः ॥ ❁ ॥ करंडोमधुकोशेऽसौकारंडवेद
लाढके । कूष्मांडोगणकर्कारुःकूष्मांड्योंअंविकौषधी ॥ १७९ ॥ कोदंडःका
र्मुकेदेशभेदेभूलतयोरपि । गारुडंतुमरकतेविषशास्त्रेऽथतिंतिडः
॥ १८० ॥ दैत्यभेदेतिंतिडीकेकालदासेमहीरुहे । तिन्तिडीचुक्रेचिञ्चायां
निर्गुंडीसिन्धुवारकः ॥ १८१ ॥ नालाशेफाल्यञ्जकंदःप्रचंडःस्यात्प्रतापि

नि। बलक्षे करवीरे च प्रकांडः स्तंबशस्तयोः ॥ १८२ ॥ स्कंधमूलांतरे
तरोःपि चंडोऽवयवेपशोः। उदरे चाथ पूत्यंडो गंधैणे गंधकीटके ॥ १८३ ॥
भेरुंडो भीषणे खगे भेरुंडा देवताभिदि। मारुंडो डिंभुजंगानां मार्गे गोमयमं
डले ॥ १८४ ॥ मार्त्तंडस्तरणौ क्रोडे वरंडो वदनामये। अंतरावेदौ सं
घे च वरंडा शारिकाक्षुरी ॥ १८५ ॥ वर्णिवीरुंडस्तु कर्णादृग्मलेसे कभा
जने। गजिस्थराजे वितंडा कच्छीशाके शिलाह्वये ॥ १८६ ॥ करवीर्यावा
दभेदे शिखंडो बर्हचूडयोः। शरंडः स्यात्कृकलासे भूषणांतरधूर्त्तयोः
॥ १८७ ॥ ❁ ॥ त्रिस्वरडान्ताः ॥ ❁ ॥ अध्यूढ ईश्वरेऽध्यूढाकृत
सापत्न्ययोषिति। आषाढा मलयगिरौ व्रतिदंडे च मासि च ॥ १८८ ॥
उपोढं ऊढे निकटेऽप्युदूढःपीवरोढयोः। प्ररूढा जठरे वृद्धे प्रगाढा दृढ
कृच्छ्रयोः ॥ १८९ ॥ वारूढः शंबले वस्त्रांचलेऽग्रे पंजरे रवे। विरूढा कु
रिते जाते विगूढा गर्ह्यगुप्तयोः ॥ १९० ॥ समूढः पुंजिते सद्योजाते भुग्नेऽनुप
प्लवे। संरूढा कुरिते प्रौढे ॥ ❁ ॥ त्रिस्वरढान्ताः ॥ ❁ ॥ ऽरुणोर्केऽनूरु
पिंगयोः ॥ १९१ ॥ संध्यारागे कुष्ठभेदे निःशब्दाव्यक्तरागयोः। अरु
णा त्रिवृति श्यामा मंजिष्ठातिविषासु च ॥ १९२ ॥ अभीक्ष्णं तु भृशं नित्यमी
रिणं शून्यऊषरे। इंद्राणी शच्यां निर्गुण्ड्यां स्त्रीकरणेऽप्यथोषणा ॥ १९३ ॥
कणोषणं तु मरिचे करुणो रसवृक्षयोः। करुणा तु कृपायां स्यात्कारणं हेतु
घातयोः ॥ १९४ ॥ गीतांगहारसंवेशभित्सुकायस्य संहृतौ। वर्णं

नां स्पष्टतादौ च योगिनामासनादिषु ॥ १९५ ॥ हृषीके साधकतमे वाणिज्या हे०चं०
दौ कृतादिषु । करणः शूद्राविट्पुत्रे कंकणं करभूषणे ॥ १९६ ॥ मंडने ना० ३
हस्तसूत्रे च कल्याणं हेम्नि मंगले । कत्तृणं रौहिषं कुम्भी करेणुस्तु मतंगजे
॥ १९७ ॥ द्विरदस्य च योषायां कर्णिकारतरावपि । कारणं घातने हेतौ नाक
रणे कारणा पुनः ॥ १९८ ॥ यातना कार्मणं मंत्रादि साधने कर्मकारके । काकि
णी मानदंडस्य तुरीयेंऽशे पणस्य च ॥ १९९ ॥ कृष्णलायां वराटे च कृपाणी
कर्त्तरी छुरी । कृपाणोऽसौ क्षेपणी तु नौदंडजालभेदयोः ॥ २०० ॥ कौंक
णाः स्याज्जनपदे कौंकणं त्वायुधांतरे । ग्रहणं स्वीकृते वंद्यां धीगुणे हस्त आ
दरे ॥ २०१ ॥ ग्रहोपरागे प्रत्याये ग्रामणीः क्षुरमर्दिनि । प्रधाने भोगिके प
त्यौ ग्रामणीः पण्ययोषिति ॥ २०२ ॥ ग्रामेयायां नीलिकायां गोकर्णः प्रम
थांतरे । अंगुष्ठानामिकोन्माणे मृगेऽश्वतरसर्पयोः ॥ २०३ ॥ गोकर्णी तु
मूर्विकायां चरणो मूलगोत्रयोः । बह्वृचादौ च पादे च चरणं भ्रमणेऽदने
॥ २०४ ॥ जरणो रुचके हिंगौ जीरके कृष्णजीरके । तरुणः कुब्जपुष्पे स्या
देरंडे यूनि नूतने ॥ २०५ ॥ तरणिस्तरणोऽर्केंऽशौ कुमार्यौषधिनौकयोः ।
यष्टावश्वे दक्षिणस्तु परच्छंदानुवर्त्तिनि ॥ २०६ ॥ दक्षेऽपसव्ये सरलेऽपा
चीनेऽप्यथ दक्षिणा । दिक्प्रतिष्ठायज्ञदानं द्रुघणः परशुवेधसोः ॥ २०७ ॥
मुद्गरेऽप्यथ दुर्वर्णं कलधौतकुवर्णयोः । दौर्वीणं मृष्टपर्णं स्याद्धरितालीर
सेऽपि च ॥ २०८ ॥ धरणोऽद्रिपतौ लोके स्तने धान्ये दिवाकरे । धरणं धार

हि॰चं॰ णोमानविशेषेधरणीभुवि ॥ २०९ ॥ धरणंरनेऽभिभवेधर्षणीत्वभिसारि
ना॰ ३ का । धिषणस्त्रिदशाचार्येधिषणातुमनीषिका ॥ २१० ॥ निर्याणंनिर्गमे
मोक्षेऽयोगजापांगदेशयोः । निर्वाणंमोक्षनिर्वृत्त्योर्विश्रान्तेकरिमज्जने
॥ २११ ॥ निर्माणंसारनिर्मित्योःकामभेदेसमंजसे । निःश्रेणिरधिरोहिण्यां
खर्जूरीपादपेऽपिच ॥ २१२ ॥ प्रघाणोलिन्दकेताम्रकलशेलोहमुद्गरे ।
प्रवणस्तुक्षणेप्रह्वेक्रमनिम्नेचतुःपथे ॥ २१३ ॥ आवर्तेचप्रमाणंतुम
र्यादासत्यवादिनोः । प्रमातर्येकतेयत्तानित्येषुहेतुशास्त्रयोः ॥ २१४ ॥
पत्रोर्णंधौतकौसेयेस्यात्पत्रोर्णस्तुशोणके । पक्षिणीपूर्णिमाखग्योःशा
किनीरात्रिभेदयोः ॥ २१५ ॥ प्रवेणिर्वेणीकुथयोःपुराणंप्रत्नशास्त्रयोः ।
पुराणःषोडशपणेपूरणंवाननंतुषु ॥ २१६ ॥ पूरकेपिष्टभेदेचभ्रमणी
स्यादधीशितुः । क्रीडादौकारहुंडिकायांभीषणंशल्लकीरसे ॥ २१७ ॥
भीषणोदारुणेगाढेमत्कुणोऽश्मश्रुपूरुषे । उद्दंशेनारिकेलेचनिर्विषाणग
जेऽपिच ॥ २१८ ॥ मसृणोऽकठिनेस्निग्धेमसृणास्यादतस्यपि । मा
र्गणंयाचनेऽन्वेषेमार्गणस्तुशरेऽर्थिनि ॥ २१९ ॥ यंत्रणंबंधनेत्राणेनिय
मेरमणंपुनः । पटोलमूलेजघनेरमणोरासभेप्रिये ॥ २२० ॥ रोषणो
ऽमर्षणेहेमघर्षपारदऊषरे । रोहिणीसोमवल्केभेकंठरोगान्तरेगवि
॥ २२१ ॥ लोहिताकटुरोहिण्योर्लवणोराक्षसेबले । अस्थिभेदेलवणान्वि
ष्टलवणंनामचिह्नयोः ॥ २२२ ॥ लक्ष्मणंलक्ष्मणस्तुस्यात्सौमित्रौलक्ष्मणाप

ण। लक्ष्मणः श्रीयुते लक्ष्मणौषधी सारसस्त्रियां॥२२३॥ वरुणोऽर्केऽप्य हे०चं०
णौ वृक्षे वरणो वरुणद्रुमे। प्राकारे वरणा वृत्यां वारणः स्यान्मतंगजे॥२२४॥ ना० ३
वारणं तु प्रतिषेधे ब्राह्मणं विप्रसंहतौ। वेदे च ब्राह्मणो विप्रे ब्राह्मणी पश्चि
माहुए॥२२५॥ गण्डदूर्वा विषाणं तु शृङ्गे कोलेभदंतयोः। विषाणी मे
षशृङ्ग्यां स्याद्विपणिः पण्यहट्टयोः॥२२६॥ पण्यवीथ्यां श्रमणस्तु
निर्ग्रंथे निंद्यजीविनि। श्रवणो नक्षत्रभेदे श्रावणं श्रवसि श्रुतौ॥२२७॥
शरणं रक्षणे गेहे बधरक्षकयोरपि। श्रीपर्णमग्निमन्थेऽब्जे श्रीपर्णी शा
ल्मलौ हठे॥२२८॥ संकीर्णो निचिताशुद्धौ सरणिः श्रेणिमार्गयोः। सा
रणः स्यादतीसारे दशकंधरमंत्रिणि॥२२९॥ सिंहाणं तु घ्राणमलेऽयः
किट्टिका च भाजने। सुषेणो विष्णुसुग्रीववैद्ययोः करमर्दके॥२३०॥
सुवर्णं कांचने कर्षे सुवर्णा लोमखांतरे। कृष्णागुरुणि विज्ञे च सुवर्णः
कृतमालके॥२३१॥ गरुडे स्वर्णचूडे च सुपर्णा विनताब्जिनी। हर
णं च हृतौ दोःस्त्रियौतकादिधनेऽपि च॥२३२॥ हरिणौ पाण्डुसारंगौ ह
रिणी चारुयोषिति। सुवर्णप्रतिमायां च हरितावृत्तभेदयोः॥२३३॥
हर्षणस्तु श्राद्धदेवे हर्षके योगरुग्भिदोः। हरेणुः कुलयोषायां रेणुकायां
सतीनके॥२३४॥ हिरणं हिरण्यमिव वराटे हेम्नि रेतसि।॥ ❁ ॥
त्रिस्वरणान्ताः॥ ❁ ॥ अमृतं यज्ञशेषे तु सुधामोक्षाप्रयाचिते॥२३५॥
अन्नकांचनयोर्जग्धौ स्वेस्वादुनि रसायने। घृते हृद्ये गोरसे चामृतो धन्वंत

हे० च० रौद्रे ॥ २३६ ॥ अमृतामलकीपथ्यागुडूचीमागधीषु च । अन्तकर्षणेऽ
का० ३ लीकेचाक्षतंस्यादहिंसिते ॥ २३७ ॥ षण्डेलाजेप्यर्दितंतुवातव्याधौह
तेऽर्थिते । अजितस्तीर्थकृद्भेदेबुद्धेविष्णावनिर्जिते ॥ २३८ ॥ अच्यु
तोद्वादशसर्गेकेशवाभ्रष्टयोरपि । अव्यक्तंप्रकृतावात्मन्यव्यक्तोऽस्फु
टमूर्खयोः ॥ २३९ ॥ अनंतंखेनिरवधावनन्तस्तीर्थकृद्धरिः । विष्णौ
शेषेऽप्यनंतानुगुडूचीभूदुरालभा ॥ २४० ॥ विशल्यालांगलीदूर्वाशारिवाहै
मवत्यपि । अभ्यंतमभ्रभेदेचेचुल्ल्यामनवधौमृतौ ॥ २४१ ॥ अमतिःका
लेदंडेचाप्यङ्घ्रिनिर्बर्हिवेधसोः । अग्निहोत्रिण्यगस्तिर्द्रुमुन्योःस्याददिति
र्भुवि ॥ २४२ ॥ देवमातरिपार्वत्यामंहतिस्त्यागरोगयोः । आपातःपतने
कालेऽप्यादृतःसादरेऽर्चिते ॥ २४३ ॥ आख्यातंभाषितेत्याद्याघ्रातेग्रस्त
संधिनि । आप्लुतःस्नातकेस्नानेप्यावर्तःपयसांभ्रमे ॥ २४४ ॥ आवर्तने
चिन्तनेचानर्तोजनपदेजने । समरेन्तस्थशालायामाहतंतुमृषार्थके ॥ २४५ ॥
गुणितेताडितेचाप्याध्मातःशब्दितदग्धयोः । वातरोगेऽप्यथास्फोतःकोवि
दारार्कपर्णयोः ॥ २४६ ॥ आस्फोतागिरिकर्ण्यांचवनमाल्यामथाचितं ।
छादितेशकटोन्मेयेपलानामयुतद्वये ॥ २४७ ॥ संगृहीतेऽप्यथायस्तःक्ले
शितेतेजितेहते । क्रुद्धेक्षिप्तेऽप्यायतिःस्यात्प्रभावोत्तरकालयोः ॥ २४८ ॥
दैर्घ्येसङ्गेऽप्याकृतिस्तुजातौरूपेवपुष्यपि । आयत्तिर्वासरेस्नेहेवशित्वे
स्यात्सीम्नि च ॥ २४९ ॥ आसत्तिःसङ्गमेलाभेऽप्यापत्तिःप्राप्तिदोष

योः । आपन्नोपांगितस्तुस्याच्चेष्टायांगमनेऽपिच ॥ २५० ॥ उत्पन्नंचस्तृते के०खं०
मुष्कमांससन्नप्रयोरपि । उचितंविदितेऽभ्यस्तेमितेयुक्तेऽप्यथोत्थितं का०३
॥ २५१ ॥ वृद्धिमत्प्रोद्धृतोत्पन्नेषूदितंतूक्तोक्तयोः । उद्वृत्तंस्यादुच्चलि
तेपरिभुक्तोज्झितेऽपिच॥ २५२ ॥ उषितंव्युषितेप्लुष्टेऽप्युच्छ्रितंतूच्चजात
योः । प्रवृद्धेस्यादथोद्धान्तउदीर्णोनिर्मदद्विपे ॥ २५३ ॥ उदात्तोदात्तृम
हतोर्हृद्येचस्वरभिद्यपि । उन्मत्तोमुचुकुन्देस्याद्धत्तूरोन्मादयुक्तयोः
॥ २५४ ॥ उद्घातःसाधोवार्त्तायामुद्घातःसमुपक्रमे । मुद्गरेऽभ्यासयोगा
यकुम्भकादिचयेऽपिच ॥ २५५ ॥ पादस्खलनउद्घूर्ण्येप्युत्तानस्तार्ध्वे
योषिति । उदयेचसमृद्धावप्येधतुर्नरिपावके ॥ १५६ ॥ क्रन्दितंहृदि
तेहूतौकलितंवेदिताप्तयोः । किरातःस्यादल्पतनौभूनिंबम्लेच्छयोरपि
॥ २५७ ॥ किरातीकुट्टनीगंगाकृतांतोऽक्षेमकर्मणि । सिद्धान्तयमदैवेषु
गर्जितोमत्तकुञ्जरे ॥ २५८ ॥ गर्जितंजलदध्वानेग्रथितंहृतदृब्धयोः ।
आक्रांतेचगरुत्मांस्तुविहगेपन्नगाशने ॥ २५९ ॥ गभस्तिःस्याद्दिन
करेस्वाहाकिरणयोरपि । गोदन्तोहरितालेस्यात्सन्नद्धेदंशितेऽपिच
॥ २६० ॥ गोपतिःशङ्करेषण्डेन्द्रपतौचित्रगणाधिपे । सहस्रकिरणेचापि
ज्वलितोदग्धभास्करे ॥ २६१ ॥ जयंतोवैद्रिगिरिशौजयंत्युमापताकयोः
। जीवंत्यांसिंहपुत्र्यास्त्वजगतीछंदसिक्षितौ ॥ २६२ ॥ जंबूवप्रेजनेलो
केजामाताद्दुहितुःपतौ । सूर्यावर्त्तेवल्लभेचजीमूतोवासवेंबुदे ॥ २६३ ॥

है॰ चं॰ घोषकेऽट्टेभृतिकरेजीवंतीशमिवन्द्योः । जीवन्त्याञ्चगुडूच्याञ्चजीवातु
गा॰ ३ र्जीवनौषधे ॥ २६४ ॥ जीवितेऽपिजृंभितंतुविचेष्टितप्रवृद्धयोः । जृम्भा
यांस्फुटितेचापित्वरितंवेगतद्वतोः ॥ २६५ ॥ त्रिगर्त्तोगणितेदेशेत्रिग
र्त्ताकामुकस्त्रियोः । घुर्घुर्यामथतृणतातृणत्वेकार्मुकेऽपिच ॥ २६६ ॥ दंशि
तोवर्मितेदष्टेस्रवंतीचन्द्रवत्यपि । नद्यामोषधिभेदेचद्विजातिर्ब्राह्मणें
डजे ॥ २६७ ॥ दुर्ज्ञातंव्यसनासम्यग्ज्ञातयोरथदुर्गतिः । नरकेनिः
स्वतायांचदृष्टांतःस्यादुदाहृतौ ॥ २६८ ॥ शास्त्रेऽथभिक्षतंविप्रलब्धेवि
प्रकृतेऽधमे । निरस्तःप्रेषितशरेसन्त्यक्तेत्वरितोदिते ॥ २६९ ॥ निष्ठ्यू
तेप्रतिहतेचनिमित्तंहेतुलक्ष्मणोः । निवातोवातरहितेदृढसन्नाहआ
श्रये ॥ २७० ॥ निर्मुक्तोमुक्तनिर्मोकभुजङ्गेनिःपरिग्रहे । निशांतःसद
नेशांतेप्रभातेऽप्यथनिर्वृतिः ॥ २७१ ॥ मोक्षेमृत्यौसुखेसौस्थेनिकृतिःश
ठशाठ्ययोः । भर्त्सनेऽभिभवेक्षेपेनिर्ऋतिर्निरुपद्रवे ॥ २७२ ॥ अ
लक्ष्म्यांदिक्पतौचापिनियतीदैवसंयमौ । प्रभूतमुद्गतेप्राज्येप्रसूतंजा
तपुष्पयोः ॥ २७३ ॥ प्रतीतःसादरेप्राज्ञेप्रस्थितेज्ञातहृष्टयोः । प्रह
स्तंविस्तृतेक्षुण्णेपलितंपंकतापयोः ॥ २७४ ॥ पक्वकेशेकेशपाशेपण्डि
तःसिह्लधीमतोः । प्रणीतउपसंपन्नेकृतेक्षिप्तेप्रवेशिते ॥ २७५ ॥ सं
स्कृताग्नौपर्याप्तेतुशक्तेतृप्तेनिवारणे । यथेष्टेप्रसृतस्त्वंह्रीजलौवेगिविनी
तयोः ॥ २७६ ॥ ततेचप्रसृताजंघाप्रमीतम्प्रोक्षितेमृतौ । पर्यस्तंतुह

नेऽश्लेप्रयातःसैाप्तिकेभृगैा ॥ २७७ ॥ पर्वतोगिरिदेवर्ध्योःपद्धतिःप्र 
तिपत्तिथैा। पद्धमूलेप्रसूतिःस्यात्पत्येप्रसवेऽपिच ॥ २७८ ॥ पद्ध 
तिःपथिपंक्तौचप्रक्तिर्योनिशिल्पिनोः। पोरमात्यादिलिङ्गेषुगुणसाम्य
स्वभावयोः ॥ २७९ ॥ प्रत्ययात्पूर्विकायांचप्रततिर्विस्तृतिर्लता। प्रवृ
त्तिर्वृत्तौवार्त्तायांप्रवाहेप्रार्थितंहते ॥ २८० ॥ याचितेशत्रुसंरुद्धेपार्षती
द्रुपदात्मजा। सल्लकीजीवनीगैारीपिंडितंगुणितेधने ॥ २८१ ॥ पि
शितंमांसंपिशितामासिकापीडितंपुनः। बाधितेकरणस्त्रीणांयंत्रितंमर्द्दि
तेऽपिच ॥ २८२ ॥ प्रोक्षितंसिक्तहतयोर्भरतःशवरेनटे। क्षेत्रेरामा
नुजेशास्त्रेदैाष्यंतैाभरतात्मजे ॥ २८३ ॥ तंतुवायेभारतंतुशास्त्रेद्वीपांश
भिद्यपि। भारतीपक्षिणीवृत्तिभिदोवाच्यथभावितं ॥ २८४ ॥ वासिते
प्राप्तेभासंतेभिस्तूर्यैरम्यभासयोः। मथितंनिर्जलेघोलेव्यालोडितनिघृष्ट
योः ॥ २८५ ॥ मालतीयुवतैाकाचमाल्यांजातीविशल्ययोः। ज्योत्स्ना
यांनिशिनद्यांचमुषितंखंडितेहृते ॥ २८६ ॥ मूर्छितंसोच्छ्रयेमूढेरजतं
दंतिदंतयोः। धवलेशोणितेहारेदुर्वर्णेहूदशैलयोः ॥ २८७ ॥ रसि
तंस्वर्णादिलिप्तेस्तनितस्तनितयोरपि। रेवतीबलभार्यायांनक्षत्रभिदि
मातृषु ॥ २८८ ॥ रैवतःस्याज्जयंतेऽपिस्तुवर्णेऽलैापिनाकिनि। रे
हितोहारभेदेमीनेमृगेरोहितद्रुमे ॥ २८९ ॥ रोहितंकृजुशक्रास्त्रेधीरे
ललितमीप्सिते। ललितेहारभेदेस्याल्लोहितोमंगलेनदे ॥ २९० ॥ बलभेदे

हे॰चं॰ लोहितंतुकुंकुमेरक्तचंदने । गोशीर्षंरुधिरेयुद्धेवर्धितंछिन्नपूर्णयोः
ना॰ ३ ॥ २९१ ॥ प्रसूतेवनितंतुस्यात्प्रार्थितेसेवितेऽपिच। वनितोत्पादितात्यर्थं
रागनार्यपिनार्यपि ॥ २९२ ॥ वसतिःस्याद्वस्थानेनिशायांसदनेऽपिच
। व्रततिस्तुप्रतानिन्यांविस्तारेऽप्यथवापितं ॥ २९३ ॥ बीजाकृतेमुंडितेच
व्याघातोयोगविघ्नयोः। घातेऽथव्यायतंदीर्घंव्यापृतेऽतिशयेदृढे ॥ २९४ ॥
वासंतःपरपुष्टेस्यात्करभेविहितेविटे । वासंतीमागधीयूथीपटलास्वथ
वासितं ॥ २९५ ॥ वस्त्रछन्नेज्ञानमात्रेभावितेऽप्यथवासिता। स्त्रीकरि
ण्योर्विवस्वांस्तुदेवेसूर्येऽथविश्रुतं ॥ २९६ ॥ ज्ञातेहृष्टेप्रतीतेचविदितं
बुधितेश्रुते। विगतोनिष्प्रभेवीतेविविक्तोवस्तुनन्दने ॥ २९७ ॥ विवि
क्तंस्यादसंपृक्तेरहःपूतविवेकिषु । विधूतंकंपितेत्यक्तेविकृतोरोगीसंस्कृ
तः ॥ २९८ ॥ बीभत्सश्चविनीतस्तुनिभृतेनिर्जितेन्द्रिये । वणिजेसाधु
वाह्यश्वेविनयग्राहितेहृते ॥ २९९ ॥ विनतःप्रणतेभुग्नेविनतापिट
काभिदि । सुपर्णायांविहस्तस्तुविह्वलेपण्डितेऽपिच ॥ ३०० ॥ विश्वस्तः
ज्ञातविश्वासेविश्वस्ताविधवस्त्रियां । विजातोविकृतेजातेविजातानुप्रसूति
का ॥ ३०१ ॥ विवर्त्तोनर्त्तनेसंघेऽपावृत्तोविवृतोरुजि । डिंबेविकारेमघा
दौविपत्तिर्यातनापदोः ॥ ३०२ ॥ विच्छित्तिःस्यादंगहारेगेहावधिच्छेद
योरपि । विधातादुहिणेकामेविनेतादेशिकेनृपे ॥ ३०३ ॥ वृत्तांतस्तुप्रक
रयोःकार्त्स्न्येवार्त्ताप्रकाशयोः । वृहतीक्षुद्रवार्त्ताक्यांछंदोवसनभेदयोः

॥ ३०४ ॥ महत्यांवाचिवाद्यान्यांवेल्लितंकुटिलेधुते । प्लुतेवेष्टितंलासके
रुद्धेस्त्रीकरणांतरे ॥ ३०५ ॥ शकुंतोविहगेभासेश्रीपतिर्विष्णुभूपयोः ।
शुद्धांतःस्याद्रहःकक्षांतरेराज्ञोऽवरोधने ॥ ३०६ ॥ संख्यावान्मितस्तुधि
योःसरस्वाननुदधौनदे । संवर्त्तःप्रलयेऽक्षद्रौसंहतंमिलितेदृढे ॥ ३०७ ॥
स्खलितंछलितेभ्रेषेसंस्कृतंलक्षणान्विते । भूषितेकृत्रिमेशस्तेसंघातोघा
तसंघयोः ॥ ३०८ ॥ संहितावर्णसंयोगेशास्त्रेवेदैकदेशयोः । स्थप
तिःसौविदेधीरेबृहस्पतीष्टियज्वनोः ॥ ३०९ ॥ कारुकेचसंततिस्तुत
नयेदुहितर्यपि । परंपराभवेपंक्तौगोत्रविस्तारयोरपि ॥ ३१० ॥ संन
तिःप्रणतिध्वन्योःसंगतिर्ज्ञानसंगयोः । सम्मतिर्वाञ्छानुमत्योःसमिति
र्युधिसंगमे ॥ ३११ ॥ साम्येसभायांसंवित्तिःप्रतिपत्त्यववादयोः । स्था
पितंनिश्चितेन्यस्तेस्तिमितोक्लिन्ननिश्चलौ ॥ ३१२ ॥ सिकताःस्युर्वालुकायां
सिकतासैकितेरुजि । सुकृतंतुशुभेपुण्येसुविधानेऽथसुव्रता ॥ ३१३ ॥
सुखदोह्यसौरभेय्यांसुव्रतोऽर्हतिसद्व्रते । सुनीतिर्ध्रुवमातास्यात्सुन
योऽप्यथसूनृतं ॥ ३१४ ॥ मंगलेप्रियसत्योक्तौहसंतीशाकिनीभिदि ।
मल्लिकांगारधान्योश्चहारीतोविहगांतरे ॥ ३१५ ॥ मुनौछद्मन्यप्यऽ
॥ ❁ ॥ त्रिस्वरतांताः ॥ ❁ ॥ अश्वत्थःपिप्पलेगर्दभांडके । अश्वत्थेष
पौर्णमास्यामतिथिःकुशनंदने ॥ ३१६ ॥ गृहागतावथोपस्थःपायुमेढ्रां
कयोर्निषु । उन्माथोमारणेकूटयंत्रघातकयोरपि ॥ ३१७ ॥ क्षवथुः

हे॰चं॰ कासेछिक्कायांकायस्थोऽक्षरजीवकः । परमात्माचकायस्थाहरीतक्याम
ना॰ ३ लक्यपि ॥ ३१८ ॥ दमथोदमकेदंडेनिर्ग्रंथोनिःस्वमूर्खयोः । रुद
थः कुक्कुटम्मुनोर्वरूथः पिककालयोः ॥ ३१९ ॥ वरूथंस्यात्तनुत्राणेर
थगोपनवेश्मणोः । वयःस्थोमध्यमवयावयःस्थाशाल्मलीद्रुमे ॥ ३२० ॥
ब्राह्मीगुडूचीकाकोलीसूक्ष्मैलामलकीषुच । वमथुर्वमनेकाशेगजस्यक
रशीकरे ॥ ३२१ ॥ विदथोयोगिनिप्राज्ञेशमथः सचिवेशमे । शपथः
कारआक्रोशेशपनेचसुतादिभिः ॥ ३२२ ॥ शयथःस्यादजगरेनिद्रा
दौमरणेऽपिच । खड्ग्रंथः करंजभेदेषड्ग्रंथानुवचाशटी ॥ ३२३ ॥ सम
र्थःशक्तिसंपन्नेसंबद्धार्थेहितेऽपिच । सिद्धार्थःसर्षपेशाक्यसिंहेपिजिन
भरि ॥ ३२४ ॥ ❁ ॥ त्रिस्वरथांताः ॥ ❁ ॥ अर्बुदः पर्वतेमांसकीलके
दशकोटिषु । अर्द्धेंदुःस्यादनिप्रोष्वीगुह्यांगुलियोजने ॥ ३२५ ॥ गल
हस्तेनखांकेऽर्द्धचंद्रेऽङ्गदस्तुबालिजे । अंगदंतुकेयूरंस्यादंगजायाम्यदि
गाजी ॥ ३२६ ॥ आस्पदंकृत्यपदयोरामोदोगंधहर्षयोः । आक्रंदो
दारुणरसेसारावहृदितेन्टपे ॥ ३२७ ॥ क्षणदंतोयेक्षणदोगणकेक्ष
णदानिशि । कपर्दःपार्वतीभर्तुर्जटाजूटेवराटके ॥ ३२८ ॥ कर्णांदुः
स्यात्कर्णपाल्युत्क्षिप्तिकाकुमुदः कपौ । दिग्नागनागयोर्दैत्यविशेषेचासितो
त्पले ॥ ३२९ ॥ कुमुदाकुंभीगंभार्योःकुसीदंवृद्धिजीवने । वृद्ध्याजीवे
कौमुदस्तुकार्तिकेकौमुदीद्रुभा ॥ ३३० ॥ गोविंदस्तुगवाध्यक्षेवासुदेवे

बृहस्पतौ। गोष्पदं गोखुरश्वभ्रे गवां च गतिगोचरे ॥ ३३१ ॥ अलदो मुस्त
केमेघे जीवदो रिपुवैद्ययोः। ग्रंथिपर्णे तमो भुक्तु शशिमार्तंडबर्हिषु ॥ ३३२ ॥ हे०अ०
दारदो विषभेदे स्यात्पारदे हिंगुलेऽपि च। दायदौ सुतसपिंडौ धनदौ दातृ ना० ३
गुह्यकौ ॥ ३३३ ॥ नलदा मांस्यां नलदमुशीरमकरंदयोः। नर्मदा रे
वानिर्माल्योर्निषादः श्वपचे स्वरे ॥ ३३४ ॥ निर्वादस्तु लोकवादेऽपवादे
प्रमदो मुदि। प्रमदा स्त्री प्रसादोऽनुग्रहस्वास्थ्यप्रसत्तिषु ॥ ३३५ ॥
काव्यगुणे प्रह्लादस्तु निनदे दानवांतरे। प्रतिपत्संविदि तिथौ प्रासादो रा
जमंदिरे ॥ ३३६ ॥ देवतायतने चापि मर्यादा स्थितिसीमयोः। माकं
दः सहकारे स्यान्माकंद्यामलकीफले ॥ ३३७ ॥ मुकुंदः पारदे रत्नविशे
षे गरुडध्वजे। मेनादः केकिनि च्छागे मार्जारे वरदः पुनः ॥ ३३८ ॥ प्र
सन्ने शांतचित्ते च वरदा तु कुमारिका। विशदः पांडुरे व्यक्ते शारदो वत्सरे न
वे ॥ ३३९ ॥ शरद्भवे पीतमुद्गे शालीनेप्यऽथ शारदी। सप्तपर्ण्यंबुपिप्प
ल्योः सुनंदा रोचनांगना ॥ ३४० ॥ जननी बाहुबलिनो ॥ ❁ ॥ त्रिस्व
रदांताः ॥ ❁ ॥ स्गाधोऽस्ताघरंध्रयोः। अवधिः स्याद्वधाने कालसीम
बिलेष्वपि ॥ ३४१ ॥ आनद्धं बद्धमुरजाद्याविद्धः क्षिप्तवक्रयोः। आ
बंधो भूषणे प्रेम्णि बंधेऽथोन्सेधउच्छ्रये ॥ ३४२ ॥ संहननेऽप्युपाधिस्तु ध
र्मध्याने विशेषणे। कुटुंबव्यापृते छद्मन्युपधिर्व्याजचक्रयोः ॥ ३४३ ॥
कबंधमुदके रुंडे कबंधो राहुरक्षसोः। दुर्विधो दुर्जने निःस्वे न्यग्रोधो वट

मे० थं० पादपे ॥ ३४४ ॥ शम्यांव्यामेन्यग्रोधीतुसोहनाख्यौषधीभिदि । नृपप
ना० ३ र्यां निषधस्तुपर्वतेकठिनेस्वरे ॥ ३४५ ॥ दृशनद्राजयोश्चापिनिरोधो
नाशरोधयोः । प्रसिद्धोभूषितेख्यातेप्रणिधिर्याचनेचरे ॥ ३४६ ॥ परि
धिर्यज्ञियतरोःशाखायामुपसूर्यके । मागधामगधाद्भूतेशुक्लाजीरकबंदि
नोः ॥ ३४७ ॥ वैश्यतःक्षत्रियापुत्रेमागधीस्यात्तुपिप्पली । यूथीभाषा
विशेषस्त्वविबुधःपंडितेसुरे ॥ ३४८ ॥ विश्रब्धोऽनुद्धटेशांतेविश्वस्तात्य
र्थयोरपि । विबधावीवधाभारेपर्याहाराध्वनोरपि ॥ ३४९ ॥ संबाधः
संकटेयोनौसंरोधःक्षेपरोधयोः । सन्नद्धोवर्मितेव्यूढेसमाधिःस्यात्सम
र्थने ॥ ३५० ॥ चित्तैकाग्र्यनियमयोर्मौनेसन्निधिरंतिके । प्रत्यक्षेचाथ
संसिद्धिःसम्यक्सिद्धिस्वभावयोः ॥ ३५१ ॥ ❁ ॥ त्रिस्वरधांताः ॥ ❁ ॥
अयनंपथिगेहेऽर्कस्योदग्दक्षिणतोगतौ । अस्नानस्त्वमलेभिन्नएणी
भेदेऽर्जुनतृणेसिते ॥ ३५२ ॥ नेत्ररोगेऽर्जुनःपार्थेहैहयेककुभद्रुमे ।
मातुरेकसुतेचार्जुन्युषागौःकुट्टनीसरित् ॥ ३५३ ॥ अंगनंप्रांगणेयाने
ऽप्यनंगात्तुनितंबिनी । स्यादपानंगुदेऽपानस्तद्वायावंजनंमसी ॥ ३५४ ॥
रसांजनेऽक्तौसौवीरेथांजनोदिग्गजेगजे । अंजनाहनुमन्मातर्यंजनीले
प्ययोषिति ॥ ३५५ ॥ अवनंरक्षणप्रीत्योरर्यमापितृदैवते । तरणौसू
र्यभक्तायामशनिर्वज्रविद्युतोः ॥ ३५६ ॥ अरत्निःकूर्परेपाणौसकोष्ठ
विततांगुलौ । आसनंविष्टरेहस्तिस्कंधेयात्रानिवर्तने ॥ ३५७ ॥ आ

वनेभिजीवकतणवासनीपण्यवीथिका। आपन्नःसापदिप्राप्तेऽप्यादानंवाजि हे॰ थं॰
भूषणे ॥ ३५८ ॥ ग्रहणेऽथोत्थानंसैन्येपौरुषेयुधिपुस्तके। उद्यमो ना॰ ३
द्गमहर्षेषुवास्त्वंतेङ्गनचैत्ययोः ॥ ३५९ ॥ मलोत्सर्गेऽप्यथोत्तानःसुप्तो
न्मुखगभीरयोः। उद्यानंस्यान्निःसरणेवनभेदेप्रयोजने ॥ ३६० ॥ उ
द्वानमुद्गमेचुल्ल्यामुदानःपवनांतरे। सर्पभिद्युदरावर्त्तेकमनोऽशोकपाद
पे ॥ ३६१ ॥ कामिकामाभिरूपेषुकठिनंनिष्ठुरेषयोः। कठिनीतुखटि
कायांस्यात्कठिनागुडशर्करी ॥ ३६२ ॥ कर्त्तनंयोषितांतूलसेवनेछेदनेऽपि
च। क्रंदनंरोदनेह्वानेकल्पनेक्लृप्तिकर्तने ॥ ३६३ ॥ कल्पनेभसज्जना
यांकलापीप्लक्षकेकिनोः। कंचुकीजांगकनरैमहल्लेपन्नगेविटे ॥ ३६४ ॥
कांचनंहेम्निकिंजल्केकांचनोनागकेसरे। उदुंबरेकांचनारेपुन्नागेचंप
केऽपिच ॥ ३६५ ॥ कांचनीतुहरिद्रायांकानीनःकन्यकासुते। कर्णेव्यासे
काननंतुब्रह्मास्येविपिनेगृहे ॥ ३६६ ॥ कुहनोमूषिकेसर्पेकुहनादंभक
र्मणि। कुंडलीवरुणेसर्पमयूरेकुंडलान्विते ॥ ३६७ ॥ केतनंसदनेचि
ह्नेकृत्येचोपनिमंत्रणे। केसर्य्यश्वेपुन्नागेनागकेसरसिंहयोः ॥ ३६८ ॥
कौपीनंगुह्यदेशेस्यादकार्येचांबरांतरे। कौलीनंजनवादेहिपशुपक्षिभु
नांयुधि ॥ ३६९ ॥ अकार्यगुह्येकौलीन्येगहनंवनदुःखयोः। गह्वरेक
लिलेचापिगंधनंतुप्रकाशने ॥ ३७० ॥ सूचनोत्साहहिंसासुगर्जनंस्व
नितेयुधि। गूंजनंविषदिग्धस्यपशोर्मांसेरसोनके ॥ ३७१ ॥ गोस्तनो

मे०चं० हारभेदेस्याद्गोस्तनीहारहूरिका । घट्टनाचलनावृत्योश्चलनःपादकंप
ना०३ योः ॥ ३७२ ॥ चलनंकंपचलनीवारीभित्स्त्रीघर्घरी । चंदनोवान
रभिदिस्त्री खंडेचंदनीनदी ॥ ३७३ ॥ चेतनःस्यात्सहृदयप्राणिनोस्त्रे
तनातुधीः । चोलनंतुनागरंगकिष्कुपर्वकरीरयोः ॥ ३७४ ॥ छर्दनोऽ
लंबुषेनिंबेछर्दनंवमनेऽपिच । छदनंपर्णेगरुतिछेदनंकर्तनेभिदि
॥ ३७५ ॥ जयनंविजयेऽश्वादिसन्नाहेजघनंकटौ । स्त्रियःश्रोणिपुरो
भागेजवनोवेगिवेगयोः ॥ ३७६ ॥ वेगयुक्तेजवनीवृतिजवन्यपटयामौ
षधीभिदि । जीवनस्तुभवेत्पुत्रेजीवनंवृत्तिवारिणोः ॥ ३७७ ॥
स्याज्जीवनातुमेदायांजीवनीतुमधुस्रवा । तलिनंविरलेस्वच्छेस्तोकेऽथ
तपनोरवौ ॥ ३७८ ॥ भल्लातेनरकेग्रीष्मेतलुनोयूनिमारुते । तमो
घ्नोवह्निसूर्येन्दुबुद्धकेशवशंभुषु ॥ ३७९ ॥ तपस्वीतापसेदीनेतर
स्वीवेगिशूरयोः । तेमनंव्यंजनेक्लेदेतेमनीचुल्लिभिद्यपि ॥ ३८० ॥ तो
दनंव्यथनेतोचेद्दहनेदुष्टचेतने । भल्लातेचित्रकेऽग्नौचदमनोवीरपुष्प
योः ॥ ३८१ ॥ दर्शनंदर्पणेधर्मोपलब्ध्योर्बुद्धिशास्त्रयोः । स्वप्नलो
चनयोस्स्यापिदंशनंवर्मदंशयोः ॥ ३८२ ॥ द्विजन्मानोरदविप्रौदुर्ना
मपुनरर्शसि । दुर्नामादीर्घकोशीस्याद्देवनोऽक्षेथदेवनं ॥ ३८३ ॥
व्यवहारेजिगीषायांक्रीडायांधमनोऽनले । क्रूरेभस्त्राध्मापकेचधमनीकं
धराशिर ॥ ३८४ ॥ हरिद्रायांचधावनंतुगतौशौचेऽथनंदनं । इंद्रो

श्यानेभंदनस्तुतनयेहर्षकारिणि ॥ ३८५ ॥ नलिनंनीलिकातोयांबुजेषु छे॰ चं॰
नलिनीपुनः । पद्माकरेगंगाब्जिन्योर्निधनंकुलनाशयोः ॥ ३८६ ॥ ना॰ ३:
निदानंकारणेशुद्धौतपसःफलयाचने । वत्सदाम्न्यवसानेचप्रधानंबु
धिदारणे ॥ ३८७ ॥ प्रधानंप्रकृतौबुद्धावुत्तमेपरमात्मनि । महामा
त्रेप्रसूनंतुप्रसूतेफलपुष्पयोः ॥ ३८८ ॥ प्रज्ञानंबुद्धौचिह्नेचस्या
त्प्रसन्नंप्रसादवत् । प्रसन्नातुमदिरायांपवनोवायुवह्न्योः ॥ ३८९ ॥
पवनंपुनरापाकेपद्मिनीयोषिदन्तरे । अब्जोऽब्जिन्यांसरस्यांचपावनंज
लकृच्छ्रयोः ॥ ३९० ॥ पावनःपावकेसिद्धेव्यासेपावयितर्यपि । पा
वनीतुहरीतक्यांपाठीनोगुग्गुलद्रुमे ॥ ३९१ ॥ पाठकेमीनभेदेचपि
शुनःसूचकेखले । कार्पासेपिशुनास्पृक्कास्यात्पिशुनंतुकुङ्कुमं ॥ ३९२ ॥
पीतनंहरितालेस्यात्पीतदारुणिकुङ्कुमे । पीतनःपुनराम्रातेपूतनातुह
रीतकी ॥ ३९३ ॥ दुग्धदावासुदेवस्यपृतनानीकिनीचमूः । सेनासै
न्यविशेषस्फाल्गुनोमासपार्थयोः ॥ ३९४ ॥ नदीजेऽर्जुनवृक्षेचफाल्गु
नीपूर्णिमाभिदि । भवनंसदनेभावेभंडनंकवचेयुधि ॥ ३९५ ॥ खलीका
रेभट्टिनीतुब्राह्मण्यांनृपयोषिति । भावनावासनाध्यानलोकनाकारवांबु
षु ॥ ३९६ ॥ भूतात्माद्रुहिणेदेहेमदनःसिक्थकेऽस्मरे । राठवसंतेधत्तूरे
मलिनंकृष्णदोषयोः ॥ ३९७ ॥ मलिनीरजस्वलायांमंडनंतुप्रसाधने ।
मंडनोऽलंकरिष्णौस्यान्मार्जनोलोध्रशाखिनि ॥ ३९८ ॥ मार्जनंशुद्धि

हे० चं० करशोमार्जनामुरजध्वनौ । मालिन्युमायांगंगायांचंपावृत्तप्रभेदयोः

ना० ३ ॥ ३९९ ॥ मालिक्यांमिथुनंराशौमिथुनंपुंस्त्रियोर्युगे । मुंडनंरक्षणेक्षौरे

मेहनंमूत्रशिश्नयोः ॥ ४०० ॥ मैथुनंरतसंगत्योर्यमनंयमबंधयोः । या

पनंकालविक्षेपेनिरसेवर्त्तनेऽपिच ॥ ४०१ ॥ योजनंतुचतुःक्रोश्यांस्या

द्योगपरमात्मनोः । रसनंध्वनितेस्वादेरसज्ञारसनयोरपि ॥ ४०२ ॥

रंजनंरंजकेरक्तचंदनेऽप्यथरंजिनी । मंजिष्ठारोचनीनीलीगंडाम्बुरज

नीनिशि ॥ ४०३ ॥ लाक्षानीलीहरिद्राम्बुराधनंप्राप्तितोषयोः । साध

नेरेचनीगुंद्रादंतीरेचनकात्रिवृत् ॥ ४०४ ॥ रोदनंत्वश्रुणिक्रंदेरोचनःकू

टशाल्मलौ । रोचनारक्तकह्लारेगोपित्तेवरयोषिति ॥ ४०५ ॥ लंघनं

भोजनत्यागेप्लवनेक्रमणेऽपिच । ललामवत्कलामाश्वेचिह्नेश्रृंगपताक

योः ॥ ४०६ ॥ रम्येप्रधानेभूषायांपुंड्रेपुच्छप्रभावयोः । ललनास्त्रीनारीजि

ह्वालांछनंलक्ष्यसंज्ञयोः ॥ ४०७ ॥ लांगलीबलभद्रेस्यान्नारिकेलेऽथले

खनं । भूर्जेछेदेलिपिन्यासेव्यसनंनिःफलोद्यमे ॥ ४०८ ॥ दैवानिष्ट

फलेसक्तौस्त्रीपानमृगयादिषु । पापेविपत्तावशुभेव्यंजनंश्मश्रुचिह्नयोः

॥ ४०९ ॥ तेमनेऽवयवेकादौवमनंछर्दनेऽर्दने । वसनंछादनेवस्त्रेवर्जनंत्या

गहिंसयोः ॥ ४१० ॥ वर्द्धनंछेदनेवृद्धौवर्द्धनीतुगलंतिका । वपनंमुंडने

बीजाधानेऽथवर्त्तनीपथि ॥ ४११ ॥ वर्त्तनेतर्कुपीठेचवनस्थाविप्रतारके ।

शार्दूलेगंधमार्जारेवामनोदिग्गजेऽच्युते ॥ ४१२ ॥ खर्वेकांडेवाहिनीतुसे

नानङ्खेद सिंधुषु । स्यादाशिनीतु न नंक्यां ह्रेक मन्नस्त्रियोरपि ॥ ४१३ ॥ हे॰चं॰
वितानं कटकेयज्ञे विस्तारे क्रतुकर्मणि । तुच्छेमंदे वृत्तभेदे शून्यावसरयोर ना॰ ३
पि ॥ ४१४ ॥ विज्ञानंकार्मणेज्ञाने विलग्नंमध्यलग्नयोः । विक्लिन्नाजी
र्णशीर्णाद्रौ विलीनौ लीन विद्रुतौ ॥ ४१५ ॥ विषघ्नः शिरीषतरौ विषघ्ना
चिवृताऽमृता । विच्छिन्नंकुटिलेस्यात्तु समालब्धविभक्तयोः ॥ ४१६ ॥ विमा
नंदेवतायानेसार्वभौमगृहेऽपिच । विधानंहस्तिकवलेप्रेरणेऽभ्यर्चनेधने
॥ ४१७ ॥ चेतनोपायविधिषुप्रकारेवैरकर्मणि । विपन्नोभुजगेनष्टेवि
श्वप्सा वह्निचंद्रयोः ॥ ४१८ ॥ समीरणेक्रतांतेचविलासीभोगिसर्पयोः ।
विषयोविषयासक्तौवैषयिकजनेन्द्रपे ॥ ४१९ ॥ कामेविषयिहृषीकेव्युत्था
नंप्रतिरोधने । विरोधाचरणेस्वैरवृत्तौसमाधिपारणे ॥ ४२० ॥ वृजिनः केशेवृ
जिनंभुग्नेऽघेरक्तचर्मणि । वेष्टनंमुकुटेकर्णशष्कुल्युष्णीषयोर्वृतौ ॥ ४२१ ॥
वेदनाज्ञानेपीडायांशयनंस्वापशय्ययोः । रतेशमनस्तुयमेशमनंशां
तहिंसयोः ॥ ४२२ ॥ श्वसनंश्वासेश्वसनः पवनेमदनद्रुमे । शकुनं
स्याद्वैवशंसिनिमित्तेशकुनः खगे ॥ ४२३ ॥ शकुनिः खगेकरणभे
देकौरवमातुले । शतघ्नीतुवृश्चिकाल्यांशस्त्रभेदकरंजयोः ॥ ४२४ ॥
शासनंन्द्रपदत्तोर्व्यांशास्त्राज्ञालेखशास्तिषु । शिखरीकोट्टकोयष्ट्योर्द्रुमेऽ
पामार्गशैलयोः ॥ ४२५ ॥ शिखंडीकुक्कुटेपिच्छामलेखेवर्षिवर्हयोः । भी
ष्मारैवाणेशृंगारीसुवेषेक्रमुकेद्विपे ॥ ४२६ ॥ श्लेष्माध्मास्यान्मल्लिकायां

हे० चं० कंपिल्लकफणिज्जयोः। शोचनः सुंदरे योगे सवनं स्नानयागयोः ॥४२७॥
ना० ३ सोमनिर्द्दलने चापि सदनं जनसद्मनोः। स्तननं कुंथने मेघगर्जिते ध्वनि
मात्रयोः ॥ ४२८ ॥ स्पर्शनं हृषीके दाने स्पर्शे च स्पर्शनोऽनिले। स्यंदनं
स्रवणे तोये स्यन्दनस्तिनिशे रथे ॥ ४२९ ॥ संव्यानं छादने वस्त्रे समानो
देहमारुते। वर्णाभिन्नसमैकेषु संतानोऽपत्यगोत्रयोः ॥ ४३० ॥ संततौ
देववृक्षेषु संस्थानं त्वाकृतौ मृतौ। चतुःपथे संनिवेशे सज्जनं घट्टगुल्मके
॥ ४३१ ॥ सज्जनस्तु कुलीने स्यात्सज्जनाऽपि च कल्पना। संधानं तु सं
घट्टितेऽभिषवे संधिनी तु गोः ॥ ४३२ ॥ वृषाक्रांताकालदुग्धा स्थापनं तु
निवेशने। पुंसवने समाधौ च साधनं सिद्धिसैन्ययोः ॥ ४३३ ॥ उपायेऽ
नुगमे मेढ्रनिवृत्तौ कारके वधे। दापने मृतसंस्कारे प्रमाणे गमने धने ॥ ४३४ ॥
सुकर्मा योगभेदे स्यात्सक्रिये देवशिल्पिनि। सुदामा पर्वते मेघे सुधन्वा
त्वष्टृधन्विनोः ॥ ४३५ ॥ सुपर्वा पर्वशरे त्रिदशे वंशधूमयोः।
सूचना स्यादभिनये गंधने व्यधने दृशि ॥ ४३६ ॥ सेवनं सीवनोपास्त्योः सेना
नीः सैन्यपे गुहे। ह्रापनोऽर्चिर्व्रीहिर्वर्षे ह्रादिनी वज्रविद्युतोः ॥ ४३७ ॥
हिंडनं क्रीडारतपर्याटने ॥ ❁ ॥ त्रिस्वरनांताः ॥ ❁ ॥ ऽनूपस्तु सै
रिभे। जलप्रायेऽप्यथावापः पानभेदालवालयोः ॥ ४३८ ॥ प्रक्षेपे भां
डपचने प्याक्षेपः परिभर्त्सने। काव्यालंकरणाकृष्ट्योः स्यादाकल्पस्तु मंडने
॥ ४३९ ॥ कल्पने चाप्युलुपस्तु गुल्मिनी तृणभेदयोः। उडुपः प्लवशशि

नौः कलापे वहेर्नूपयोः ॥ ४४० ॥ संहतौ भूषणे कांच्यां कच्छपे मरुत्तके। कमठे कच्छपीवीणाकशिपुर्भोज्यवस्त्रयोः ॥ ४४१ ॥ एकैकस्मिन्द्रोण्यापिकाश्यपो मुनिमीनयोः। काश्यपुर्व्यां कुतपस्तु छाग कंबलदर्भयोः ॥ ४४२ ॥ वैश्वानरे दिनकरे द्विजन्मन्यतिथौ गवि। भागिनेयेऽष्टमांशेऽह्नो वाद्येऽथ कुटपो मुनौ ॥ ४४३ ॥ निःकुटे मानभेदे च कुणपः पूतिगंधिनि। शवे जिह्वापस्तु मुनिच्यावेदी पिविडालयोः ॥ ४४४ ॥ पादपोऽद्रौ पादपीठे पादपापादरक्षयो। रक्तपः स्याद्यातुधाने रक्तपा तु जलौकसि ॥ ४४५ ॥ विटपः पल्लवे स्तम्बे विस्तारे पिङ्गशाखयोः। सुरूपस्तु बुधे रम्ये प्रतिरूपा भिरूपवत् ॥ ४४६ ॥ ॥ चिस्वरपांताः ॥ ॥ कदंबः सर्षपे नीपे कदंबनिकुरंबके। कलंबो नालिका शाके पृषत्के नीपपादपे ॥ ४४७ ॥ कादंबः कलहंसे ष्वो र्नितंबः कटिरोधसोः। स्त्रियं पश्चात्कटौ सानौ प्रलंबस्तु प्रलंबनं ॥ ४४८ ॥ दैत्यः तालांकुरः शाखा प्रालंबः स्यात्पयोधरे। च पुष्पे हारभेदे च भूजंबुस्तु विकंकते ॥ ४४९ ॥ गोधूमाह्वयधान्ये च हेरंबः शौर्यगर्विते। महिषे विघ्नराजे चा ॥ ॥ चिस्वरबांताः ॥ ॥ रंभस्तु बधद्रयोः ॥ ४५० ॥ त्वरायामुद्यमे चाप्यात्मभूर्ब्रह्मणि मन्मथे। ऋषभः स्यादादिजिने वृषभे भेषजेश्वरे ॥ ४५१ ॥ कर्णरंध्रे कोलपुच्छे श्रेष्ठे चाप्युत्तरे स्थितः। ऋषभी तु मूकशिंब्यां पुरुषाकारयोषिति ॥ ४५२ ॥ विधवायां सिराला बुकरभोमयच्छके। अंगुलेस्तु कनिष्ठाया मणिबंधस्य चांतरे ॥ ४५३ ॥

हे० चं० नां० ३

हे० चं० वकुभोवीणाप्रसेवेरोगभेदेऽर्जुनद्रुमे । कुसुंभंतुशातकुंभेस्याह्लद्वायांकमं
ना० ३ डलौ ॥ ४५४ ॥ गर्दभोरासभेगंधेगर्दभीजंतुरुग्भिदोः । गर्दभंसितकुमु
देदुर्लभःकच्छुरेप्रिये ॥ ४५५ ॥ दुष्प्रापेऽपिदुंदुभिस्तुभेर्यादितिसुतेविषे
। अर्द्धबिन्दुचिकर्दद्देनिकुम्भःकुम्भकर्णजे ॥ ४५६ ॥ दन्त्यांचवल्लभो
ऽध्यक्षेकुलीनाश्वेप्रियेऽपिच । वर्षाभूःपुनर्नवायांस्याज्जंदूपदभेकयोः
॥ ४५७ ॥ विष्कंभोविस्तृतौयोगविशेषप्रतिबंधयोः । योगिनांचबंधभे
देरूपकावयवेऽपिच ॥ ४५८ ॥ विस्रंभःकेलिकलहेविश्वासेप्रणयेव
धे । वृषभःस्यादादिजिनेवृषपुंगवयोरपि ॥ ४५९ ॥ सनाभिर्ज्ञातिस
दृशेसुरभिर्हेम्निचंपके । जातीफलेमातृभेदेरम्येचैत्रवसंतयोः ॥ ४६० ॥
सुगन्धौगविशल्लक्यां ॥ त्रिस्वरभांताः ॥ मधमोन्यूनगर्ह्ययोः । आगमस्त्वा
गमेशास्त्रेप्याश्रमोव्रतिनांमठे ॥ ४६१ ॥ ब्रह्मचर्यादिचतुष्केप्युत्तमादु
ग्धिकौषधौ । उत्तमंतुप्रधानेस्यात्कलमःशालिचौरयोः ॥ ४६२ ॥ कुसुमं
स्त्रीरजोनेत्ररोगयोःफलपुष्पयोः । कृत्रिमंलवणभेदेकृत्रिमःकृतसिह्लयोः
॥ ४६३ ॥ गोधूमोभेषजेनागरंगव्रीहिप्रभेदयोः । गोलोमीवरयोषायांच
ड्ग्रंथासितदूर्वयोः ॥ ४६४ ॥ गौतमोगणभृद्भेदेशाक्यसिंहर्षिभेदयोः ।
गौतम्युमायांराजन्यांतलिमंतल्पखड्गयोः ॥ ४६५ ॥ वितानेकुट्टिमेचापिदा
डिमःकरकैलयोः । निष्क्रमोनिर्गमेबुद्धिसंपत्तौदुःकुलेऽपिच ॥ ४६६ ॥
नियमःस्यात्प्रतिज्ञायांनिश्चयेयंत्रणेव्रते । निगमाःपूर्वणिग्वेदनिश्चया

ष्वेवणिक्पथाः ॥ ४६७ ॥ नैगमोनयपौरोपनिषद्वृत्तिषुवाणिजे । प्रथ
मःस्यात्प्रधानाद्योः प्रक्रमोऽवसरेक्रमे ॥ ४६८ ॥ पंचमोरुचिरेदक्षेपं
चानामपिपूरणे । रागभेदेपंचमीतुद्रौपद्यांपरमःपरे ॥ ४६९ ॥ अग्रे
सरप्रथमयोरकारेपरमंपुनः । स्यादव्ययमनुज्ञायांमध्यमोमध्यजे
स्वरे ॥ ४७० ॥ देहमध्येमध्यदेशेमध्यमाकर्णिकांगुलिः । कन्यारजस्व
लाचापिव्यायामःपौरुषश्रमे ॥ ४७१ ॥ वियामेदुर्गसंचारेविलोमम
रघट्टके । विलोमोवरुणेसर्पेप्रतीपेकुक्कुरेऽपिच ॥ ४७२ ॥ विलो
मीस्यादामलक्यांविक्रमःशक्तिसंपदि । क्रांतौचविद्रुमोवृक्षेप्रबालेऽप्यथ
विभ्रमः ॥ ४७३ ॥ शोभायांसंशयेहावेसत्तमःश्रेष्ठपूज्ययोः । सा
धिष्ठेसंभ्रमोभीतौसंवेगादरयोरपि ॥ ४७४ ॥ सुषीमःशिशिरेरम्ये
सुषमंरुचिरेसमे । सुषमातुस्यात्परमशोभायांकालभिद्यपि ॥ ४७५ ॥
❁ ॥ त्रिस्वरमांताः ॥ ❁ ॥ अत्ययोऽतिक्रमेदोषेविनाशेदण्डकृच्छ्रयोः
। अबध्यमबधार्हेस्यादनर्थकवचस्यपि ॥ ४७६ ॥ अभयमुशीरेभीत्योरभ
यातुहरीतकी । अनयोऽशुभदैवेस्याद्विपद्व्यसनयोरपि ॥ ४७७ ॥ अ
श्मीयमश्वनिवहेतथाश्वस्यहितेऽपिच । अव्ययःशब्दभेदेऽपिनिर्व्ययेपर
मेश्वरे ॥ ४७८ ॥ अगस्त्योमुनौद्रुभेदेस्यादधृष्यःप्रगल्भके । अधृष्या
निम्नगाभेदेऽहल्यागौतमयोषिति ॥ ४७९ ॥ सरोभेदेऽप्यभिख्यातुशो
भायांकीर्तिसंज्ञयोः । अहार्योहर्तुमशक्येशैलेऽप्याशयआश्रये ॥ ४८० ॥

हे॰ चं॰ अभिप्रायपनसयोरादित्यस्त्रिदशार्कयोः । आत्रेयोमुनिरात्रेयीपुष्पव
ना॰ ३ त्यांसरिद्भिदि ॥ ४८१ ॥ आतिथ्योतिथौतद्योग्येऽप्याम्नायःकुलआग
मे । उपदेशेचेंद्रियंतुचक्षुरादिषुरेतसि ॥ ४८२ ॥ उदयःपर्वतोत्य
त्योरूर्णायुरविकंबले । ऊर्णानाभेचमेषेचैणेयमेणीत्वगादिके ॥ ४८३ ॥
रतबन्धभिदिस्त्रीणाङ्कषायःसुरभौरसे । रागवस्तुनिनिर्यासेक्रोधादि
षुविलेपने ॥ ४८४ ॥ वर्णौकालेयस्तुदैत्येकालेयंकुंकुमंयकृत् । कुला
यःपक्षिणांस्थानगेहयोःक्षैत्रियास्त्वयः ॥ ४८५ ॥ अन्यदेहचिकित्स्य
ह्रासाध्यरुक्पारदारिकाः । क्षैत्रियंक्षेत्रजतृणेगाङ्गेयंस्वर्णमुस्तयोः
॥ ४८६ ॥ कशेरुण्यथगाङ्गेयोगाङ्गवत्स्कंदभीष्मयोः । चक्षुष्यः
सुभगेपुंडरीकवृक्षेरसांजने ॥ ४८७ ॥ कनकेऽक्षिहितेचापिचक्षु
ष्यातुकुलत्थिका । चांपेयोहेम्निकिंजल्केचंपकेनागकेसरे ॥ ४८८ ॥
जघन्यंशिश्नेगर्ह्येऽन्त्येजटायुर्गुग्गुलौखगे । तपस्यःफाल्गुनेपार्थेतपस्यानि
यमस्थितौ ॥ ४८९ ॥ द्वितीयातिथिगेहिन्योर्द्वितीयःपूरणोदये । ना
देयीजलवानीरेभूजंबूनागरङ्गयोः ॥ ४९० ॥ व्यङ्गुष्ठेचजपायांचनिका
यःसद्मसंघयोः । परमात्मनिलक्षेचप्रणायःप्रेमयाञ्चयोः ॥ ४९१ ॥
विस्रंभेप्रसरेचाऽपिप्रत्ययोज्ञानरंध्रयोः । विश्वासेशपथेहेतावाचार
प्रथितत्वयोः ॥ ४९२ ॥ अधीनेनिम्नयेस्वादोप्रणाय्यःकामवर्जिते ।
असंमतेप्रसव्यस्तुप्रतिकूलानुकूलयोः ॥ ४९३ ॥ प्रतीक्ष्यःप्रतिपाल्ये

स्यात्पूज्येचप्रलयेमृतौ। संहारेनष्टचेष्टत्वेपर्यायोऽवसरेक्रमे॥ ४९४॥ हे॰ चं॰
निर्माणेद्रव्यधर्मेचपर्जन्योगर्जदंबुदे। वासवेमेघशब्देचपयस्यंतुपयोभ ना॰ ३
वे॥ ४९५॥ पयोहितेपयस्यातुकाकोलीदुग्धिकाऽपिच। प्रक्रियातूत्या
दनेस्यादधिकारप्रकारयोः॥ ४९६॥ पानीयंपेयजलयोःपारुष्यस्तुबृ
हस्पतौ। पारुष्यंपरुषभावेसंक्रंदनवनेऽपिच॥ ४९७॥ पौलस्त्यो
रावणेश्रीदेभ्रातृव्योभ्रातृजेरिपौ। भुजिष्यःस्यादवधीनेकिङ्करेहस्तसूत्र
के॥ ४९८॥ भुजिष्यागणिकादास्योर्मलयःपर्वतान्तरे। शैलांशदेश
आरामेमलयात्रिवृदौषधौ॥ ४९९॥ मंगल्योरुचिरेऽश्वत्थेत्रायमाणेम
सूरके। विल्वेमङ्गल्यंतुदध्निमङ्गल्यारोचनाशमी॥ ५००॥ शतपुष्पा
स्पृक्कावचाप्रियंगुःशङ्खपुष्प्यपि। अधःपुष्पामृगंयुस्तुफेरौब्रह्मणिलुब्धके
॥ ५०१॥ रहस्यंगोपनीयेस्याद्रहस्यासरिदन्तरे। लौहित्योऽब्धौनदेव्री
हौब्रह्मण्योब्रह्मणोहिते॥ ५०२॥ शनैश्चरेव्यवायस्तुमैथुनव्यवधा
नयोः। वदान्यःप्रियवागुदारशीलयोरुभयोरपि॥ ५०३॥ वक्तव्यो
वाच्यवद्गृह्येवचोऽर्हहीनयोरपि। वलयःकङ्कणंकंठरुग्वालेयस्तुगर्दभे
॥ ५०४॥ वल्यर्थेकोमलेंगारवह्न्यर्थेविजयोजये। पार्थेविमानेविजयो
मातत्सख्योस्तिथावपि॥ ५०५॥ विषयोयस्ययोज्ञातस्तत्रगोचरदेशयोः।
शब्दादौजनपदेचविस्मयोऽद्भुतदर्पयोः॥ ५०६॥ विनयःशिक्षाप्रणा
त्योर्विनयातुबलौषधौ। विशल्यालांगलीदंतीगुडूचीत्रिपुटासुच॥ ५०७॥

हे॰ चं॰ श्लक्ष्णेनरक्तितायांचप्रियायां लक्ष्मणस्यच । स्वभ्रुर्यौदिवरेष्यालेशांशि
ना॰ ३ ख्यःपावकान्तरे ॥ ५०८ ॥ बिल्वेमुनौचशालेयंशतपुष्पाह्वयौषधे । क्षे
त्रेचशालिधान्यस्यशीर्षण्यंशीर्षरक्षणे ॥ ५०९ ॥ शीर्षण्योविशदेकेशे
शैलेयंशैलसंभवे । सिंधूत्थेतालपर्ण्यांचशैलेयस्तुमधुव्रते ॥ ५१० ॥
समयःशपथेभाषासंपदोःकालसंविदोः । सिद्धान्ताचारसङ्केतनियमा
वसरेषुच ॥ ५११ ॥ क्रियाकारेनिर्देशेचसंस्थायोविरुद्धतोगृहे । सन्नि
वेशेसन्नयस्तुसमवायानुसैन्ययोः ॥ ५१२ ॥ हृदयंवक्षसिस्वांतेवुक्का
या ॥ ❁ ॥ त्रिस्वरयान्ताः ॥ ❁ ॥ ममरःसुरे । स्नुहीवृक्षेस्थिसंहा
रेऽप्यमरत्वमरावती ॥ ५१३ ॥ स्थूणादूर्वागुडूचीचांतरंरंध्रावकाशयोः ।
मध्येविनार्थेतादर्थ्येविशेषेऽवसरेऽवधौ ॥ ५१४ ॥ आत्मीयेन्तःपरिधानान्त
र्द्धिबाह्येष्वथावरं । चरमेऽवरातुगौरीगजजंघान्त्यदेशयोः ॥ ५१५ ॥
अक्षरंस्यादपामार्गेपरमब्रह्मवर्णयोः । गगनेधर्म्मेतपसिारध्वरेमूल
कारणे ॥ ५१६ ॥ अधरेऽनूर्ध्वहीनौष्ठेष्वंबरंव्योमवस्त्रयोः । कार्पासेसु
रभिद्रव्येरदच्छदकपापयोः ॥ ५१७ ॥ अंकुरोरोम्निसलिलेरुधिरेऽभि
नवोद्गमे । अजिरंदर्दुरेकायेविषयेप्राङ्गणेऽनिले ॥ ५१८ ॥ अशिरोऽ
र्केराक्षसेऽग्नावङ्गारेऽलातभौमयोः । अंडीरःशक्तनरयोरसुरःसूर्य
दैत्ययोः ॥ ५१९ ॥ असुरारजनीरस्योरगुरुस्त्वगुरौलघौ । शिंशि
पायामथाहारोहारआहरणेऽशने ॥ ५२० ॥ आसारोवेगवद्वर्षेसुहृद्

लप्रसारयोः। आकारइङ्गिताकृत्योराधारेजलधारणे ॥ ५२१ ॥ आ हि॰चं॰
लवालेऽधिकरणेप्याकरेनिवहेखनौ। इतरःपामरेऽन्यस्मिन्नित्वरःक्रूर ना॰ २
कर्मणि ॥ ५२२ ॥ पथिकेदुर्विधेनीचेस्यादित्वर्यभिसारिका। ईश्वरःस्वा
मिनिशिवेमन्मथेऽपीश्वरद्रिजा ॥ ५२३ ॥ उदरंतुदरणयोरुत्तरंप्र
वणोर्द्ध्वयोः। उदीच्यप्रतिवचसोरुत्तरस्तुविराटजे ॥ ५२४ ॥ उद्धा
रःस्यादृणोद्धृत्योरुदारोदक्षिणोमहान्। दातौवरस्तुभूमावेसर्वस
स्याढ्यभुव्यपि ॥ ५२५ ॥ ऋक्षरंवारिधारायामृक्षरःपुनरृत्वि
जि। एकाग्रोनन्यनाव्यग्रौवौशीरंशयनासने ॥ ५२६ ॥ उशीरजेचा
मरेचदण्डेचक्रकरःखगे। करीरेक्रकचेदीनेकर्बुरंकांचनेजले ॥ ५२७ ॥
कर्बुरोराक्षसेपापेशबलेकंदुरेकुरे। विवरेचगुहायांचकर्करोमुकुरेदृढे
॥ ५२८ ॥ कदरःश्वेतखदिरेक्रकचक्षुद्ररोगयोः। कर्परस्तुकटाहे
स्याच्छस्त्रभेदकपालयोः ॥ ५२९ ॥ कंकरंकुत्सितेतक्रेकडारोदासपि
ङ्गयोः। कंजारःकुञ्जरेसूर्येजठरेद्रुहिणेमुनौ ॥ ५३० ॥ करीरःक
लशेवंशांकुरवृक्षविशेषयोः। कलत्रंश्रोणौभार्यायांदुर्गस्थानेचभूभुजां
॥ ५३१ ॥ कटित्रंतुकटीवस्त्रेरसनाचर्मभेदयोः। कच्छुरःपुंश्चलेपामास
हितेकच्छुरशठी ॥ ५३२ ॥ दुःस्पर्शास्त्रूकशिंबीतुकवरंलवणाम्लयोः
। कवरीकेशविन्यासशाकयोःकंधरोंबुदे ॥ ५३३ ॥ कंधरातुशिरोधौस्या
त्कशेरुःपृष्ठकीकसे। तृणजातौकन्दभेदेकशेरुस्तुगणेरुवत् ॥ ५३४ ॥

हे० चं० नैश्येभीकर्णिकारेषु कटपूरश्च देवने। विद्याधरेऽस्त्रपे हृद्रे कांतारं दुर्गव
ना० २ र्त्मनि ॥ ५३५ ॥ महारण्योपसर्गाद्योः कानने ऽब्जविशेषयोः। काश्मी
रं पौष्करे मूले टंककुङ्कुमयोरपि ॥ ५३६ ॥ कावेरी तु हरिद्रायां वेश्यायां
सरिदंतरे। किर्मीरः शबले दैत्ये किशोरो हयशावके ॥ ५३७ ॥ सू
र्येयून्यथ किशारुर्धान्यशूके शरेऽपि च। कुहरं गह्वरे छिद्रे कुक्कुरं ग्रंथि
पर्णके ॥ ५३८ ॥ कुक्कुरः श्वा कुबेरस्तु धनदे नंदिपादपे। कूर्परौ जानु
कफोणी कुमारोऽश्वानुचारके ॥ ५३९ ॥ युवराजे शिशौ स्कन्दे शुके वरु
णपादपे। कुमारं जात्यकनके कुमारी त्वपराजिता ॥ ५४० ॥ नदीभिद्राम
तरुणी कन्यका नवमाल्युमा। जंबूद्वीपविभागश्च कुटीरं केवले रते ॥ ५४१ ॥
कुञ्जरोऽनेकपे केशे कुञ्जराधातकीद्रुमे। पाटलायां कुठारुर्द्रुकीशयोः कूब
रः पुनः ॥ ५४२ ॥ कुब्जे युगंधरे रम्ये केसरो नागकेसरे। तुरङ्गसिंहयोः
स्कन्धकेशेषु बकुलद्रुमे ॥ ५४३ ॥ पुन्नागवृक्षे किञ्जल्के स्यात्केसरं तु हिं
गुनि। केदारः क्षेत्रभिद्यालवाले शंकरशैलयोः ॥ ५४४ ॥ कैनारः कु
म्भिनरके शिरःकपालसंधिषु। कोटिरः शक्रगोपे स्यान्नकुले पाकशा
सने ॥ ५४५ ॥ कोट्टारो नागरे कूपे पुष्करिण्याश्च पाटके। खर्परस्तस्करे
भिक्षापात्रे धूर्तकपालयोः ॥ ५४६ ॥ खपुरो मस्तके पूगेऽलसके खपुरं घटे
। खर्जूरं रूप्यफलयोः खर्जूरः कीटवृक्षयोः ॥ ५४७ ॥ खंडाभ्रमभ्रा
वयवे स्त्रीणां दंतक्षतान्तरे। खदिरी शाके खदिरो दंतधावनचन्द्रयोः

॥ ५४८ ॥ खिंखिरस्तु शिवाभेदे खट्वाङ्गे वारिबालके । खिंखिरीवद्गु हे०चं०
चिचगह्वरे बिलदंभयोः ॥ ५४९ ॥ गुच्छेऽथ गर्गरो मीनेऽस्याद्गर्गरी तु मंथ ना० ३
नी । गन्धारो राग सिन्दूरस्वरे पुनीवृदं नरे ॥ ५५० ॥ गायत्री खदिरे छं
दो विशेषे गोपुरं पुनः । मुस्तके द्वारि पूर्द्वारि घर्घरस्तु नदान्तरे ॥ ५५१ ॥
चलद्वारि ध्वनौ घूके चदिरश्चंद्रहस्तिनोः । चत्वरं स्यात्पथां श्लेषे स्थंडिलां
गनयोरपि ॥ ५५२ ॥ चंकुरः स्यंदने वृक्षे च तुरंगे न च गोचरे । चटुकारे च
ञ्जगण्डावपि चातुरको यथा ॥ ५५३ ॥ चमरस्त्वामरे दैत्ये चमरी तु मृगान्त
रे । चिकुरोऽहौ गृहबभ्रौ केशे चञ्चलशैलयोः ॥ ५५४ ॥ पक्षिवृक्षभिदो
श्चापि छिद्रिरोऽग्नौ परश्वधे । करवाले च रज्जौ च छिद्रुरो वैरिधूर्तयोः
॥ ५५५ ॥ छिद्रं छेदन द्रव्ये जठरः कुक्षिबद्धयोः । कठिने च जर्ज
रंस्याद्वासवध्वजजीर्णयोः ॥ ५५६ ॥ जंबीरः प्रस्थपुष्पाख्यशाके दंतशठ
द्रुमे । जलेन्द्रो जम्भलेऽम्भोधौ वरुणेऽप्यथ झर्झरः ॥ ५५७ ॥ वाद्य
भाण्डे कलियुगे झल्लरीवत्तु झिल्लरी । वाद्यभेदे केशवक्रोटकारो ज्यारवेऽद्भुते
॥ ५५८ ॥ प्रसिद्धौ चाथ टगरष्टंकणे केकराक्षके । टट्टरीत्वनृताख्या
नेलंपापटहवाद्ययोः ॥ ५५९ ॥ तमिस्रं तिमिरे कोपे तमिस्रा दर्शयामि
नी । तमस्तमिस्त्रितिमिरं तु दृष्टिरोगान्धकारयोः ॥ ५६० ॥ तित्तिरिः पक्षि
शिमुनौ तुषारो हिमदेशयोः । शीकरे हिमभेदे च तुबरी धान्यकंप्युनी
॥ ५६१ ॥ तूबरोऽश्मश्रुपुरुषे प्रौढमप्यङ्गनाडुह्यपि । दद्दरो मूषिकाख्व

है०चं० स्वभावोर्मिभिन्नेतुदंतुरः ॥ ५६२ ॥ उन्नतदन्तेविषमेदर्दुरोभेकमेघयोः
नां० ३ । वाद्यभेदेशैलभेदेदर्दुरंग्रामजालके ॥ ५६३ ॥ दर्दुरोमादर्दरःस्यादी
षद्भग्नेगिरावपि । दाण्डारोवाहनेमत्तवारणेशरयंत्रके ॥ ५६४ ॥ कुम्भ
कारस्यचक्रेचद्वापरंसंशयेयुगे । दासेरउष्ट्रेचेटेचदुर्द्धरस्त्वृषभौषधौ
॥ ५६५ ॥ दुःखधैर्येधूसरस्तुरासभेस्तोकपांडुरे । नरेन्द्रोवार्त्तिकेराज्ञि
विषवैद्येऽथनागरं ॥ ५६६ ॥ शुण्ठीमुस्तकयोरेषुनिर्जरोनिर्जरेसुरे ।
निर्जरातुतालपर्ण्यांगुडूच्यांतत्त्वभिद्यपि ॥ ५६७ ॥ निर्भरोऽर्काश्वेतुषाग्नौ
निःसारःसारसंघयोः । न्यायदातव्यविज्ञेचनिर्वरंतुगतत्रपे ॥ ५६८ ॥ क
ठिनेनिर्भयेसारेनिकारस्तुपराभवे । धान्योत्क्षेपेनीवरस्तुवास्तव्येऽपिविप
ण्यपि ॥ ५६९ ॥ प्रवरंसंततौगोत्रेश्रेष्ठेचप्रखरःपुनः । वेसरेहयसन्ना
हेकुक्कुरेतिभृशंखरे ॥ ५७० ॥ प्रकरःकीर्णपुष्पादौसंहतौप्रकरंपुनः ।
जोङ्गकेप्रकरीत्वर्थप्रकृतौचत्वरवनौ ॥ ५७१ ॥ प्रस्तरःप्रस्तारेग्राव्णि
मणौचप्रदरःशरे । भङ्गेरोगेप्रसरस्तुसङ्गरेप्रणयेजवे ॥ ५७२ ॥ प्र
कारःसदृशेभेदेपंकारोजलकुब्जके । सोपानेशैवलेसेतौपदारःपादधू
लिषु ॥ ५७३ ॥ पादालिन्देपवित्रन्तुमेध्येताम्रेकुशेजले । अर्घोपकर
णेचापिपवित्रातुनदीभिदि ॥ ५७४ ॥ प्रान्तरंकोटरेऽरण्येदूरशून्यप
थेऽपिच । पार्परोभस्मनियमेजराटेनीपकेसरे ॥ ५७५ ॥ क्षयरोगेभ
क्तसिक्थेपामरोनीचमूर्खयोः । पाटीरोमूलकेवङ्गेतितउवार्त्तिकाम्बुदे

॥ ५७६ ॥ केदारे वेणुसारे च पांडुरो वर्णतद्वतोः । पांडुरं तु मरुवके पिण्डा हे॰चं॰
रो भिक्षुके द्रुमे ॥ ५७७ ॥ महिषीपालके क्षेपे पिठरं मंथिमुस्तके । उखा ना॰ ३
यां च पिञ्जरस्तु पीतरक्तेऽश्वभिद्यपि ॥ ५७८ ॥ पिञ्जरं शातकुम्भे स्यात्पी
वरः स्थूलकूर्मयोः । पुष्करं द्वीपतीर्थाहिखगरागौषधांतरे ॥ ५७९ ॥
तूर्यास्येऽसिफले काण्डेऽम्बुगण्डाग्रे खे जलेऽम्बुजे । वठरो बष्कशठयोर्बंधुरो र
म्यनम्रयोः ॥ ५८० ॥ बन्धुरन्तु नतयोर्हंसे बंधुजीवविडङ्गयोः । बन्धुराप
ण्ययोषायां बर्वरो नीवृदन्तरे ॥ ५८१ ॥ बर्वरा तु फंजिकायां पामरे केश
चक्रले । पुष्पे च बर्वरा शाके वर्करः पशुनर्मणोः ॥ ५८२ ॥ बदरा स्यादे
ला पर्ण्यां विष्णुक्रान्तौषधावपि । बदरी कोलिकर्पास्योर्बदरं तु तयोः फले
॥ ५८३ ॥ बदरस्तु कर्पासास्थ्नि भंगुरो वक्रनश्वरे । भ्रामरं मधुदृषदोर्भ्रा
स्करो वह्निसूर्ययोः ॥ ५८४ ॥ भार्यारुरन्यस्त्रीपुत्रोत्पादके मृगशैल
योः । भृंगारी स्याज्झिल्लिकायां भृङ्गारः कनकालुका ॥ ५८५ ॥ मत्सरः
परसंपत्त्यक्षमायां तद्वति क्रुधि । कृपणे मत्सरा तु स्यान्मक्षिका मकरो निधौ
॥ ५८६ ॥ नक्रे राशिविशेषे च मन्दरो मंथपर्वते । स्वर्गे मन्दारयोर्मंदे ब
हले मधुरं विषे ॥ ५८७ ॥ मधुरस्तु प्रिये स्वादौ रसे च रसवत्यपि । म
धुरा मधुरापूर्यां यष्टिमेदा मधूलिषु ॥ ५८८ ॥ मधुकुक्कुटिकायां च मिश्रे
या शतपुष्पयोः । मन्दिरो मकरावासे मन्दिरं नगरे गृहे ॥ ५८९ ॥ म
न्थरः स्यूचके केशे वक्रे मन्दे पृथौ मथि । मन्थरं तु कुसुम्भ्यां स्यान्मन्दारस्त्रि

हे॰चं॰ दृ शद्रुमे ॥ ५९० ॥ पारिभद्रेऽर्कपर्णे च मसूरो मसुरोऽपि च । मसुरा

ना॰ ३ चमसूरा च चत्वारः पर्याया इति ॥ ५९१ ॥ तथाव्रीहि विशेषे च मर्मरो

बसनान्तरे । मुष्कपत्र्यध्वनौ चापि मर्मरी पीतदारुणि ॥ ५९२ ॥ मयू

रः केकि चूडाख्यौषधेऽपामार्गे केकिनोः । महेन्द्रो वासवे शैले मञ्जरीतिलक

द्रुमे ॥ ५९३ ॥ वल्लयां स्थूलमुक्तायां माठरो व्यासविप्रयोः । सूर्यानुगे

ऽथमार्जारः स्यात्खट्टाशविडालयोः ॥ ५९४ ॥ मिहिरोऽर्केऽम्बुदे बुद्धे मुद्ग

रः कोरकास्त्रयोः । लोष्टादिभेदने चापि मुहिरो मूर्खकामयोः ॥ ५९५ ॥

मुदिरः कामुके मेघे मुकुरो मकुरो यथा । कुलालदण्डे च कुले कोरकादर्शयोर

पि ॥ ५९६ ॥ मुर्मुरो मन्मथे सूर्यतुरगे तुषपावके । रुधिरं कुङ्कुमे रक्ते

रुधिरो धरणीसुते ॥ ५९७ ॥ वल्लुरं कुञ्जमञ्जर्योः क्षेत्रेऽनंभसि शाद्वले

। वल्लूरं तु वनक्षेत्रे वाहनोषरयोरपि ॥ ५९८ ॥ मुष्कमांसे कोलमां

से वरत्रा वर्त्तिकक्षयोः । वागरो वारके शाणे निर्णये वाडवे वृके ॥ ५९९ ॥

मुमुक्षौ पण्डिते चापि परित्यक्तभयेऽपि च । वासरो रागभेदेऽह्नि वादरं क्र

मिजे जले ॥ ६०० ॥ कार्पासचित्रा स्त्रीजे स्याद्दक्षिणावर्तशङ्खयोः । वा

सरा वासिता रश्चो भुवि विष्टर आसने ॥ ६०१ ॥ पादपे कुशमुष्टौ च विस्तारो

स्तंबविस्तृती । विदुरो नागरे धीरे धृतराष्ट्रानुजेऽपि च ॥ ६०२ ॥ विकारो

विकृतौ रोगे विहारस्तु जिनालये । लीलायां भ्रमणे स्कन्धे विदारो युधि दार

णे ॥ ६०३ ॥ विदारी रोगभेदे स्याच्छालपर्णी क्षुद्रसह्वयोः । विधुरं स्यात्प्रवि

म्लेच्छेविकलेविधुरापुनः ॥ ६०४ ॥ रसालायांविसरस्तुसमूहेप्रसरेऽपि हे॰ चं॰
च । शबरोम्लेच्छभेदेऽम्बुहरेऽथशबरञ्जले ॥ ६०५ ॥ चित्रेबौद्धव्रतभेदे ना॰ २
शंबरोदानवान्तरे । मत्स्यैणगिरिभेदेषुशंबरीपुनरौषधे ॥ ६०६ ॥ शर्क
राखंडविकृतौकर्परांशोरुगन्तरे । उपलायांशर्करायुग्देशेषुशकलेऽ
पिच ॥ ६०७ ॥ शर्वरीनिशिनार्यांचशक्करीसरिदन्तरे । छन्दोजातौमे
खलायांशारीरस्तुद्विजेवृषे ॥ ६०८ ॥ शार्वरंघातुकेध्वान्तेशावरोरोध्रपा
पयोः । अपराधेशावरीतुमूकशिंब्यांचशाक्करं ॥ ६०९ ॥ छन्दोभिच्छा
क्करस्तुक्षाशालारंपक्षिपञ्जरे । सोपानहस्तिनखयोःशिखरंपुलकाग्र
योः ॥ ६१० ॥ पक्कदाडिमबीजाभमाणिक्यशकलेऽपिच । वृक्षाग्रेपर्व
ताग्रेचशिशिरःशीतलेहिमे ॥ ६११ ॥ ऋतुभेदेशिलींध्रस्तुतरुमीन
प्रभेदयोः । शिलींध्रङ्कदलीपुष्पेकवकच्चिपुटाख्ययोः ॥ ६१२ ॥ शि
लींध्रीविहगीगण्डूपदीमृदथशीकरः । वातास्तजलेऽम्बुकणेऽम्बुषिरंवा
द्यगर्त्तयोः ॥ ६१३ ॥ सुषिरोऽग्नौसरंध्रेचसृंगाराऽजमण्डने । सुरते
रसभेदेचसृङ्गारंनागसंभवे ॥ ६१४ ॥ चूर्णेलवंगपुष्पेचसंस्तरःप्रस्तरे
ऽध्वरे । सङ्गरोऽङ्गीकृतेयुद्धेक्रियाकारेविषापदोः ॥ ६१५ ॥ सङ्गरंतुफ
लेशम्यांसंभारःसंभृतौगणे । संस्कारःप्रतियत्नेतुभवेमानसकर्मणि
॥ ६१६ ॥ गुणभेदेऽथसंकारोऽवकरेऽग्निचटत्कृतौ । संकारीभुक्तकन्या
यांसामुद्रंलवणान्तरे ॥ ६१७ ॥ लक्षणेचशरीरस्यसाविन्नस्तुमहेश्वरः ।

 सावित्रीदेवताभेदे सिन्दूरं नागसंभवे ॥ ६१८ ॥ सिंदूरस्तु वृक्षभेदे सि
 न्दूरी रक्तचेलिका । रोचनाधातकीसुंदर्यङ्गनायां द्रुमान्तरे ॥ ६१९ ॥
सुनारस्तु शुनीस्तन्ये सर्पाण्डे चटकेऽपि च । सैरिंध्री परवेश्मस्था शिल्पकृत्
स्ववशस्त्रियां ॥ ६२० ॥ वर्णसङ्करसंभूतस्त्रीमहल्लिकयोरपि । सौवी
रं कांजिकास्रोतोंजनयोर्बदरीफले ॥ ६२१ ॥ ❁ ॥ त्रिस्वरलान्ताः ॥
❁ ॥ स्यादर्गलं तु कल्लोले परिघे प्यनलोऽनिले । वसुदेवे वसौ बह्मा व
रालः समदद्विपे ॥ ६२२ ॥ वक्रे सर्जरसे चाथाविलस्तु स्यादपह्नवे । अ
वेला तु पूगचूर्णेऽचलस्तु गिरिकीलयोः ॥ ६२३ ॥ अचला भुव्यञ्जलिस्तु
कुडवे करसंपुटे । अंगुलिः करशाखायां कर्णिकायां गजस्य च ॥ ६२४ ॥
आभीलं भीषणे कृच्छ्रेऽपील्वलो मत्स्यदैत्ययोः । इल्वलास्तारकाभेदेऽप्युप
लो ग्रावरत्नयोः ॥ ६२५ ॥ उपला तु शर्करायामुत्पलं कुष्ठभूरुहे । इंदीव
रे मांसशून्येऽप्युज्वलस्तु विकासिनि ॥ ६२६ ॥ शृंगारे विशदे दीप्तेऽप्युज्ज्व
लस्त्वरितेकपौ । श्रेष्ठोत्कटकराले घूत्फुल्लः स्त्रीकरणांतरे ॥ ६२७ ॥
विकस्वरे त्वालयोस्तु कमलं क्लोम्नि भेषजे । पङ्कजे सलिले ताम्रे कमलस्तु
मृगान्तरे ॥ ६२८ ॥ कमला श्रीवरनार्योः कपिलो वह्निपिङ्गयोः । कुक्कु
रे मुनिभेदे च कपिला शिंशिपान्तरे ॥ ६२९ ॥ पुंडरीककरिण्यां च रेणुकागो
विशेषयोः । कपालं कुष्ठरुग्भेदघटादिशकलेगणे ॥ ६३० ॥ शिरोस्थि कि
कन्दलं तु नवांकुरे करध्वनौ । उपरागे मृगभेदे कलापे कंदलीद्रुमे ॥ ६३१ ॥ क

वलोरौद्रतुङ्गोरुधूर्णानैलेपुदंतुरे। करालंतुकुठारेस्यात्कंबलःक्रिमिसास्नयोः ॥ ६३२॥ नागप्रभेदेप्रावारेवैकक्ष्येकंबलंजले। कल्लोलादैाहर्षवीच्योः कदलीहरिणांतरे ॥ ६३३॥ रंभायांवैजयंत्यांचकामलःकामिरोगयोः। मरुदेशेऽवतंसेचकाकोलोमौकुलौविषे॥ ६३४॥ कुलालेकाहलंतुभृशे खलेचाव्यक्तवाचिच। शुष्केचवाद्यभेदेचकाहलीतरुणास्त्रियां ॥ ६३५॥ किट्टालस्तुलोहगूथेताम्रस्यकलशेऽपिच। कीलालंरुधिरेतोयेकुशलं क्षेमपुण्ययोः ॥ ६३६॥ पर्याप्तौकुशलोविज्ञेकुवलंकदलीफले। मुक्ताफलोत्पलयोस्तुकुंभिलश्चौरशालयोः ॥ ६३७॥ स्त्रीकच्छायाहरेश्याले कुद्दालोभूमिदारणे। युगपार्श्वेऽथकुटिलंभंगुरेकुटिलानदी॥ ६३८॥ कुण्डलंवलयेपाशेनाटंकेकुण्डलीपुनः। काञ्चनद्रौगुडूच्यांचकुन्तलोहल केशयोः ॥ ६३९॥ कुन्तलाःस्युर्जनपदेकुकूलंतुतुषानले। शंकुसंयुक्तगर्त्तेचकुलालोघूकपक्षिणि ॥ ६४०॥ कुकुभेकुम्भकारेचकुचेलःस्यात्कुवाससि। कुचेलात्वविकर्ण्यांचकेवलंत्वेककृत्स्नयोः ॥ ६४१॥ निर्णीतेकुहनेज्ञानेकेवलीग्रंथभिद्यपि। कोमलंमृदुलेतोयेकोहलोमुनिमद्ययोः ॥ ६४२॥ ग्रंथिलोग्रंथिसहितेविकंकतकरीरयोः। गरलंपन्नगविषेतृणपूलकमानयोः ॥ ६४३॥ गन्धोलीवरटाशुंठ्योर्भद्रायामथगोकिलः। मुसलेलाङ्गलेचापिगोपालोगोपभूपयोः ॥ ६४४॥ स्याद्गौरिल स्तुसिद्धार्थेलोहचूर्णेऽथचण्डिलः। नापितेवास्तुकेरुद्रे चंचलोऽनिलका

हे० च० मिनोः ॥ ६४५ ॥ चंचला तु तडिल्लक्ष्म्योश्चपलश्चारके ऽचले । शशिके
का० २ चिकुरे शीघ्रे पारदे प्रस्तरान्तरे ॥ ६४६ ॥ मीने च चंचला तु स्यात्पिप्पल्यां वि
द्युति श्रियां । पुंस्त्वल्या मथ चत्वालो यज्ञकुण्डलगर्भयोः ॥ ६४७ ॥ चूडा
लश्चूडया युक्ते चूडाल्यपि च चक्रला । छगलश्छागे छगली वृद्धदारकभे
षजे ॥ ६४८ ॥ छगलं तु नीलवस्त्रे जगलो मदनद्रुमे । मेदके कितवे
पिष्टमद्ये ऽथ जटिलो जटी ॥ ६४९ ॥ जटिला तु मांसिकायां जंबूलः क्रक
चच्छदे । जंबूद्रुमे ऽथ जंबालं कर्दमे शैवले ऽपि च ॥ ६५० ॥ जंभलो निर्जने
देशे पिशिते ऽप्यथ जंभलः । जंबीरे देवताभेदे जांगलः स्यात्कपिञ्जले
॥ ६५१ ॥ जाङ्गली तु शूकशिंब्यां जांगुलं जालिनीफले । जांगुली विष
विद्यायां तरलो भास्वरे ऽचले ॥ ६५२ ॥ हारमध्यमणौ षिङ्गे तरला म
धुमक्षिका । तमालो वरुणे पुंड्रे ऽसौ तापिच्छे ऽथ तंडुलः ॥ ६५३ ॥ विड
ङ्गे धान्यसारे च तांबूलं क्रमुकीफले । तांबूली नागवल्ल्यां स्यात्तुमुलं रणसंकुले
॥ ६५४ ॥ तुमुलो विभीतकद्रौ नैतिलं करणान्तरे । नैतिलो गंडकपशौ दु
कूलं सूक्ष्मवाससि ॥ ६५५ ॥ क्षौमवस्त्रे ऽथ धवलो महोक्षे सुंदरे सिते ।
धवली गौर्नकुलस्तु पाण्डवप्राणिभेदयोः ॥ ६५६ ॥ नकुली कुंकुममांस्यो
र्नाभीलं तून्नमस्त्रियाः । वंक्षणे नाभिगंभीर्ये नाकुली चव्यरास्नयोः ॥ ६५७ ॥
कुक्कुटीकन्दे निचुलस्त्विज्जलद्रौ निचोलके । निस्तलं तु तले वृत्ते निर्मलं
विमले ऽभ्रके ॥ ६५८ ॥ निर्माल्ये च निष्कलस्तु नष्टबीजे कलोज्झिते ।

नैपालीमनःशिलास्यात्सुवाहानवमास्यपि ॥ ६५९ ॥ प्रवालोविद्रुमे हे०चं०
वीणादण्डेऽभिनवपल्लवे । प्रतलःपातालभेदेततांगुलिकरेऽपिच ॥ ६६० ॥ ना० ३
पटलन्तिलकेनेत्ररोगेछदिषिसञ्चये । पिटकेपरिवारेचपञ्चालानीवृद
न्तरे ॥ ६६१ ॥ पञ्चालीपुत्रिकागीत्योःपललंपङ्कमांसयोः । तिलचूर्णे
पललस्तुराक्षसेपाचलोऽनिले ॥ ६६२ ॥ अनलेराधनद्रव्येपाकलोद्वि
रदज्वरे । पाकलंकुष्ठभेषज्येपातालंवडवानले ॥ ६६३ ॥ रसातले
पाटलन्तुकुङ्कुमश्वेतरक्तयोः । पाटलःस्यादाशुव्रीहौपाटलापाटलिद्रु
मे ॥ ६६४ ॥ पांशुलोहरखट्वाङ्गेपुंश्चलेपांशुलाभुवि । पातिलीमृत्तिका
पात्रेनारीवागुरयोरपि ॥ ६६५ ॥ पिप्पलंसलिलेवस्त्रच्छेदभेदेऽथपिप्प
लः । निरंशुलेवृक्षपक्षिभेदयोःपिप्पलीकणा ॥ ६६६ ॥ पिंगलःक
पिलेवह्नौरुद्रेऽर्कपरिपार्श्वके । कपौमुनौनिधिभेदेपिङ्गलाकुमुदस्त्रियां
॥ ६६७ ॥ कर्णिकायांवेश्यायांचनाडीभेदेऽथपित्तलं । पित्तवत्यारकूटेच
पित्तलातोयपिप्पली ॥ ६६८ ॥ पिचुलोनिचुलेतोयवायसेझाबुकद्रुमे ।
पिञ्जलंस्यात्कुशपत्रेहरिद्राभेऽथपिच्छिलः ॥ ६६९ ॥ विज्जलेपिच्छि
लापोतकिकायांसरिदन्तरे । शाल्मलौशिंशिपायांचपिण्डिलोगणनापटौ
॥ ६७० ॥ स्थूलजङ्घेपुष्कलस्तुपूर्णश्रेष्ठेऽथपुद्गलः । कायेरूपादिमद्द्र
व्येस्तुंदसकारआत्मनि ॥ ६७१ ॥ पेशलःकुशलेरम्येफेनिलोरिष्टपा
दपे । फेनिलंमदनफलेवदरेफेनवत्यपि ॥ ६७२ ॥ बकुलंभूरिवि

हे० चं० यतोर्बकुलः पावकेसितौ । कृष्णपक्षेबकुलातुसुरभ्यांनीलिकेलयोः
ना० ३ ॥ ६७३ ॥ बारलाबरलाचापिगन्धालीहंसयोषितोः । बाहुलंदुर्हिनेमस्यां
मण्डलंदेशबिम्बयोः ॥ ६७४ ॥ भुजङ्गभेदेपरिधौस्युनिद्वादशराजके ।
सङ्घातेकुष्ठभेदेचमञ्जुलंसुन्दरेऽपिच ॥ ६७५ ॥ रम्येकुञ्जेमञ्जुलस्तुदा
त्यूहेमङ्गलंपुंनः । कल्याणेमङ्गलोभौमेमङ्गलाश्वेतदूर्विका ॥ ६७६ ॥ म
ल्लिलानायांगुन्द्रायांमातुलोमदनद्रुमे । धत्तूरेऽहिव्रीहिभिदोःपितुःश्या
लेऽर्थमाचलः ॥ ६७७ ॥ वह्निचौरेरुजिग्राहेमुसलंस्यादयोग्रके । मु
सलीतालमूल्यांखुकर्णिकागृहगोधिका ॥ ६७८ ॥ मेखलाऽद्रिनितम्बेस्या
द्रशनाखड्गबन्धयोः । रसालइक्षौचूतेचरसालम्बोलसिह्लयोः ॥ ६७९ ॥
रसालादूर्वाविदार्योर्मुविकाजिह्वयोरपि । रमिलोरमणेकामेलांगूलंशि
श्नपुच्छयोः ॥ ६८० ॥ लाङ्गलन्तालहलयोःपुष्पभिद्गृहदारुणोः ।
लाङ्गलीजलपिप्पल्यांलोहलोऽस्फुटवादिनि ॥ ६८१ ॥ शृङ्खलाधार्ये
वंजुलस्त्वशोकेतिनिशद्रुमे । वानीरेचाथवराटलःशूरसुन्नौखनित्रयोः
॥ ६८२ ॥ वातूलोवातलेवातसमूहेमारुतान्हते । वामिलोदांभिकेवामेवि
पुलःपृथ्वगाधयोः ॥ ६८३ ॥ विपुलार्याभिदिक्षोण्यांविमलोऽर्हत्तिनि
र्मले । वृषलस्तुरगेशूद्रेशकलंशकवस्तुनि ॥ ६८४ ॥ वल्कलेत्वचिखं
डेचशंबलंमत्सरेतटे । पाथेयेचशयालुस्तुनिद्रालौवाहसेश्युनि ॥ ६८५ ॥
श्यामलःपिप्पलेश्यामेशार्दूलोराक्षसान्तरे । व्याघ्रेचपशुभेदेचसत्तमेनू

मरुस्थितः ॥ ६८६ ॥ शाल्मलिः पादपे द्वीपे शीतलः शिशिरेऽर्हति । छं० ६०
श्रीखण्डे पुष्पकाशीशतालपर्ण्याः शिलोद्भवे ॥ ६८७ ॥ शृगालो दान ना० ३
वे फेरौ शृगाली स्यादुपप्लवे । शृङ्खलं पुंस्कटीकाञ्च्यां लोहरज्जौ च बन्धने
॥ ६८८ ॥ शौष्कलः शुष्कमांसस्य पणिके पिशिताशिनि । षण्डाली
स्मरसीतैलमानयोः कामुकस्त्रियां ॥ ६८९ ॥ संकुलोऽस्पष्टवचने व्या
प्ते च सरलस्त्वृजौ । उदारे पूतिकाष्ठे च सप्तला नवमालिका ॥ ६९० ॥
सातलापाटलागुञ्जासन्धिलौकः सुरङ्गयोः । नद्यां सिध्मलः किलासी सि
ध्मला मत्स्यचूर्णके ॥ ६९१ ॥ सुतलोऽट्टालिकाबन्धे पातालभुवनान्तरे ।
सुवेलः प्रणते शान्ते गिरिभेदेऽथ हेमलः ॥ ६९२ ॥ कलादे सरटे ग्राव
भिद्य ॥ ❁ ॥ त्रिस्वरलान्ताः ॥ ❁ ॥ भावः पुनर्मृतौ । असन्नायामथा
क्षीवं वशिरेमदवर्जिते ॥ ६९३ ॥ आहवः समरे यज्ञेप्याम्नवो वचनस्थि
ते । प्रतिज्ञायां च क्लेशे च स्यादार्णवमृतूद्भवे ॥ ६९४ ॥ नारीरजसि पु
ष्पे चोद्भवः केशवमातुले । उत्सवे क्रतुवह्नौ चोत्सवोऽमर्षमहेऽपि च
॥ ६९५ ॥ इच्छाप्रसर उत्सेके कारवी कृष्णजीरके । दीप्ये मधुरान्त्व
क्पत्र्योः कितवः कनकाह्वये ॥ ६९६ ॥ मत्ते च वंचके चापि केशवः केश
संयुते । पुन्नागे वासुदेवे च कैतवं द्यूतदंभयोः ॥ ६९७ ॥ कैरवः कितवे
शत्रौ कैरवं सितपंकजे । कैरवी तु चंद्रिकायां गन्धर्वस्तु नभश्चरे ॥ ६९८ ॥
पुंस्कोकिले गायने च मृगभेदे तुरङ्गमे । अन्तराभवदेहे च गालवो मुनिलो

ध्रु०चं० ध्रुयोः ॥ ६९९ ॥ गाण्डीवगाण्डिवौचापमात्रेपार्थधनुष्यपि । गाण्ड

ना० ३ वंतृणभिन्नस्त्यभेदयोस्त्रिदिवंनुखे ॥ ७०० ॥ स्वर्गेचत्रिदिवानद्यांचि

जिह्वःखलसर्पयोः । निह्नवःस्यादविश्वासेऽपलापेनिकृतावपि ॥ ७०१ ॥

निष्पावःपवनेशूर्पपवनेनिर्विकल्पके । बालेकडङ्गकेशिम्व्यांप्रभवोजन्म

कारणे ॥ ७०२ ॥ आद्योपलब्धस्थानेऽपांमूलेमुनिभिद्यपि । प्रसवः

पुष्पफलयोरपत्येगर्भमोचने ॥ ७०३ ॥ उत्पादेचप्रसेवस्तुवीणांगस्यू

तयोर्दृतौ । प्रभावस्तेजसिशक्तौपल्लवःकिशलेवले ॥ ७०४ ॥ विट

पेविस्तरेऽलक्तरागेशृङ्गारषिङ्गयोः । पक्ष्वत्त्वंभावेपंचानांप्राणानामत्य

येऽपिच ॥ ७०५ ॥ पार्थिवोन्टपतौभूमिविकारेपार्थिवीतुमा । पुंगवोग

विभेषज्येप्रधानेचोत्तरःस्थितः ॥ ७०६ ॥ फेरवोराक्षसेफेरौबान्धवोबंधु

मित्रयोः । भार्गवःपरशुरामेशुधन्वनिमतङ्गजे ॥ ७०७ ॥ दैत्यगुरौ

भार्गवीतुक्षद्दूर्बामयोःश्रियां । भैरवोभीषणेरुद्रेरागभेदेऽथमाधवः

॥ ७०८ ॥ विष्णौवसन्तेवैशाखेमाधवीमधुशर्करा । वासंतीकुट्टनीहा

लायवोऽक्षिमध्यंतरे ॥ ७०९ ॥ मधुजेऽप्यथराजीवोमीनसारंगभेद

योः । राजीवमब्जेरौरवोभीषणेनरकांतरे ॥ ७१० ॥ वल्लवःस्यात्सूप

कारेगोदोग्धरिवृकोदरे । वडवाश्वायांस्त्रीभेदेकुम्भदास्यांद्विजस्त्रियां

॥ ७११ ॥ वाडवंकरणेस्त्रीणांवडवौघेरसातले । वाडवोविप्रअग्नौचवि

द्रुवोधीःपलायनं ॥ ७१२ ॥ विभावःस्यात्परिचयेरत्यादीनांचकार

णे। विभवोधननिर्वृत्योः शाखवंशस्तु संचये ॥ ७१३ ॥ शम्बुस्त्वेशाखवः हे०वं०
शाखैसंभवः कारणे जनौ। आधेयस्याधारानतिरिक्तत्वे जिनेऽपि च ना० ३
॥ ७१४ ॥ सचिवः सहायेऽमात्येस्तुषवीकृष्णजीरके। जीरके कारवे
ल्लेच सैन्धवः सिंधुदेशजे ॥ ७१५ ॥ सिन्धूत्थे स्यादा ॥ ❁ ॥ चिस्लर
बान्ताः ॥ ❁ ॥ दर्शस्तु टीकायां प्रतिपुस्तके। दर्पणे चाप्यथोडुीशःचराडी
शेशास्त्रभिद्यपि ॥ ७१६ ॥ उपांशुर्जापभेदेस्यादुपांशुविजनेऽव्ययम्।
कर्कशो निर्दयेक्रूरे कंपिल्लकक्रूणशायोः ॥ ७१७ ॥ इक्षौसाहसिके
कासमर्दकेपरुषेदृढे । कापिशोसिह्लकवशैकापिशामाधुरीसुरा
॥ ७१८ ॥ कीनाशःक्षुद्रयमयोःकर्षकःपशुघातिनोः । कुलिशो
मत्स्यभित्पव्योर्गिरीशोवाक्पतौहरे ॥ ७१९ ॥ अद्रिराजेऽथनृङ्गीशःश
शाङ्केशशिशेखरे। निस्त्रिंशोनिर्घृणेखङ्गेनिर्देशःकथनाज्ञयोः ॥ ७२० ॥
निर्वेशउपभोगेस्यान्मूर्छनेवेतनेऽपिच । निवेशःसैन्यविन्यासेशिविरो
द्वाहयोरपि ॥ ७२१ ॥ निदेशःस्यादुपकण्ठेशासनेपरिभाषणे । नीका
शोनिश्चयेतुल्येप्रकाशःस्फटहासयोः ॥ ७२२ ॥ उद्योतेचप्रसिद्धेच
प्रदेशोदेशमात्रके । भित्तौमानविशेषेचपलाशःकिंशुकेऽसपे ॥ ७२३ ॥
हरितेपलाशपत्रेशासनेपरिभाषणे । पिङ्गाशोमत्स्यपल्लीशेपिङ्गा
शीस्यात्तुनालिका ॥ ७२४ ॥ बालिशस्तुशिशौमूर्खेभूवेशःशीवलेवटे।
लोमशोलोमयुक्तेऽवौलोमशाशाकिनीभिदि ॥ ७२५ ॥ महामिटाकाक

हे०चं० अंचाम्मृगालीजटिलास्तुष । काशीशेऽतिबलाम्मूकशिंबीमर्कटिकास्तुच
ना० ३ ॥ ७२६ ॥ विवशः स्यादवश्यात्मारिष्टदुष्टमतिस्त्वयः । विकाशोरह
सि व्यक्तेसंकाशः सदृशेऽन्तिके ॥ ७२७ ॥ संवेशः शयनेपीठेस्तुखा
शस्तुप्रचेतसि । सुभाशोराजनिनिशो हताशो निष्कृपेखले ॥ ७२८ ॥
अध्यक्षोऽधिकृतेत्वक्षे ॥ ❁ ॥ चित्स्वरशान्ताः ॥ ❁ ॥ ऽभीषुः प्रग्र
हरोचिषोः । आरक्षो रक्षकेहस्तिकुम्भाधस्थामिषंपले ॥ ७२९ ॥ स्तु
न्द्रशकाररूपादौ सम्भोगेलोभसंचये । आकर्षः पाशकेधन्वाभ्यासाङ्गे द्यू
तइंद्रिये ॥ ७३० ॥ आकृष्टौशारिफलकेऽप्युष्णीषं लक्षणांतरे ।
शिरोवेष्टेकिरीटे च कलुषंत्वाविलांहसोः ॥ ७३१ ॥ कल्माषोराक्षसेकृ
ष्णेशबलेऽप्यथकिल्बिषं । पापेरोगेऽपराधे च कुल्माषंस्यात्तुकाञ्जिके
॥ ७३२ ॥ कुल्माषोऽर्द्धस्विन्नधान्येगवाक्षोजालकेकपौ । गवाक्षीत्वि
न्द्रवारुण्यांगण्डूषोमुखपूरणे ॥ ७३३ ॥ गजास्येचकरंगुल्यांप्रसृत्यांप्र
मितेऽपि च । गोरक्षौगोपनारंगौ जिगीषातुजयस्पृहा ॥ ७३४ ॥ व्य
वसायेप्रकर्षस्तुतरीषः शोभनाकृतौ । भेलेऽब्धौव्यवसायेचताविषोऽब्धिस्तु
वर्णयोः ॥ ७३५ ॥ स्वर्गेचनऋषोराजविशेषेनागभिद्यपि । निकषः
शाणफलकेनिकषायातुमातरि ॥ ७३६ ॥ निमेषनिमिषौनेत्रमीलने
कालभिद्यपि । प्रत्यूषः स्याद्वसौप्रातः प्रदोषः कालदोषयोः ॥ ७३७ ॥
परुषंकर्बुरेरूक्षेस्यान्निष्ठुरवचस्यपि । पीयूषअमृतेनव्यसूतधेनो॥

पयस्यपि ॥ ७३८ ॥ पुरुषः स्यात्मनि नरे पुन्नागे चाथ पौरुषं । ऊर्द्ध्वे हे० च०
विस्तृतदोः पाणिपुरुषोन्मानतेजसोः ॥ ७३९ ॥ पुंसः कर्म्मणि भावे च ना० ३
महिषीन्दपर्य्योषिति । सैरिभ्यामौषधीभेदे मारिषस्त्वार्यशाकयोः
॥ ७४० ॥ मारिषाद्दक्षजननीमृगाक्षीमृगलोचना । स्त्रियामिन्द्रवा
रुणीचरक्ताक्षोरक्तलोचने ॥ ७४१ ॥ चकोरेमहिषेक्रूरे पारावतेऽथ रो
हिषः । मृगकत्तृणमत्स्येषु विश्लेषस्तु वियोजने ॥ ७४२ ॥ विधुरे चाथ
शुश्रूषोपासनाश्रवणेच्छयोः । शैलूषः स्यान्नटे बिल्वे संहर्षः पवने मुदि
॥ ७४३ ॥ स्पर्द्धायां च समीक्षा तु ग्रन्थभेदे समीक्षणे ।॥ ❁ ॥ चि
स्वरषान्ताः ॥ ❁ ॥ अलसः स्याद्द्रुमभेदे पादरोगे क्रियाजडे ॥ ७४४ ॥
अलसा तु हंसपद्यां नगौकोवदगौकसः । विहङ्गसिंहशरभा आश्वा
सः स्यात्तु निर्वृतौ ॥ ७४५ ॥ आख्यायिकापरिच्छदे पीडासो धन्वधन्वि
नोः । उच्छ्वासः प्राणने श्वासे गद्यपद्यान्तरेऽपि च ॥ ७४६ ॥ उत्तंसः शे
खरे कर्णपूरे चापि वतंसवत् । उदर्चिहत्वभेऽग्नौ च कनीयाननुजेऽल्पके
॥ ७४७ ॥ अनियूनिकीकसस्तु क्रिमौ कीकसकास्थिनि । तामसः सर्पख
लयोस्तामसी स्यान्निशामयोः ॥ ७४८ ॥ त्रिस्रोता जाह्नवी सिंधुभिदोर
थ दिवौकसौ । चातकस्त्रिदशस्त्रापि दीर्घायुर्जीवके द्विके ॥ ७४९ ॥
मार्कण्डेये शाल्मलिनरौ नभसस्तु नदीपतौ । गगने त्वृतुभेदे च पनसः
कपिरुग्भिदोः ॥ ७५० ॥ कण्टके कण्टकिफले प्रचेता वरुणे मुनौ ।

हे० च० हृष्टे पायसः पायसं श्रीवासपरमान्नयोः ॥ ७५१ ॥ बीभत्सो विकृते क्रूरे
ना० ३ रसे पार्थे घृणात्मनि । बुक्कसी नीलिकाकाल्योर्बुक्कसः श्वपचेऽधमे ॥ ७५२ ॥
मानसं स्वान्तसरसो रभसो वेगहर्षयोः । राक्षसी कौणपीदंष्ट्रा रोदइव
नुरोदसी ॥ ७५३ ॥ दिविभुव्युभयोश्चापि लालसो लौल्ययाच्ञयोः । तृ-
ष्णाऽतिरेक औत्सुक्येऽवरीयान् श्रेष्ठयोगयोः ॥ ७५४ ॥ अतियून्यतिवि-
स्तारे वायसस्त्वगुरौ ध्विके । श्रीवासे वायसी काकोदुम्बरीकाकमाच्यपि
॥ ७५५ ॥ वाहसोऽजगरे वारिनिर्याणे सुनिषण्णयोः । विलासो हावे
लीलायां विहायो व्योमपक्षिणोः ॥ ७५६ ॥ श्रीवासः स्याद्वृकधूपे कमले म-
धुसूदने । श्रेयसी गजपिप्पल्यामभयाराम्नयोरपि ॥ ७५७ ॥ समा-
सः समर्थनायां स्यात्संक्षेपैकपद्ययोः । सप्तार्चिः क्रूरनेत्रेऽग्नौ साधीयानत्य-
तिशोभने ॥ ७५८ ॥ अतिबाढे साहसं तु दमे दुष्कृतकर्मणि । अवि-
मृष्यकृतौ द्विष्ये सारसं सरसीरुहि ॥ ७५९ ॥ सारसः पुष्कराख्येन्दोः सु-
मनाः प्राज्ञदेवयोः । जात्यां पुष्पे सुमेधास्तु ज्योतिष्मत्यां विदुष्यपि
॥ ७६० ॥ सुरसः स्याद्दौपर्णासे ॥ ❀ ॥ त्रिस्वरसान्ताः ॥ ❀ ॥ च-
म्बूहम्भिन्नमेखले । अन्यूह्यातु नीलिकायामाग्रहोऽनुग्रहे ग्रहे ॥ ७६१ ॥
असङ्गाक्रमणयोश्चाप्यारोहो दैर्घ्य उच्छ्रये । आरोहणो गजारोहे स्त्रीक-
ट्यां मानभिद्यपि ॥ ७६२ ॥ कलहो भण्डने खड्गकोशे समरराढयोः ।
कटाहः स्यात्कूर्मपृष्ठे कर्परे महिषीशिशौ ॥ ७६३ ॥ तैलादिपाकपात्रे तु

दात्यूहः कालकण्ठके । चातकेऽपि नवाहस्त्वाद्यतिथौ नववासरे हे०चं०
॥ ७६४ ॥ निर्व्यूहो द्वारि निर्यासे शेखरे नागदन्तके । निरूहो निग्र ना० ३
हे तर्के वस्तिभेदेऽथ निग्रहः ॥ ७६५ ॥ बन्धके भर्त्सने सीम्नि प्रग्रहः किर
णे भुजे । तुलासूत्रेऽश्वादिरश्मौ सुवर्णे हलिपादपे ॥ ७६६ ॥ बन्धने
बन्द्यां प्रवाहो व्यवहारेऽम्बुवेगयोः । प्रवहो वायुभेदे स्याद्वायुमात्रे बहिर्गतौ
॥ ७६७ ॥ प्रग्राहः स्यात्तुलासूत्रे वृषादीनाञ्च बन्धने । पटहो वाद्य आ
रम्भे वाराहो नागके किरौ ॥ ७६८ ॥ मेघे मुस्ते गिरौ विष्णौ वाराही गृष्टिभेव
जे । मातर्यपि विदेहस्तु निर्देहे मैथिलेऽपि च ॥ ७६९ ॥ विग्रहो वृष
दुद्धारे ग्राहसंक्षेपयोरपि । सुवहस्तु सम्यग्वहे सुवहा शल्लकीद्रुमे
॥ ७७० ॥ रास्नाशेफालिकागोधापद्मोलापर्णिकासु च ।

इत्याचार्य्यहेमचन्द्रविरचितेऽनेकार्थे
संग्रहे त्रिस्वरनामसंग्रहकाण्डस्तृतीयः

अंगारकस्तूल्मुके भौमे महीपुत्रे कुरण्टके । अंगारिका त्विक्षुकाण्डे किंशुक ना० ४
स्य च कोरके ॥ १ ॥ अलिपकः पिके भृङ्गेऽलिंपकः पद्मकेसरे । मधूके कोकिले
भकेऽश्मन्तको मल्लिकाकंदि ॥ २ ॥ चुल्ल्याश्चाक्षेपको व्याधे निन्दके वातरुज्य
पि । आकल्पकस्तमो मोहग्रंथावुत्कलिकामुदोः ॥ ३ ॥ आखनिकस्त्वा
खुरि वकिरवुन्दुरुचौरयोः । उत्कलिकातुत्कलायां तरङ्गोत्कण्ठयोरपि

से०च० ॥ ४॥ एडमूकोऽनेडमूकस्तु निर्वाग्घीश्रुतिके शठे । कठिल्लकस्तु वर्षा
भा० ४ भ्वाम्रपर्णासेकारवेल्लके ॥ ५॥ कर्कोटकोऽहौ बिल्वे च कनीनिकाक्षितारका
। स्यात्कनिष्ठांगुलिरपि काकरूको दिगम्बरे ॥ ६॥ उलूके स्त्रीजिते दंभे भी
रुके निर्धनेऽपि च । कुरवकः शोणाम्लाने रुणापीना च गंठिका ॥ ७॥
कृकवाकुस्ताम्रचूडे मयूरे कृकलासयोः । कोशातकः कटे कोशातकी ज्यो
त्स्नापटोलिका ॥ ८ ॥ घोषकेऽथ कौलेयकः सारमेयकुलीनयोः ।
कोक्कुटिको दांभिके स्यात् दूरेरितलोचने ॥ ९॥ गुणानिका नृत्यशून्याङ्के नर्त
नेपाठनिश्चये । गोमेदकः पीतरत्ने काकोले पत्रकेऽपि च ॥ १०॥ गोकंट
को गोक्षुरके गोखुरैः स्थपुटीकृते । गोकुलिकः केकरे स्यात्पंकस्थगव्युपेक्ष
के ॥ ११॥ घर्घरिका भृष्टधान्ये किङ्किण्यां सरिदंतरे । वादित्रस्य च द
ण्डेऽपि चण्डालिकौषधीभिदि ॥ १२॥ कंदरायामुमायां च जर्जरीकं जरन्न
रे । बहुच्छिद्रेऽप्यथ जैवातृकः स्याद्रजनीकरे ॥ १३॥ कृशायुष्मद्भेषजे
षु तन्त्रीरीकं वह्निवके । पारगे च विवर्णकस्तु गोक्षुरेऽथ चिवर्णकं ॥ १४॥
सूपर्णं चिफलातिक्तशाकस्तु पत्तूरे । वरुणे खदिरे दद्रुघ्नमूकस्तु
फणिरक्षसोः ॥ १५॥ दलाढकोऽरण्यतिले गैरके नागकेसरे । कुन्देम
हन्नरे फेने करिकर्णशिरीषयोः ॥ १६॥ वात्यायां खातके पृश्न्यां नियाम
को नियंतरि । पोतवाहे कर्णधारे निश्चारकः समीरणे ॥ १७॥ पुरीष
स्य स्रावे स्वैरे प्रचलाको भुजङ्गमे । शरघाते शिखण्डे च प्रकीर्णकं तुरङ्गमे

॥ १८ ॥ चामरे विस्तरे ग्रन्थभेदे पिप्पलकं पुनः । चूचुके सीवनसूत्रे हे॰ चं॰
पिण्डीतकः फणिज्झके ॥ १९ ॥ भ्रमरे मदनद्रौ च पुंडरीकं सितांबुजे । ना॰ ४
सितच्छत्रे भेषजे च पुंडरीकोऽग्निदिग्गजे ॥ २० ॥ सहकारे गणधरे एजि
साह्वे गजज्वरे । कोषकारान्तरे व्याघ्रे पुष्कलकस्तु कीलके ॥ २१ ॥ क्ष
पणे गंधमृगे च स्यात्पूर्णानकमानके । पात्रे च पूर्णपात्रे च फर्फरीकं तु मार्द
वे ॥ २२ ॥ फर्फरीकस्तु पेटायां बलाहकोऽम्बुदे गिरौ । दैत्ये नागे बर्बरीकः के
श विन्यासकर्मणि ॥ २३ ॥ शाकभेदे मत्स्यकाले बकेरुका बलाधिका । वा
ताव र्जितशाखा च भ्रमरको मधुव्रते ॥ २४ ॥ गिरिके चूर्णकेशे च भयान
कस्तु भीषणे । व्याघ्रे राहौ रसे भट्टारको राज्ञि मुनौ सुरे ॥ २५ ॥ भार्यादि
को मुनिभेदे भार्यया च विवर्जिते । मरुबकः पुष्पभेदे मदनद्रौ फणिज्झके
॥ २६ ॥ मयूरकस्त्वपामार्गे मयूरकं तु तुत्थके । माणवकस्तु पुंसि स्याद्धा
रहारे भिदोरपि ॥ २७ ॥ मृष्टेरुकः स्यान्मृष्टाशे दानशौण्डे तिथिद्विषि ।
रतर्द्धिकं तु दिवसेषु स्वस्त्ययनेष्टमंगले ॥ २८ ॥ राधरंकुस्तु नासारे शीक
रे जलदोपले । लालाटिकः स्यादाश्लेषि भवेत्कार्याक्षमेऽपि च ॥ २९ ॥
प्रभोर्भालदर्शिनि चलेखनिकस्तु नचयः । स्वहस्तं परहस्तेन लिखितेषु
विलेखयेत् ॥ ३० ॥ लेखहारे वर्त्तरूकः काकनीडे जलावटे । वराटकः प
द्मबीजे कोशे रज्जौ कपर्दके ॥ ३१ ॥ वरण्डकस्तु मातंगवेद्यां योधवनकंट
के । संवर्त्तुले च भित्तौ च विनायको गणाधिपे ॥ ३२ ॥ बुद्धे तार्क्ष्ये गुरौ विघ्ने

मे० चं० वितुन्नकंतुधान्यके । भ्राठामलौषधौचापिविदूषकोऽन्यनिन्दके ॥ ३३ ॥
भा० ४ क्रीडनीयकपाचेचविशेषकस्तुपुंड्रके । विशेषाधायकेचापिवृन्दारकोमनो
रमे ॥ ३४ ॥ सुरेश्रेष्ठेवृहन्तिकास्याद्दाद्दावस्त्रभेदयोः । वैतालिकः ख
ड्गनालेमङ्गलपाठकेऽपिच ॥ ३५ ॥ वैनाशिकःस्याक्षणिकेपरायत्तेोर्ण
नाभयोः । वैदेहको वणिजकेवेश्यापुत्रेचशूद्रतः ॥ ३६ ॥ शूनानीको
मुनौवृद्धेशालावृकोबलीमुखे । सारमेयेशृगालेचशिलाटकःशिलाट्टयोः
॥ ३७ ॥ शृङ्गाटकंपथांश्लेषेपानीयकंटकेऽपिच । संघाटिकातुकुट्टिन्यां
घ्राणेयुग्मेऽम्बुकंटके ॥ ३८ ॥ शन्तानिकाक्षीरराजेमर्कटस्यचजालके । सु
प्रतीकस्स्यादीशानदिग्गजेशोभनाङ्गके ॥ ३९ ॥ सैकतिकंपुनर्माङ्गल्याचामङ्ग
लसूत्रयोः । सैकतिकःक्षपणकेसंन्यस्तेभ्रान्तिजीविनि ॥ ४० ॥ सोमव
ल्कःकट्फलेस्याच्छ्वेतखदिरद्रुमे । सौगंधिकोगंधिवणिक्सौगंधिकंतुकत्तृणे
॥ ४१ ॥ गंधोपलेपद्मरागेकह्लारे ॥ ❁ ॥ चतुःस्वरकान्ताः ॥ ❁ ॥ ऽग्नि
मुखोद्विजे । भल्लातेचित्रकेदेवेऽप्यग्निशिखंतुकुङ्कुमे ॥ ४२ ॥ अग्निशिखा
लांगलिक्यामिन्दुलेखेन्दुखण्डके । गुडूचीसोमलतयोःपञ्चनखस्तुकच्छपे
॥ ४३ ॥ गजेबद्धशिखोबालबद्धशिखोच्चटौषधे । महाशंखोनिधिभेदेसं
ख्याभेदेनरास्थनि ॥ ४४ ॥ व्याघ्रनखस्तुकंदेस्याद्गंधद्रव्यांतरेऽपिच । श
शिलेखावृत्तभेदेवाकुचीचन्द्रलेखयोः ॥ ४५ ॥ शिलीमुखोऽलौबाणेचा ॥
❁ ॥ चतुःस्वरखान्ताः ॥ ❁ ॥ ऽपवर्गस्त्यागमोक्षयोः । क्रियावसानसा

शल्येऽप्यभिषंगःपराभवे ॥ ४६ ॥ आक्रोशेशपथेचेहामृगःस्याद्रूपकांतरे है॰ चं॰
। वृकेजंतौचापरागोराहुग्रस्तार्कचन्द्रयोः ॥ ४७ ॥ विगानेदुर्नयेराहा ना॰ ४
वुपसर्गेउपद्रवे। प्रादेशेचरोगभेदेचकटभङ्गोनृपात्यये ॥ ४८ ॥ हस्त
च्छेदेचसस्यानांकरचभङ्गोनृपक्षये। स्वातंत्र्येविधवत्वेचदीर्घाध्वगःक्रमे
लके ॥ ४९ ॥ लेखहारेमल्लनागोवात्स्यायनसुरेभयोः। समयोगस्तु
संयोगेसमवायेप्रयोजने ॥ ५० ॥ सम्प्रयोगोनिधुवनेसंबन्धेकार्मणेऽपि
च। ॥ ❁ ॥ चतुःस्वरगान्ताः ॥ ❁ ॥ जलसूचिःशिशुमारेचोटिम
त्स्येजलौकसि ॥ ५१ ॥ काकशृङ्गाटयोश्चापिमलिम्लुचस्तुतस्करे। वाते
॥ ❁ ॥ चतुःस्वरचान्ताः ॥ ❁ ॥ काश्मीरजंकुष्ठेकुङ्कुमेपौष्करेऽपिच
॥ ५२ ॥ कश्मीरेचातिविषायांक्षीराब्धिजंतुमौक्तिके। वशिरेक्षीराब्धिजस्तु
शेषेताक्ष्यैंनिशाकरे ॥ ५३ ॥ अमृतादिसमूहेचभवेत्क्षीराब्धिजाश्रियां।
ग्रहराजःशशिन्यर्केजघन्यजोनुजन्मनि ॥ ५४ ॥ शूद्रेचद्विजराजस्तु
शशांकेगरुडेऽपिच। धर्मराजस्तुसुगतेश्राद्धदेवेयुधिष्ठिरे ॥ ५५ ॥ भा
रद्वाजःपक्षिभेदेमुनौजीवस्तुतेऽपिच। भृंगराजोमधुकरेमार्कवेविहगा
न्तरे ॥ ५६ ॥ रजराजोनृपेशैद्रोःकुबेरेऽथसकृत्प्रजः। काकेसिंहेथो ॥
❁ ॥ चतुःस्वरजान्ताः ॥ ❁ ॥ चिङ्गटःकोपनेमीनभिद्यपि ॥ ५७ ॥
करहाटःपद्मकन्देशद्रुमविशेषयोः। कार्य्यपुटोऽनर्थकारेक्षपणो
न्मत्तयोरपि ॥ ५८ ॥ कामकूटोवेश्याविभ्रमेष्टावथकुटन्नटः। शोणा

हे०चं० कैकैवर्तीमुस्तेकुण्डकीटस्तुजारतः ॥ ५९ ॥ विप्रीपुंचेटासीपतौचार्वाकेऽ
ना० ४ तिविशारदे । खञ्जरीटस्तुखञ्जनेऽसिधाराव्रतचारिणोः ॥ ६० ॥ गाढमु
ष्टिस्तुकृपणेत्सरुपाणप्रभृतावपि । चक्रवाटस्तुपर्यंतेक्रियारोहेशिखातरौ
॥ ६१ ॥ तुलाकोटिर्मानभेदेऽर्बुदेस्यान्नूपुरेऽपिच । नारकीटः स्वदत्ता
शाविहंतर्यश्मकीटके ॥ ६२ ॥ प्रतिकृष्टंतुगुह्येस्याद्द्विरावृत्त्यांचकर्षिते
। प्रतिस्पष्टः पुनःप्रत्याख्यातेचप्रेषितेऽपिच ॥ ६३ ॥ परपुष्टः कलकण्ठेप
रपुष्टापण्यांगना । वर्कराटस्तुतरुणादित्यरोचिःकटाक्षयोः ॥ ६४ ॥ स्त्री
णांपयोधरोत्संगकाकोदन्तनखेऽपिच । शिपिविष्टस्तुखल्वाटेदुश्चर्म
णिपिनाकिनि ॥ ६५ ॥ ❁ ॥ चतुःस्वरटान्ताः ॥ ❁ ॥ श्रुतिकण्ठःप्राय
श्चित्तेप्राञ्चलोऽहिभुजंगयोः । कलकण्ठः पिकेपारावतेहंसेकलध्वनौ
॥ ६६ ॥ कालकंठनीलकण्ठौपीतसारेमहेश्वरे । दात्यूहेग्रामचटके
खंजरीटेशिखाबले ॥ ६७ ॥ कालपृष्ठंतुकोदण्डमात्रेकर्णधन्वनि ।
कालपृष्ठोमृगभेदेकङ्केदन्तशठःपुनः ॥ ६८ ॥ जंबीरेनागरङ्गेचकर्म
रंगकपित्थयोः । पूतिकाष्ठश्चसरलेदेवदारुद्रुमेऽपिच ॥ ६९ ॥ स्तू
च्चकण्ठः खञ्जरीटेद्विजन्मनिकपोतके । हारिकण्ठोहारयुक्तकण्ठेप
रभृतेऽपिच ॥ ७० ॥ ❁ ॥ चतुःस्वरठान्ताः ॥ ❁ ॥ अपोगण्डोऽतिभी
रौस्यान्निरोरविकलाङ्गयोः । चक्रवाडङ्गोचक्रवाडोऽद्रौचक्रवालकम्
॥ ७१ ॥ जलरंडःपयोरेणौजलावर्तेभुजंगमे । देवताडोघोषकेऽग्नौ

ह्रोवातखुडापुनः ॥ ७२ ॥ वात्यायांपिच्छिलस्फोटिकामायांवातशोणिते ।
॥ ❁ ॥ चतुःस्वरडान्ताः ॥ ❁ ॥ अध्यारूढःसमारूढेऽभ्यधिके ॥
❁ ॥ चतुःस्वरढान्ताः ॥ ❁ ॥ ऽङ्गारिणीपुनः ॥ ७३ ॥ भास्करत्यक्तदिग्व
ल्योरथर्वणःपुरोहिते । अथर्वशब्राह्मणेचाप्यारोहणंप्ररोहणे ॥ ७४ ॥
समारोहेसोपानेचस्यादुद्धरणमुन्नये । भुक्तोज्झितोन्मूलनयोरुत्क्षेपणा
मुदञ्चनं ॥ ७५ ॥ पर्णापोडशकेचीर्णपर्णःखर्जूरनिम्बयोः । चूडामणिः
काकचिञ्चाफलेमूर्द्धमणावपि ॥ ७६ ॥ जुहुवाणोध्वर्युवह्न्योस्तरडु
रीणस्तुबर्बरे । तण्डुलाम्बुनिकीटेचतिलपर्णीतुसिह्लके ॥ ७७ ॥ श्री
वासेचन्दनेदाक्षायण्युमायांश्वभेषुच । रोहिण्यांदेवमणिर्विष्णुवक्षोमणौह
रे ॥ ७८ ॥ अश्वस्यकण्ठावर्तेचनारायणस्तुकेशवे । नारायणीशताव
र्युमाश्रीर्निःसरणंमृतौ ॥ ७९ ॥ उपायेगेहादिमुखेनिर्वाणेनिर्गमेऽपि
च । निस्तरणंतुनिस्तारेतरणोपाययोरपि ॥ ८० ॥ निरूपणंविचारा
वलोकनयोर्निदर्शने । निगरणंभोजनेस्यान्निगरणःपुनर्गले ॥ ८१ ॥
प्रकरणंस्याद्विश्रामेरूपकेऽथप्रवारणं । काम्यदानेनिषेधेचपरीणांतुप
र्वणि ॥ ८२ ॥ पर्णावृत्तरसेपर्णासिरण्यांघृतकम्बले । परीरणंस्याद्द
ण्डेतन्त्यरण्ययोरपि ॥ ८३ ॥ परवाणिर्धर्माध्यक्षेवर्षेपारायणंपु
नः । कार्त्स्न्येपारगतौसङ्क्षेपीतुपर्णौषधीभिदि ॥ ८४ ॥ मूर्वायांबिम्बि
कायांचपुष्करिणीजलाशये । हस्तिन्यामब्जमलिन्यांश्चमीनास्त्रीमण्ड

खञ्जने ॥ ८५ ॥ दर्शनेचेरक्तरेणुः पलाशकलिकोद्गमे । सिन्दूरेण
चूर्णेस्तुखदिरेमकरध्वजे ॥ ८६ ॥ रोरिह्याणोवरेरुद्रेलंबकर्णःपुन
श्छगे । अङ्कोठेवारबाणस्तुकूर्पासेकंवचेऽपिच ॥ ८७ ॥ विदारणं
भेदनेस्यात्संपरायेविडम्बने । वैतरणीप्रेतनद्यांजनन्यामपिरक्षसां
॥ ८८ ॥ शरवाणिःशरमुखेपदातौशरजीविनि । शिखरिणीवृत्तभे
देरोमालीपेयभेदयो ॥ ८९ ॥ स्वैरन्नेमल्लिकायांचसमीरणःफणिज्झ
के । पान्थेवायौसंसरणंत्वसंबाधचमूगतौ ॥ ९० ॥ संसारेचसमारम्भे
नगरस्योपनिर्गमे । हस्तिकर्णःस्यादेरंडेपलाशगणभेदयोः ॥ ९१ ॥
॥ ❁ ॥ चतुःस्वराणान्ताः ॥ ❁ ॥ अवदातस्तुविमलेमनोज्ञेसितपीत
योः । अपावृतोपरावृत्तेपिहितेऽवसितङ्गतौ ॥ ९२ ॥ ऋद्धेज्ञातेऽव
सानेचाप्यवंगीतंविगर्हिते । मुहुर्दृष्टेऽपवादेचाऽत्याहितन्तुमहाभये
॥ ९३ ॥ जीवनिरपेक्षकर्मण्यभिजातःकुलोद्भवे । न्याय्येप्राज्ञेऽभिनीतस्तु
न्याय्येमर्षिणिसंस्कृते ॥ ९४ ॥ अभियुक्तःपरिरुद्धेतत्परेऽन्तर्गतंपुनः
। मध्यप्राप्तविस्मृतयोरङ्गारितन्तुभस्मिते ॥ ९५ ॥ पलाशकलिकोद्भे
देचातिमुक्तस्तुनिष्फले । वासन्तिकायान्तिनिशेऽप्यवध्वस्तस्तुचूर्णिते
॥ ९६ ॥ त्यक्तनिन्दितयोश्चाधिक्षिप्तौनिहितभर्त्सितौ । अपचितिर्
व्ययेहानौपूजायांनिष्कृतावपि ॥ ९७ ॥ अनुमतिःस्यादनुज्ञापौर्ण
मासीविशेषयोः । अभिशस्तिःपुनर्लोकापवादेप्रार्थनेऽपिच ॥ ९८ ॥

उदास्थितस्त्वध्यक्षः स्याद्दध्यक्षे चोपाहितः पुनः। आरोपिते ऽनलोत्पातेषु हे० चं० प्राकृत उपद्रवे ॥ ९९ ॥ मंचेत्यप्रोक्षितपशावुत्क्षिप्तक्षिप्तमनूक्ते। उ मा० ४ त्कीर्णो चोपरक्तस्तु स्वर्भानौ व्यसनातुरे ॥ १०० ॥ राहुग्रस्तार्कशशिनो रूपचितः समाहिते। ऋद्धे दग्धे ऽथोज्जृम्भितमुत्फुल्ले चेष्टिते ऽपि च ॥ १०१ ॥ उद्ग्राहितमुपन्यस्ते बद्धग्राहितयोरपि। उपसत्तिः सङ्गमे प्रतिपादनसेवयोः ॥ १०२ ॥ ऋष्यप्रोक्ता मूकशिंब्यां शतावर्यां बलाभिदि। ऐरावतोऽहिनारंगेलकुचे त्रिदशद्विपे ॥ १०३ ॥ ऐरावतमनुश्चास्त्र ऋजुदीर्घशरासने। ऐरावती विद्युदिद्युद्भिदोः शतह्रदा यथा ॥ १०४ ॥ कलधौतं रूप्यहेम्नोः कलधौतः कलध्वनौ। कुहरितं तु रतिते पिकालापे रतस्वने ॥ १०५ ॥ कुमुद्वती कैरविण्यां दयितायां कुशस्य च। कृष्णवृन्ता माषपर्ण्यां पाटलाख्यद्रुमे ऽपि च ॥ १०६ ॥ गन्धवती सुरापुर्योः पृथ्वीयोजनगन्धयोः। गृहपतिर्गृहीसत्त्री चन्द्रकान्तस्तु कैरवे ॥ १०७ ॥ चन्द्रकान्तो रत्नभेदे चर्मण्वती नदीभिदि। कदल्यां चित्रगुप्तस्तु कृतान्ते तस्य लेखके ॥ १०८ ॥ दिवाभीतः काकरिपौ कुम्भिले कुमुदाकरे। दिवाकीर्त्तिर्नापिते स्यादुलूके ऽन्त्यावसायिनि ॥ १०९ ॥ धूमकेतुर्वह्न्युत्पातौ नंद्यावर्तो गृहान्तरे। नगरे ऽथ नदीकान्तो निर्गुण्डीनिचुलाब्धिषु ॥ ११० ॥ नदीकान्ता लताजंबूः काकजंघौषधो ऽपि च। नागदन्तो हस्तिदन्ते गेहान्निःसृतदारुणि ॥ १११ ॥ नागदन्ती श्रीहस्तिन्यां कुम्भाख्यभेष

 जेऽपिच । निष्कुषितंवर्जितेस्याद्भुतान्वचिलघूकृते ॥ ११२ ॥ निराकृता
 तिरस्ताध्यायेनिराकारनिषेधयोः । प्रतिहतस्तुखाधिष्ठेप्रतिस्खलितरुद्
द्धयोः ॥ ११३ ॥ प्रणिहितन्तुसंप्राप्तनिहितयोःसमाहिते । प्रतिक्षिप्तं
प्रतिहतेभेषजेप्रेषितेऽपिच ॥ ११४ ॥ प्रधूपिताक्लेशितायांरविगन्तव्य
दिश्यपि । प्रव्रजितातुमुण्डीयांतापस्यांमांसिकौषधे ॥ ११५ ॥ प्रजाप
तिर्ब्रह्मणश्चजामातरिदिवाकरे । बह्वोत्वष्टरिदक्षादौप्रतिक्रान्तिस्तुपू
जिते ॥ ११६ ॥ प्रतिमायांप्रतीकारेप्रतिपत्तिस्तुगौरवे । प्राप्तेप्रवृत्तेप्रा
गल्भ्येबोधेपरिगतङ्गते ॥ ११७ ॥ लाभचेष्टितयोर्ज्ञातेपल्लवितंसपल्ल
वे । लाक्षारक्तेततेपंचगुप्तस्पार्वाकदर्शने ॥ ११८ ॥ कमठेपरिवर्त्तस्तु
कूर्मराजेपलायिते । युगान्तेविनिमयेचपरिघातस्तुघातने ॥ ११९ ॥ अं
स्त्रेचाथपशुपतिःपिनाकिनिहुताशने । पाशुपतःशिवमहत्यांपशुपत्य
धिदैवते ॥ १२० ॥ पारिजातस्तुमन्दारेपारिभद्रेसुरद्रुमे । पारावतः
कलरवेगिरौमर्कटतिन्दुके ॥ १२१ ॥ पारावतीतुलवलीफलगोपालगीत
योः । पुष्पदन्तस्तुदिग्नागेजिनभेदेगणान्तरे ॥ १२२ ॥ पुष्पदन्तौच
चन्द्रार्कावेकोक्त्याथपुरस्कृतं । पूजितेस्वीकृतेसिक्तेऽभिशस्तेऽग्रकृतेऽपि
च ॥ १२३ ॥ भोगवतीतुसर्पाणांनगरेपिसरित्यपि । रङ्गमाताजतुकु
ट्योर्लक्ष्मीपतिर्जनार्दने ॥ १२४ ॥ पूगेलवङ्गवृक्षेचव्यतीपातउपद्रवे ।
योगभेदेऽपपातेचवनस्पतिर्द्रुमात्रके ॥ १२५ ॥ विनापुष्पफलेद्रौच

विनिपाततस्तुदैवतः । व्यसनेचावपानेचवैजयन्तोगुहेध्वजे ॥ १२६ ॥
इन्द्रालयेवैजयन्तीत्वग्निमन्थपताकयोः । जयंत्यांचसमाघातस्त्वाहवे
घातनेऽपिच ॥ १२७ ॥ समाहितःसमाधिस्थेसंश्रुतेऽथसमुद्धतः । अ
विनीतेसमुद्गीर्णेसमुद्रांतातुरसभा ॥ १२८ ॥ कार्पासिकाचह्रक्काचस
द्गागतिःसदोम्बरे । निर्वाणेपवमानेचसरस्वतीसरिद्भिदि ॥ १२९ ॥
वाच्यापगायांस्त्रीरत्नेगोवाग्देवतयोरपि । सूर्य्यभक्तोबन्धुजीवेभास्क
रस्यचपूजके ॥ १३० ॥ हैमवत्यद्रिजास्वर्णक्षीरीप्युक्तवचाऽभया ।
॥ ❁ ॥ चतुःस्वरतान्ताः ॥ ❁ ॥ अनीकस्थोरश्मिवर्गेऽथम्बलेवीरम
र्दले ॥ १३१ ॥ चिह्नेगजशिक्षितेचातिकथाव्यर्थभाषणे । अश्रद्धेयेन
ष्टधर्मेऽप्युदरथिर्वियच्चरौ ॥ १३२ ॥ अत्रैचिचरथोविद्याधरेगन्धर्व
सूर्य्ययोः । चतुष्पथस्तुमार्गसंगमेब्राह्मणेऽपिच ॥ १३३ ॥ दशमी
स्थःस्थविरेस्यात्क्षीणरागेमृताशने । वानप्रस्थोमधूकद्रौकिंशुकाश्रम
भेदयोः ॥ १३४ ॥ ❁ ॥ चतुःस्वरथान्ताः ॥ ❁ ॥ अष्टापदस्त्वन्द्रम
स्यांलूतायांशरभेक्रमौ । कनकेशारिफलकेऽभिमर्दोमद्ययुद्धयोः
॥ १३५ ॥ स्यादभिस्यंदआस्रावनेचरोगातिवृद्धिषु । अववादस्तुनिर्दे
शेनिन्दाविस्रंभयोरपि ॥ १३६ ॥ उपनिषत्तुवेदान्तेरहस्यधर्मयोरपि
। एकपदन्तदात्वेस्यादेकपदीतुवर्त्मनि ॥ १३७ ॥ कटुकंदःश्रृङ्गवेरे
शोभांजनरसोनयोः । कुरुविन्दःपद्मरागेमुकुरव्रीहिभेदयोः ॥ १३८ ॥

हे॰ चं॰ कुल्माषे हिंगुलेमुस्तेकोकनदं तु रक्तके । अम्भोजन्मकुमुदयोस्तु प्यदो
ना॰ ४ गवादिषु ॥ १३९ ॥ स्त्रीणां करणभेदे च परक्तपादो मतंगजे । स्यंदने
च जनपदः स्यात्तु नर्जनदेशयोः ॥ १४० ॥ परिवादस्तु निन्दायां वी
णावादनवस्तुनि । प्रियंवदः प्रियवादिनभश्चरविशेषयोः ॥ १४१ ॥
पीठमर्दोऽतिधृष्टे स्यान्नाट्योक्त्या नायकप्रिये । पुटभेदस्तु नगरे तोद्ययोस्त
टिनीमुखे ॥ १४२ ॥ महानादो वर्षुकाब्दे महाध्वाने शयानके । गजेच
मुचुकुन्दस्तु द्रुभेदे मुनिदैत्ययोः ॥ १४३ ॥ मेघनादो मेघशब्दे वरुणे रव
णात्मजे । विशारदो बुद्धे धृष्टे विष्णुपदं नभोऽब्जयोः ॥ १४४ ॥ विष्णुप
दस्तु क्षीरोदे विष्णुपदी सुरापगा । संज्ञां निद्रारिकाप्यपि ग्रहदान्तुविद्युति
॥१४५॥ वज्रेऽपि च समर्यादं मर्यादासहितेऽपि च । मुख्यानुयायिनि श्रि
ष्टोऽनुक्तस्यानुवर्तने ॥ १४६ ॥ दान्तपादे ॥ ❁ ॥ चतुःस्वरदान्ताः ॥ ❁
॥ ऽनुबन्धी तु हिक्कायां तृषितेक्वचित् । अवरोधस्तु शुद्धान्ते तिरोधाने न्दपौ
कसि ॥ १४७ ॥ अवष्टब्धमविदूरे समाक्रान्तेऽवलंबिनि । अनिरुद्धश्चरे
पुष्पचापसूनावनर्गले ॥ १४८ ॥ आशाबन्धः समाश्वासे मर्कटस्यचवास
सि । इष्टगन्धः सुगन्धिः स्यादिष्टगन्धं तु बालुके ॥ १४९ ॥ इक्षुगन्धा का
शक्रोष्ट्रीकोकिलाक्षेषु गोक्षुरे । उग्रगन्धा वचाक्षे चयवान्योम्छिक्किकौषधौ
॥ १५० ॥ उपलब्धिर्मतौ प्राप्तौ कालस्कंधस्तु तिंदुके । तमाले जीवकद्रौ चतौ
क्ष्णागन्धा वचौषधौ ॥ १५१ ॥ शोभाञ्जने राजिकायां परिव्याधाद्रुमोत्पले

।वेतसेमहौषधंतुशुण्ठ्यांविषारसोनयोः॥ १५२॥ ब्रह्मबंधुर्निन्द्यविप्रेबा हे॰ चं॰
न्धवेब्राह्मणस्यच । समुन्नद्धस्तूर्ध्वबद्धेपण्डितंमन्यदृप्तयोः ॥ १५३॥ ना॰ ४
॥ ❁ ॥ चतुःस्वरधान्ताः ॥ ❁ ॥ अपाचीनंविपर्यस्तेऽपागर्थेऽभिजनः
कुले । कुलध्वजेजन्मभूमावभिनानस्त्वहंकृतौ ॥ १५४ ॥ हिंसायांप्रण
येज्ञानेऽवलग्नोमध्यलग्नयोः । अवदानमतिवृत्तेखण्डनेशुद्धकर्मणि
॥ १५५॥ अधिष्ठानंप्रभावेऽध्यासनेनगरचक्रयोः । अनूचानःसांगवे
दकेविदेविनयान्विते ॥ १५६ ॥ अन्वासनंस्नेहवस्तौसेवायामनुशोच
ने । अग्रजन्माऽग्रजेविप्रेऽन्तेवासीपुनरंत्यके ॥ १५७ ॥ शिष्यप्रान्त
गयोश्चाप्यायोधनंसमरेवधे । आराधनंपाकप्राप्त्योःसाधनेतोषणेऽपिच
॥ १५८ ॥ आच्छादनंतुवसनेसंपिधानेऽपवारणे । आकलनंपरिसंख्या
कांक्षयोर्बन्धनेऽपिच ॥ १५९ ॥ आतंचनंस्याज्जवनेप्रापणप्रतिवाप
योः । आवेशनंपरिविशेप्रवेशेशिल्पवेश्मनि ॥ १६० ॥ आस्कन्दनंति
रस्कारेसंशोषणसमीकयोः । आत्माधीनःसुतेप्राणाधारेश्यालेविदूष
के ॥ १६१ ॥ आत्मयोनिःस्मरेवेधस्युद्वर्तनंविलेपने । अपावृत्तावुत्प
तनेस्यादुपासनमासने ॥ १६२ ॥ शुश्रूषायांशराभ्यासेऽप्युपधानंतुगंडु
के । व्रतेविषेचप्रणयेस्यादुत्पतनमुत्प्लुतौ ॥ १६३ ॥ उत्पन्नावुदयन
स्तुवत्सराजेघटोद्भवे । उत्सादनःसमुल्लेखोद्वर्तनोद्वाहनेषुच ॥ १६४ ॥
उद्वाहनंद्विसीत्येस्यादुद्वाहनीवराटके । कपीतनोगर्दभाण्डशिरीषाम्रात

 पिप्पलाः ॥ १६५ ॥ कलध्वनिः परभृतेपारावतकलापिनोः । कात्याय
 नोवररुचैाकात्यायनीतुपार्वती ॥ १६६ ॥ कषायवस्त्रविधवार्द्धवृद्ध
महिलाऽपिच । कामचारीकलविङ्केस्वेच्छाचारिणिकामुके ॥ १६७ ॥
कारन्धमीधातुवादेनिरतेकांस्यकारिणि । किष्कुपर्वापोटगलेस्यादिक्षुत्व
चिसारयोः ॥ १६८ ॥ कुचन्दनंवृक्षभेदेपत्राङ्गेरक्तचन्दने । कुम्भयो,
निर्द्रोणेऽगस्तौकृष्णवर्त्माविधुन्तुदे ॥ १६९ ॥ दुराचारेकृतान्तेचगवाद
नीन्द्रवारुणी । घासस्थानङ्कादीनाङ्गदयित्नुः शरासने ॥ १७० ॥
जलपाकेपुष्पचापेच घनाघनोनिरन्तरे । वासवेघातुकेमत्तगजेवर्षुकवारि
दे ॥ १७१ ॥ घोषयित्नुःपिकेविप्रेचिरञ्जीवीतुवायसे । अजेचचिरभा
नुस्तुकृतान्तदिनेशयोः ॥ १७२ ॥ जलाटनःकङ्कखगेजलाटनी
जलौकसि । तपोधनातुमुण्डीर्यांतपोधनस्तपस्विनि ॥ १७३ ॥ तप
स्विनीपुनर्मांसीकटुरोहिणिकाऽपिच । तिक्तपर्वाहिलमोचीगुडूचीमधु
यष्टिषु ॥ १७४ ॥ देवसेनेन्द्रकन्यायांसैन्येदिविषदामपि । नागाङ्ग
नानागपत्न्यांद्विरदस्यचमुद्गरे ॥ १७५ ॥ निर्यातनंवैरशुद्धौदानेन्या
ससमर्पणे । निधुवनंरतेकंपेनिर्वासनन्तुमारणे ॥ १७६ ॥ पुरादे
स्त्ववहिष्कारेनिरसनंनिसूदने । निष्ठीवनेनिरासेचनिशामनंनिदर्शने
॥ १७७ ॥ निरीक्षणश्रवणयोर्निर्भर्त्सनमलक्तके । खलीकारेप्रजा
ननंप्रगतेयोनिजन्मयोः ॥ १७८ ॥ प्रणिधानमभियोगेसमाधानप्र

योगयोः । प्रयोजनं कार्यहेत्वोः स्यात्प्रवचनमागमे ॥ १७९ ॥ प्रकृष्ट 
वचने प्रस्फोटनं शूर्पे प्रकाशने । ताडने प्रतिपन्नस्तु विक्रान्तेऽङ्गीकृतेऽपि च 
॥ १८० ॥ प्रतियत्नः संस्कारे स्यादुपग्रहलिप्सयोः । प्रहसनं तु प्र
हासाक्षेपयो रूपकान्तरे ॥ १८१ ॥ प्रतिमानं प्रतिविम्बे गजदन्तद्वयां
तरे । प्रसाधनी कङ्कतिकासिद्धोः प्रसाधनं पुनः ॥ १८२ ॥ वेषे प्रचल
कीसर्पे मयूरेऽथ पयस्विनी । विभावर्यां गोधेन्वां च पुण्यजनस्तु सज्जने
॥ १८३ ॥ गुह्यके यातुधाने च पृथग्जनोऽधमे जडे । पृष्ठशृंगी भीमसेने
षंढसैरिभयोरपि ॥ १८४ ॥ महाधनं महामूल्ये सिह्लके चारुवास
सि । महासेनो महासैन्ये स्कन्देऽप्यथ महामुनिः ॥ १८५ ॥ अगस्तिकु
स्तुम्बुरुणोर्मालुधानी लताभिदि । मालुधानो मातुलाहौ मातुलानी पुनः शणे
॥ १८६ ॥ कलापे मातुलपत्न्यां रसायनो विहंगमे । पक्षीन्द्रे रसायनं तु ज
राव्याधिभिदौषधे ॥ १८७ ॥ राजादनः पियालद्रौ क्षीरिकायां चिपस्तु
के । वर्द्धमानो वीरजिने स्वस्तिकैरण्डविष्णुषु ॥ १८८ ॥ प्रश्नभेदे श
रावे च विरोचनोऽग्निसूर्ययोः । प्रह्लादनन्दने चन्द्रे विहेडनं विडम्बने
॥ १८९ ॥ हिंसायां मर्द्दने विस्मापनाख्या कुहके स्मरे । गन्धर्वनगरे चा
पि विष्वक्सेनो जनार्दनः ॥ १९० ॥ विष्वक्सेना तु फलिनी विश्राणनं विहा
पिते । संप्रेषणे परित्यागे विहननं तु पिञ्जने ॥ १९१ ॥ बधेऽथ विश्वक
र्माऽर्कमुनिभिद्देवशिल्पिनोः । विघ्नकारी विघातस्य कारके घोरदर्शने

॥ १९२ ॥ विलेपनीस्याद्यवाग्वांचारुवेषस्त्रियामपि । वृक्षादनीमधु
च्छेचेचलपत्रकुठारयोः ॥ १९३ ॥ वृक्षादनीतुवन्दायांविदारीगन्धि
कौषधे । वृषपर्वातुभृङ्गारिहरदैत्यकशेरुषु ॥ १९४ ॥ वैरोचनोरवि
विष्णुसुतेचबलिदानवे । श्वेतधामाघनसारेकलानाथाब्धिफेनयोः
॥ १९५ ॥ श्लेष्मघनातुकेतक्यांमहाज्यामथसमापनं । परिच्छेदेसमाधाने
समाप्तिबधयोरपि ॥ १९६ ॥ संमूर्छनमभिव्याप्तौमोहेसनातनोऽच्युते ।
पितृणामतिथौरुद्रवेधसोःशाश्वतेस्थिरे ॥ १९७ ॥ सदादानोगन्धग
जेहरिबेऽभ्रमतङ्गजे । संयमनंव्रतेबन्धेसंयमनीयमस्यपूः ॥ १९८ ॥
समादानंसमासीनग्रहणेनित्यकर्मणि । समापन्नंबधेक्लिष्टेसमाप्तप्राप्तयो
रपि ॥ १९९ ॥ संवदनंतुसंवादेसमालोचेवशीकृतौ । समुत्थानेनिदाने
ऽभियोगेसंवाहनंपुनः ॥ २०० ॥ वाहनेऽङ्गमर्दनेचसंप्रयोगीतुकामुके ।
कलाकेलौसुप्रयोगेसरोजिनीसरोरुहे ॥ २०१ ॥ सरोरुहिण्यांकासारे
स्तनयित्नुःपयोमुचि । मृतौस्तनितेरोगेचसारसनमुरश्छदे ॥ २०२ ॥
कांच्यांचसामयोनिस्तुसामोत्थेद्रुहिणेगजे । सामिधेनीसमिदृचोःस्रुयां
मुनोजनार्दने ॥ २०३ ॥ वत्सराजेप्रासादेऽद्रिभेदेचाथसुदर्शनः । विष्णो
श्चक्रेसुदर्शन्यमरावत्यांसुदर्शना ॥ २०४ ॥ आज्ञायामौषधीभेदेमेरु
जम्बांसुरभिदि । सौदामिनीतडिद्भेदतडितोरप्सरोभिदि ॥ २०५ ॥ द
र्पयित्नुःसुतेस्वर्गे ॥ ❁ ॥ चतुःस्वरनान्ताः ॥ ❁ ॥ ऽवलेपोगर्वलेप

योः । दूषणोऽप्यपलापस्तुप्रेमापह्नवयोरथ ॥ २०६ ॥ उपतापोगदेतापे जलकूप्यम्बुगर्भके । सरस्यांजीवपुष्पंतुदमनकेफणिज्झके ॥ २०७ ॥ नागपुष्पस्तुपुन्नागेचंपकेनागकेसरे । परिवापोजलस्थानेपर्युप्तिपरिवारयोः ॥ २०८ ॥ पिण्डपुष्पंजपायांस्यादशोकेसरसीरुहे । बकुरूपःस्मरेविज्ञेसरटेधूर्णकेशिवे ॥ २०९ ॥ मेघपुष्पंतुनादेस्यात्पिण्डाभ्रेसलिलेऽपिच । विप्रलापोविरोधोक्तावनर्थकवचस्यपि ॥ २१० ॥ वृकधूपोवृक्षधूपेसिह्लकेऽथवृषाकपिः । वासुदेवेशिवेऽग्नौचहेमपुष्पंतुचंपके ॥ २११ ॥ अशोकद्रौजपापुष्पे ॥ ❁ ॥ चतुःस्वरपान्ताः ॥ ❁ ॥ राजजंबूस्तुजंबुभित् । पिण्डखर्जूरवृक्षस्याप्य ॥ ❁ ॥ चतुःस्वरबान्ताः ॥ ❁ ॥ ऽवष्टंभस्तुकाञ्चने ॥ २१२ ॥ संरंभारम्भयोःस्तंभेशातकुम्भोऽश्वमारके । शातकुम्भन्तुकनके ॥ ❁ ॥ चतुःस्वरभान्ताः ॥ ❁ ॥ ऽभ्यागमःसमरेऽन्तिके ॥ २१३ ॥ घातेरोधेऽभ्युपगमेऽनुपमस्तुभवेद्यं । उपमारहितेऽनुपमेभ्यामुपगमःपुनः ॥ २१४ ॥ अङ्गीकारेऽन्तिकगतावुपक्रमस्तुविक्रमे । उपधायांतद्दाद्याचिख्यासाचिकित्सयोरपि ॥ २१५ ॥ आरंभेऽथजलगुल्मोजलावर्त्तेऽम्बुचत्वरे । कमठेदण्डयामस्तुदिवसेकुम्भजेयमे ॥ २१६ ॥ प्लवङ्गमःकपौभेकेपराक्रमस्तुविक्रमे । सामर्थ्येचाभियोगेचमहापद्मःपुनर्निधौ ॥ २१७ ॥ नागसंख्याभिदोर्यांतयामोभुक्तसमुज्झिते । जीर्णेचसार्वभौमस्तुदिग्गजेचक्रवर्त्तिनि ॥ २१८ ॥ ❁ ॥

हे॰ चं॰ षतुःस्वरमाम्नाः ॥ ❁ ॥ अनुशयः पश्चात्तापे दीर्घद्वेषानुबन्धयोः ।
भा॰ ४ अन्वाहार्यममावास्याश्राद्धमिष्टे स्वदक्षिणा ॥ २१९ ॥ अवश्यायो हिमे दर्पे
ऽप्यपसव्यं तु दक्षिणे । प्रतिकूलेऽन्तशय्या भूशय्यापि नृवनं मृतिः ॥ २२० ॥
स्तुपकार्या राजगेहमुपकारे चिताऽपि च । चन्द्रोदयो शश्युदयोल्लोचौ च
न्द्रोदयौषधे ॥ २२१ ॥ जलाशयमुशीरे स्याज्जलाशयो जलाश्रये । मं
डुलीयः शाकभेदे विडङ्गतण्डुलाप्ययोः ॥ २२२ ॥ तृणाशून्यं मल्लिकायां के
तकीशाखिनः फले । धनञ्जयो नागभेदे ककुभेदे हुताशने ॥ २२३ ॥
पार्थेऽग्नौ निरामयस्तु स्यादिडिक्के गतामये । प्रतिभयं भये भीष्मे प्रतिश्रयः स
भौकसोः ॥ २२४ ॥ परिधायः परिकरे जलस्थाननितम्बयोः । पाञ्चज
न्यः पोटगले शङ्खे दामोदरस्य च ॥ २२५ ॥ पौरुषेयं पुरुषेण कृतेऽस्य च
हिते बधे । समूहे च विकारे च फलोदयो द्युलाभयोः ॥ २२६ ॥ विलेशयो
मूषिकेऽहौ भागधेयः पुनः करे । दायादे भागधेयं तु भाग्ये महालयः पुनः
॥ २२७ ॥ तीर्थविहारपरमात्मनोर्महोदयं पुरे । महोदयः स्वामि
मुक्त्योर्महामूल्यं महार्थके ॥ २२८ ॥ पद्मरागमणौ मार्जालीयः शुद्रबि
डालयोः । शरीरशोधने रौहिणेयो वत्से बुधे बले ॥ २२९ ॥ समुच्छ्रयो
वैरोन्नत्योः समुदायो गणे रणे । समुदायस्तु द्रुमेऽपि संपरायस्तु संयुगे
॥ २३० ॥ आपद्युत्तरकाले च स्यात्समाह्वय आहवे । पशुभिः पक्षिभि
र्द्यूते स्थूलोच्चयो वरण्डके ॥ २३१ ॥ गजानां मध्यमगते गण्डाश्मा कौ

मर्त्ययोरपि। हिरण्मयोलोकधातौसौवर्णे ॥ ❁ ॥ चतुःस्वरयान्ताः ॥ ❁ ॥ ऽभिमरोवधे ॥ २३२ ॥ स्वबलेसाध्वसेयुद्धेऽवसरोवत्सरेक्षणे। अरुष्करं व्रणकरेभल्लातकफलेऽपिच ॥ २३३ ॥ अभ्यन्तरोनागभेदेवेसरेऽनुत्तरंपुनः। निरुत्तरेचश्रेष्ठेचावस्करोगोप्यगुह्ययोः ॥ २३४ ॥ अभिहारःसंनहनेचौर्य्यमद्यपयोरपि। अवहारस्तुयुद्धादिविश्रामेग्राहचौरयोः ॥ २३५ ॥ निर्मञ्चणेऽपनेतव्येऽलंकारःकङ्कणादिषु। उपमादावकूपारःकूर्मराजसमुद्रयोः ॥ २३६ ॥ अवतारस्तुनद्यादितीर्थेऽवतरणेऽपिच। अग्निहोत्रोऽनलेहव्येऽसिपत्रोनरकान्तरे ॥ २३७ ॥ कोशकारेऽर्द्धचन्द्रस्तुगलहस्तेदुखण्डयोः। चन्द्रकेवाणभेदेचार्द्धचन्द्राचित्रिवृताभिदि ॥ २३८ ॥ आत्मवीरोबलवतिश्यालेपुत्रेविदूषके। आडम्बरस्तुसंरम्भेवृंहितेतूर्यनिस्वने ॥ २३९ ॥ इन्दीवरंनीलोत्पलमिन्दीवरीशतावरी। उपकारस्तूपकृतौविकीर्णकुसुमादिषु ॥ २४० ॥ उपचारस्तुसेवायांव्यवहारोपचार्ययोः। उदुम्बरःकुष्ठभेदेदेहल्यांपण्डकेतरे ॥ २४१ ॥ उदुम्बरंताम्रउपह्वरंरहसिसन्निधौ। उदन्तुरःकरालेस्यादुत्तुङ्गोत्कटदन्तयोः ॥ २४२ ॥ औदुम्बरोयमेरोगभेदेकर्मकरेऽन्तके। भृतिजीविनिभृत्येचकर्मकारीतुविम्बिका ॥ २४३ ॥ मूर्वाचकर्णिकारस्तुद्रुतमालेद्रुमोत्पले। करवीरोहयमारेकृपणेदैत्यभिद्यपि ॥ २४४ ॥ करवीरीपुत्रवत्यांसद्गव्यामदितावपि।

हे॰ चं॰
ना॰ ५

हे॰ चं॰ कलिकारस्तुधूम्याटेपीतमुण्डकरण्डयोः ॥ २४५ ॥ कर्णपूरःस्याच्छिरी
कां॰ ४ षेनीलोत्पलवसन्तयोः । कटंभराप्रसारिण्यांगोलायांगजयोषिति
॥ २४६ ॥ कलम्बिकायांरोहिण्यांवर्षाभूमूर्वयोरपि । कालंजरोभैरवाद्रौ
योगिचक्रस्यमेलके ॥ २४७ ॥ कादंबरंदधिसारेसिंधुमद्यप्रभेदयोः ।
कादंबरीकोकिलायांवाणीसारिकयोरपि ॥ २४८ ॥ कुम्भकारःकुलाले
ऽहौकुम्भकारीकुलत्थिका । कृष्णसारःशिंशिपायांमृगभेदेस्नुहीत
रौ ॥ २४९ ॥ गिरिसारःपुनर्लोहेलिङ्गेमलयपर्वते । घनसारस्तुक
र्पूरेदक्षिणावर्त्तपारदे ॥ २५० ॥ चर्मकारःपादूकृतिचर्मकार्यौषधीभिदि ।
चक्रधरोविष्णुसर्पेचक्रिषुग्रामजालिनि ॥ २५१ ॥ चराचरंजङ्गमेस्याद्दि
ष्टविष्टपयोरपि । चिचाटीरोघराटाकर्णवलिच्छागास्त्रविंदुभिः ॥ १५२ ॥
अङ्कितभालेचन्द्रेचतालपत्रंतुकुण्डले । स्यात्तालपत्रीरण्डायांतुङ्गभ
द्रोमदोत्कटे ॥ २५३ ॥ तुङ्गभद्रानदीभेदेतुलाधारस्तुलागुणे । वाणिजे
तुण्डिकेरीतुकार्पासीविम्बिकाऽपिच ॥ २५४ ॥ तोयधरोजलधरेस्तुनि
षणाख्यभेषजे । दशपुरंपत्तनेस्यान्मुस्तायांनीवृदंतरे ॥ २५५ ॥ दण्ड
धारोयमेराज्ञिदण्डयाचातुदिग्गजे । संयानेवरयात्रायांदिगम्बरस्तुश
ङ्करे ॥ २५६ ॥ अन्धकारेक्षपणकेस्याद्वस्त्ररहितेऽपिच । दुरोदरःपुनर्द्यू
तेद्यूतकारेपणेऽपिच ॥ २५७ ॥ देहयात्रायमपुरीगमनेभोजनेऽपि
च । द्वैमातुरोजरासन्धेहेरम्बेऽथधराधरः ॥ २५८ ॥ कृष्णेऽद्रौधाराधर

स्तुपयोद् करवालयोः । धाराङ्कुरः शीकरे स्याद्वाशीरे जलदोपले हे० चं०
॥ २५९ ॥ धार्तराष्ट्रः कौरवेऽहौ कृष्णास्यां घ्रसितच्छदे । धुन्धुमारो गृह ना० ४
धूमेन्द्रपभेदेन्द्रगोपयोः ॥ २६० ॥ पादालिकेऽप्यथ धुरन्धरो धुर्येधवद्रुमे ।
धृतराष्ट्रः खगे सर्पे स्तुराज्ञि क्षत्रियान्तरे ॥ २६१ ॥ धृतराष्ट्री हंसपद्यान्न
भस्वरः खगेऽम्बुदे । विद्याधरे समीरे च निशाचरस्तु राक्षसे ॥ २६२ ॥ सर्पे
घूके शृगाले च निशाचरी तु पांसुला । निषद्वरः स्मरे पङ्के निषद्वरी पुन
र्निशि ॥ २६३ नीलांबरो बलभद्रे राक्षसे क्रूरलोचने । प्रतीहारो द्वारि द्वाः
स्थे प्रतिकारः समे भटे ॥ २६४ ॥ प्रतिसरस्त्रमूपृष्ठे नियोज्यकरसूत्र
योः । मंत्रभेदे व्रणशुद्धे चारक्षे मण्डने स्रजि ॥ २६५ ॥ कङ्कणेऽथ प
रिकरः पर्यंकपरिवारयोः । प्रगाढगात्रिकाबन्धे विवेकारम्भयोर्गणे
॥ २६६ ॥ परिवारः परिजनेऽसिकोषेऽथ परंपरः । मृगभेदे प्रपौत्रादौ प
रंपराऽन्वये बधे ॥ २६७ ॥ परिपाट्यां परिसरः प्रान्तभूदेवयोर्मृतौ । प
क्षधरो यूथभ्रष्टपृथक्चारिगजे विधौ ॥ २६८ ॥ पयोधरः कुचे मेघे कोष
कारे कशेरुणि । नारिकेरे पाचटीरस्त्वपव्यां पारमंत्रिणि ॥ २६९ ॥ लो
हकांस्ये रजत्यां चे सिद्धारणकतनाशयोः । पारावारः पयोराशौ पारावारं त
टद्वये ॥ २७० ॥ पारिभद्रौ तु मन्दारनिम्बौ पीताम्बरोऽच्युते । नटे च पू
र्णपात्रं तु जलादिपूर्णभाजने ॥ २७१ ॥ बर्हापके बलभद्रस्तु नन्तेब
लशालिनि । बलभद्रा कुमार्यां स्याच्चायमाणौ षधावपि ॥ २७२ ॥ बावे

हे० चं० टीरस्त्वपुण्ड्रग्रामस्थ्यङ्कुरेगणिकासुते। बिन्दुतन्त्रंपुनःशारिफलकेचतुरङ्ग
ना० ४ के॥ २७३॥ महावीरोऽन्तिमजिनेपरपुष्टेजरटके। तार्क्ष्येकार्मुकेपवौमयू
रेसिंहेमखहुताशने॥ २७४॥ महामात्रःप्रधानेस्याद्धारोहकसमृद्ध
योः। मणिच्छिद्रातुमेदायामृषभाख्यौषधावपि॥ २७५॥ रथकारस्त
क्षणिस्यान्माहिष्यात्करणीसुते। रागसूत्रंपट्टसूत्रेतुलासूत्रेऽपिचक्व
चित्॥ २७६॥ लम्बोदरःस्यादाद्यूनेप्रमथानाञ्चनायके। लक्ष्मीपुत्रो
हयेकामेव्यवहारःस्थितौपणे॥ २७७॥ द्रुभेदेऽथव्यतिकरोव्यसन
व्यतिषङ्गयोः। वक्रानक्रौखलभ्रुकौविश्वम्भरोऽच्युतेन्द्रयोः॥ २७८॥
विश्वम्भरातुमेदिन्यांविभाकरोऽग्निसूर्ययोः। विश्वकद्रुस्तुमृगयाकुक्कुरेपि
शुनेध्वनौ॥ २७९॥ वीरभद्रोवीरणेऽश्वमेधाश्वेवीरसत्तमे। वीरतरो
वीरश्रेष्ठेशवेवीरतरंपुनः॥ २८०॥ वीरणोवीतिहोत्रस्तुदिवाकरहु
ताशयोः। शतपत्रोदार्वाघाटेराजकीरमयूरयोः॥ २८१॥ शतपत्रं
तुराजीवेसंप्रहारोगतौरणे। सहचरःपुनर्झिण्ट्यांवयस्येप्रतिबन्धके
॥ २८२॥ समाहारस्तुसंक्षेपएकत्रकरणेऽपिच। समुद्रारुग्राहभेदे
सेतुबन्धेतिमिङ्गिले॥ २८३॥ सालसारस्तरौहिङ्गौसुकुमारस्तुको
मले। पुंड्रेऽश्वेसूत्रधारस्तुशिल्पभेदेनटेन्द्रयोः॥ २८४॥ ❁॥ च
तुःस्वररान्ताः॥ ❁॥ अतिबलःस्यात्प्रबलेऽतिबलातुबलाभिदि। अक्ष
मालात्वक्षसूत्रेवसिष्ठस्यचयोषिति॥ २८५॥ अङ्कपालीपरीरम्भेस्या

क्रोष्ट्यामुपमार्गरि । उलूखले गुग्गुलौ दुम्बरे कलकलः पुनः ॥ २८६ ॥ ई॰ सं॰
कोलाहले सर्जरसे कन्दलो जटिद्रुमे । गर्दभाण्डेऽप्यथ कमण्डलूपर्क ना॰ ५
टिकुण्डिके ॥ २८७ ॥ कुतूहलं प्रशस्तेऽद्भुते खनमालो बलाहके । धूमेऽ
थगण्डशैलोऽद्रिच्युतस्थूलाश्मभालयोः ॥ २८८ ॥ गन्धफली तु प्रिय
ङ्गौ चम्पकस्य च कोरके । जलाञ्चलं तु शैवाले स्वतस्त्वजलनिर्गमे ॥ २८९ ॥
दलामलं पुनर्दमनके मरुबकेऽपि च । ध्वनिनाला तु वल्लक्यां वेणुकाह
लयोरपि ॥ २९० ॥ परिमलो विमर्दोत्थे हृद्यगन्धे विमर्दने । पोटगलो
नले काशे भषे बकुफलः पुनः ॥ २९१ ॥ नीपे बकुफली फलौ भस्मतूलं पुन
र्हिमे । ग्रामकूटे पांशुवर्षे भद्रकाल्यौषधीभिदि ॥ २९२ ॥ गन्धोल्यां हर
पत्न्यां च महाकालो महेश्वरे । किंपाके गणभेदे च मदकलो मदद्विपे ॥ २९३ ॥
मदेनाव्यक्तवचने महानीलो मणेर्भिदि । नागभेदे भृङ्गराजे महाबलो बली
यसि ॥ २९४ ॥ वायौ महाबलं सीसे महाबला बलाभिदि । मणिमाला
हारे स्त्रीणां दशनक्षतभिद्यपि ॥ २९५ ॥ मुक्ताफलं घनसारे मौक्ति
के लवलीफले । मृत्युफलो महाकाले मृत्युफली कदल्यथ ॥ २९६ ॥
बबफलो मांसिकायां कुटजत्वचिसारयोः । वायुफलं तु जलदोपले शक्र
शरासने ॥ २९७ ॥ वातकेलिः कलालापे षिड्गानां दन्तलेखने । विचि
त्रिलो दमनके महाश्याम अथ बृहन्नलः ॥ २९८ ॥ महापोटगले पार्थे स
दाफल उदुम्बरे । नालिकेरे स्कंधफले हस्तिमल्लः सुरद्विपे ॥ २९९ ॥

 विघ्नेशेहलाहलस्तुहयभालेहलेविषे। वृष्ट्यांचहरितालीतुदूर्वागगनरेख
 योः ॥ ३०० ॥ कृपाणलतिकायांच ॥ ❁ ॥ चतुःस्वरलान्ताः ॥ ❁ ॥ ऽनुभा
वोभावस्तूचनै। प्रभावेनिश्चयेऽथापह्नवःस्नेहापलापयोः ॥ ३०१ ॥ अभि
षवःक्रतौमद्यसंधानस्नानयोरपि। आदीनवःपुनर्दोषेपरिक्लिष्टदुरंत
योः ॥ ३०२ ॥ उपप्लवोराहूत्पातौकुशीलवस्तुचारणे। प्राचेतसेयाज
केऽपिजलबिल्वस्तुकर्कटे॥ ३०३ ॥ जलचत्वरेपंचाङ्गेजीवंजीवःखगांत
रे। द्रुमभेदेचकोरेचधामार्गवस्तुघोषके ॥ ३०४ ॥ अपामार्गेऽप्यथपारि
प्लवाव्याकुलचंचलौ। पराभवस्तिरस्कारेनाशेपाराशवोऽयसि ॥ ३०५ ॥
शूद्रायांविप्रतनयेतनयेचपरस्त्रियां। पुटग्रीवस्तुगर्गर्यांताम्रस्यकल
शेऽपिच ॥ ३०६ ॥ बलदेवस्तुकालिंदीकर्षणेमातरिश्वनि। बलदेवात्रा
यमाणारोहिताश्वोहुताशने ॥ ३०७ ॥ हरिचन्द्रनृपसुतेसहदेवस्तु
पाण्डवे। सहदेवाबलादण्डोत्पलयोःशारिवौषधे ॥ ३०८ ॥ सहदेवी
तुसर्पाक्ष्यां ॥ ❁ ॥ चतुःस्वरवान्ताः ॥ ❁ ॥ अपदेशस्तुकारणे। व्याजेल
क्ष्येऽप्यपभ्रंशोभाषाभेदापशब्दयोः ॥ ३०९ ॥ पतनेचाश्रयाशस्तुबह्नौ
वाश्रयनाशके। उपदंशोऽवदंशेस्यान्मेहनस्यामयेऽपिच ॥ ३१० ॥ उ
पस्पर्शस्त्वाचमनस्नानयोःस्पर्शमात्रके। खण्डपर्शुःशिवेराहोभार्गवेचूर्ण
लेपिनि ॥ ३११ ॥ खण्डामलकभैषज्येजीवितेशःप्रियेयमे। जीवितस्त्वा
भिजीवात्वोनगपाशस्तुयोषितां ॥ ३१२ ॥ करणेवहणास्त्रेचप्रतिष्ठाशः

पुरोगमे। वार्त्ताहरे सहाये च पुरोडाशो हविर्भिदि ॥ ३१३ ॥ पुनरो षे० चं०
घेसो मरसे च मस्यापिष्टकस्य च । ॥ ❁ ॥ चतुःस्वरशान्ताः ॥ ❁ ना० ४
॥ अंबरीषो नृपे स्तूयेयुधिभ्राष्ट्रकिशोरयोः ॥ ३१४ ॥ आम्रातके
खण्डपरशावनुकर्षोऽनुकर्षणे। रथस्याधोदारुणि चानिमेषः सुर
मत्स्ययोः ॥ ३१५ ॥ अनुतर्षोऽभिलाषे स्यात्तृषा चषकयोरपि। अ
लम्बुषश्छर्दनेऽलम्बुषा स्वःपण्ययोषिति ॥ ३१६ ॥ गण्डीर्योकिं
पुरुषस्तु किन्नरे लोकभिद्यपि। देववृक्षो मन्दारादौ गुग्गुलौ विषमच्छदे
॥ ३१७ ॥ नन्दिघोषो वन्दिघोषेस्यन्दने च किरीटिनः। परिवेषः परि
वृतौ परिधौ परिवेषणे ॥ ३१८ ॥ परिघोषः स्यादवाच्ये निनादे जलद
ध्वनौ। पलङ्कषा यातुधाने पलङ्कषा तु किंशुके ॥ ३१९ ॥ गोक्षुरे गुग्गुलौ
लाक्षारास्नामुण्डीरिकासु च। भूतवृक्षस्तु शाखोटे श्योनाक कलिवृक्षयोः
॥ ३२० ॥ महाघोषो महाशब्दे स्यान्महाघोषमापणे। महाघोषा शृ
ङ्ग्यां षध्वांराजवृक्षः पियालके ॥ ३२१ ॥ सुवर्णालुतरौ वा तरूषः शक्र
शरासने। वातूलोन्को चयोश्चापि विशालाक्षो महेश्वरे ॥ ३२२ ॥ तार्क्ष्ये
विशालनेत्रे च वीरवृक्षोऽर्ज्जुनद्रुमे। भल्लातसङ्कटाक्षस्तु कठाक्षिशिधव
द्रुमे ॥ ३२३ ॥ ❁ ॥ चतुःस्वरषान्ताः ॥ ❁ ॥ अधिवासः स्यान्निवासे संस्का
रे धूपनादिभिः। अवध्वंसस्तु निन्दायां परित्यागेऽवचूर्णने ॥ ३२४ ॥ का
लहंसो राजहंसे कादम्बे न्टपसत्तमे। कुम्भीनसस्त्वहौ कुम्भीनसी लवणा

हे॰ चं॰ मातरि ॥ ३२५ ॥ घनरसोऽम्बुकर्पूरे सान्द्रे सिद्धरसे द्रवे । मोरटे पीलु
ना॰ ४ पर्ण्यां च यन्द्रह्रासोऽसि माचके ॥ ३२६ ॥ दशग्रीवकृपाणे च तामरस
न्तु पङ्कजे । ताम्रकाञ्चनयोर्दिव्यचक्षुस्त्वन्धे सुलोचने ॥ ३२७ ॥ सु
गन्धभेदे निःश्रेयसन्तु कल्याणमोक्षयोः । नीलाञ्जसा नदीभेदेऽप्सरोभेदे त
डित्यपि ॥ ३२८ ॥ पुनर्वसुः स्यान्नक्षत्रे कात्यायनमुनावपि । पौर्णमासो
यागभेदे पौर्णमासी तु पूर्णिमा ॥ ३२९ ॥ मलीमसः पुनः पुष्पकासीसे म
लिनायसोः । महारसः पुनरिक्षौ खर्जूरद्रौ कशेरुणि ॥ ३३० ॥ म
धुरसा तु मूर्वायां द्राक्षादुग्धिकयोरपि । राजहंसस्तु कादम्बे कलहंसे नृपो
त्तमे ॥ ३३१ ॥ रसेरसो रससिद्धबलौ शृङ्गारहासयोः । षष्ठीजाग
रके रसगोष्ठ्यां विभावसुः पुनः ॥ ३३२ ॥ निशि गन्धर्वभेदे च विभावसु
स्तु भास्करे । हुताशने हारभेदे चंद्रे श्वःश्रेयसं सुखे ॥ ३३३ ॥ घनानन्दे
च भद्रे च सर्वरसस्तु धूणके । वाद्यभेदे ॥ ❁ ॥ चतुःस्वरसान्ताः ॥ ❁
॥ ऽवग्रहस्तु ज्ञानभेदे गजालिके ॥ ३३४ ॥ प्रतिबन्धे वृष्टिरोधेऽप्यभिग्र
हस्तु गौरवे । अभियोगेऽभिग्रहणेऽवरोहस्तु लतोद्गमे ॥ ३३५ ॥ तरो
रङ्गेऽवतरणेऽप्यश्वारोहोऽश्ववारके । अश्वारोहाऽश्वगन्धायामुपग्रहो
ऽनुकूलवान् ॥ ३३६ ॥ वंद्युपयोगयोस्तूपनाहो वीणानिबन्धने । व्रणा
लेपनपिण्डे च गन्धवाहो मृगेऽनिले ॥ ३३७ ॥ गन्धवहा तु नासायां तमोप
हो जिने रवौ । चंद्रेऽग्नौ तनूरुहस्तु पुत्रे गरुति लोम्नि च ॥ ३३८ ॥ प्र

तिग्रहः सैन्यपृष्ठेग्रहभेदे पतद्ग्रहे । क्रियाकारे दानद्रव्ये तद्ग्रहे स्त्री ग्रहावपि ॥ ३३९ ॥ परिग्रहः परिजने पत्न्यां मूल्ये च संग्रहे । पितामहः पद्मयोनौ जनके जनकस्य च ॥ ३४० ॥ वराराेहो गजारोहे वरारोहा कटावपि । सर्वंसहः सहिष्णौ स्यात्सर्वंसहा पुनः क्षितौ ॥ ३४१ ॥ हे० चं०
ना० ५

इत्याचार्य्यहेमचन्द्रविरचितेऽनेकार्थसंग्रहे चतुःस्वरकाण्डस्तुर्थः



स्यादास्फुरितकं हासनखघातविशेषयोः । कक्षावेक्षकः स्युद्यानपालकोद्यानपालयोः ॥ १ ॥ दाःस्थे षिङ्गे कवौ रङ्गाजीवेऽथ कटखादकः । खादके काचकलशे भृङ्गारे बलिपुच्छयोः ॥ २ ॥ क्रमिकण्टकश्चित्रायामुदुम्बरविडङ्गयोः । स्याज्जागरिकं भक्ष्यकारके मङ्गलेऽपि च ॥ ३ ॥ चिलिमीलिका खद्योते कण्ठीभेदे तडित्यपि । जलकरङ्कः स्यान्मेघे नारिकेरतरोः फले ॥ ४ ॥ शंखे नवफलिकातु नवेन वरजः स्त्रियाम् । नागवारिको गणास्यराजे राजेभहस्तिपे ॥ ५ ॥ चित्रमेखले गरुडेऽप्यथस्याद्व्यवहारिका । लोमकया चेंगुदी वर्द्धनी प्यथ व्रीहिराजकः ॥ ६ ॥ चीनान्नेकामलिकायामप्यथो शतपर्विका । स्याद् दूर्वावचयोः शीतचंपकोदिनतर्पणे ॥ ७ ॥ हेमपुष्पकस्तुंपके हेमपुष्पिका यूथिका । ॥ ❁ ॥ पञ्चस्वरकाण्डः ॥ ❁ ॥ मलिनमुखस्तु गोलांगूले प्रेतेऽनिले खले ॥ ८ ॥ शीतमयूखः कर्पूरे चंद्रेऽथ सर्वतोमुखः । विधावात्मनि भद्रे च सर्वतोमुखमंबुखे ना० ५

हे०चं० ॥ ९ ॥ ❁ ॥ पञ्चस्वरखान्ताः ॥ ❁ ॥ कथाप्रसङ्गोवार्त्तायांविषस्यचचि
का० ५ कित्सके । नाडीतरङ्गःकाकोलेहिंडकेरतहिंडके ॥ १० ॥ ❁ ॥ पञ्च
स्वरगान्ताः ॥ ❁ ॥ रतनाराचोमन्मथेमुनिस्त्रीणांवशीकृतौ । ॥ ❁ ॥
पञ्चस्वरचान्ताः ॥ ❁ ॥ ऋषभध्वजःप्रथमजिनेन्द्रेशशिशेखरे
॥ ११ ॥ मुनिभेषजन्त्वगस्तिपथ्यायांलङ्घनेऽपिच । ॥ ❁ ॥ पञ्चस्व
रजान्ताः ॥ ❁ ॥ दशनोच्छिष्टोनिःश्वासेचुम्बनेदन्तवाससि ॥ १२ ॥
॥ ❁ ॥ पञ्चस्वरटान्ताः ॥ ❁ ॥ अवग्रहणंरीढायांरोधनेऽथावतारणं
वस्त्रांचलार्चनेभूतावशेषेप्रविदारणं ॥ १३ ॥ दारणेयुधिचपरिभाषणं
तुप्रजल्पने । नियमेनिन्द्रोपालंभेक्तौचाथोमत्तवारणः ॥ १४ ॥ प्रासा
दवीथीवरण्डेमत्तहस्तिन्यपाश्रये । मंडूकपर्णोऽरलकशोणकयोःकपी
तने ॥ १५ ॥ मंडूकपर्णीमञ्जिष्ठाब्राह्म्योर्गोजिह्विकौषधौ । स्याद्रोमहर्ष
णाख्यातुरोमोद्गमेविभीतके ॥ १६ ॥ वातरायणःक्रकचेसायकेशरसं
क्रमे । निःप्रयोजननरेचाप्य ॥ ❁ ॥ पञ्चस्वरणान्ताः ॥ ❁ ॥ व
लोकितमीक्षिते ॥ १७ ॥ अवलोकितस्तुबुद्धेऽपराजितोऽच्युतेह
रे । अजितेऽपराजितातुदुर्गाश्वेताजयंत्यपि ॥ १८ ॥ उपधूपितआस
न्नमरणेधूपितेऽपिच । स्याद्गणाधिपतिर्विघ्ननायकेपार्वतीपतौ ॥ १९ ॥
पृथिवीपतिस्तुभूपेकृतान्तेऋषभौषधे । मूर्द्धाभिषिक्तःप्रधानेक्षत्रियक्षि
तिपालयोः ॥ २० ॥ यादसांपतिःपाश्यब्धौर्वसन्तदूतआम्रके । पि

केपञ्चमण्गेवसन्तदूत्यतिमुक्तके ॥ २१ ॥ पाटलायामथ ॥ ❁ ॥ प हे॰ पं॰
ञ्चस्वरतान्ताः ॥ ❁ ॥ सहस्रपादोयज्ञपूरुषे । कारण्डस्सूर्ययो ॥ ❁ ना॰ ५
॥ पञ्चस्वरदान्ताः ॥ ❁ ॥ यैंजनगन्धाव्यासमातरि ॥ २२ ॥ कस्तू
रीसीतयोस्त्रा ॥ ❁ ॥ पञ्चस्वरधान्ताः ॥ ❁ ॥ ऽतिसर्जनंबधदानयोः ।
अपवर्जनंनिर्वाणेपरित्यागेविद्यापिते ॥ २३ ॥ अभिनिष्क्रामस्तुवर्गेविस
र्गेऽथानुवासनं । स्नेहनेधूपनेचान्तावसायीश्वपचेमुनौ ॥ २४ ॥ स्यादुप
स्पर्शनंस्नाने स्पर्शाचमनयोरपि । उपसम्पन्नंपर्याप्तेसंस्कृतप्राप्तयोर्मृतौ
॥ २५ ॥ कलानुनादीचटकेचञ्चरीकेकपिञ्जले । गन्धमादनःकप्यद्रि
भिदोरलौचगन्धके ॥ २६ ॥ गन्धमादनोस्तुरण्यामथजायानुजीविनः ।
बकाश्विननटद्रुःस्थाःस्याद्धूमकेतनोऽनले ॥ २७ ॥ ग्रहभेदेचप्रतिपा
दनंबोधनदानयोः । पद्मलाञ्छनोधनदेलोकेशेरविवेधसोः ॥ २८ ॥
पद्मलाञ्छनातारायांसरस्वत्यांश्रियामपि । पीतचन्दनंस्याद्धरिद्रायांक
श्मीरजन्मनि ॥ २९ ॥ महारजनंकुसुम्भेस्वर्णेऽथमधुसूदनः । भ्र
मरेकेशवेमृत्युवञ्चनःश्रीफलेहरे ॥ ३० ॥ द्रोणकाकेऽप्यथवरचन्दनंदे
वदारुणि । कालेयेवरवर्णिन्यंगनालाक्षाप्रियंगुषु ॥ ३१ ॥ रोचनायांह
रिद्रायामथस्याच्छकुलादनी । कटुमांसीकिञ्जुलिकाजलपिप्पलिकासु
च ॥ ३२ ॥ शालङ्कायनोनंदिगृध्योःस्याच्छ्वेतवाहनःशशी । पार्थेऽथसह
स्रवेधीचुक्रेसहस्रवेधितु ॥ ३३ ॥ हिङ्गौषा ॥ ❁ ॥ पञ्चस्वरनान्ताः

है०च० ॥ ❁ ॥ ऽमरपुष्पस्तु केतकेचूतकाशयोः ।॥ ❁ ॥ पञ्चस्वरपान्ताः ॥
भा० ५ ❁ ॥ गोरक्षजंबूर्गोधूमेधान्येगोरक्षतंडुले ॥ ३४ ॥ धूलीकदंबस्तिनिशेनी
पिवरुणपादपे । मृगालजंबूर्गोडिम्बेफलेचबदरीतरौ ॥ ३५ ॥ ❁ ॥ प
ञ्चस्वरबान्ताः ॥ ❁ ॥ अभ्युपगमःसमीपागमनेस्वीकृतावपि । नक्ष
त्रनेमिःशीतांशुरेवत्योश्चानपादिषु ॥ ३६ ॥ ❁ ॥ पञ्चस्वरमान्ताः ॥ ❁ ॥
कालानुसार्य्यःशैलेयेकालेयेशिंशिपातरौ । अथस्याद्दुग्धतालीयंदुग्धाग्रदु
ग्धफेनयोः ॥ ३७ ॥ वृषाकपायीजीवंत्यांशतावर्य्यमयोःश्रियां । ॥ ❁ ॥
पञ्चस्वरयान्ताः ॥ ❁ ॥ उत्पलपत्रंतूत्पलदलेस्त्रीणांनखक्षते ॥ ३८ ॥
कपिलधारचिदशापगायांतीर्थभिद्यपि । तमालपत्रंतिलकेतापिच्छेपत्र
केऽपिच ॥ ३९ ॥ तालीशपत्रंतुतामलक्यांतालीशकेक्वचित् । पादच
त्वरःकरकेपरदोषैकभाषिणि ॥ ४० ॥ सैकतेछगलेऽश्वत्थद्रुमेऽथपांशु
चामरः । बर्द्धापकेप्रशंसायांदूर्वाचितत्तटीभुवि ॥ ४१ ॥ पुरोटोधूलि
पुच्छेपीतकावेरंतुकुङ्कुमे । पित्तलेवस्त्वोकसारस्त्विन्द्रस्यधनदस्यच
॥ ४२ ॥ नलिनीपुर्य्योर्विप्रतिसारस्त्वनुशयेरुषि । वीक्षान्त्येसर्वतोभद्र
स्त्वोकोभित्काव्यचित्रयोः ॥ ४३ ॥ निम्बेऽथसर्वतोभद्रागम्भार्यानटयो
षिति । समभिहारस्त्वाभीक्ष्ण्येभृशार्थेऽथा ॥ ❁ ॥ पञ्चस्वररान्ताः ॥ ❁
॥ स्रुतीबलः ॥ ४४ ॥ शौंडिकेयस्त्वन्युदशडपालोमत्स्याहिभेदयोः ।
स्याट्टिककुरुडलोबलभद्रेकिम्पुरुषेश्वरे ॥ ४५ ॥ द्वापीटपालस्तुकेद्रि

पातेजलनिधावपि । स्यात्पाण्डुकम्बलः श्वेतकम्बलग्रावभेदयोः ॥ ४६॥ हे॰ चं॰

सुरतताली शिरःस्रक्दूत्योरथा ॥ ❁ ॥ पञ्चस्वरतांताः ॥ ❁ ॥ शि नां॰ ५

तम्भवः । अन्नादौतृप्तौ च ॥ ❁ ॥ पञ्चस्वरवांताः ॥ ❁ ॥ नभस्यम

स्यंद्रमाययोः ॥ ४७ ॥ पिचापूपेहिंगुनिर्यासेहिंगुरसनिम्बयोः ।

हिरण्यरेताज्वलनेसहस्रकिरणेऽपिच ॥ ४८ ॥

इत्याचार्यहेमचंद्रविरचितेऽनेकार्थसंग्रहे पञ्चस्वरकाण्डःपञ्चमः



ग्रामम‌ञ्जरिकायुद्धशृंग्योर्मातुलपुत्रकः । धत्तूरकस्यचफलेमातुलस्यचनं नां॰ ६

द्दने ॥ १ ॥ लूतामर्कटकःपुंसीनवमालिकयोःकपौ । वर्णविलोडकः

काव्यच्छायाहृत्संधिचौरयोः ॥ २ ॥ सिंदूरतिलकोहस्तीसिंदूरतिलका

ङ्गना । ॥ ❁ ॥ षट्स्वरकान्ताः ॥ ❁ ॥ दोहदलक्षणङ्गर्भस्यात्सन्धौ

यौवनस्यच ॥ ३ ॥ यौवनलक्षणंवक्षोरुहेचलवणिम्निच । ॥ ❁ ॥

षट्स्वरणान्ताः ॥ ❁ ॥ अर्द्धपारावतश्चित्रकण्ठेस्यात्तित्तिरावपि ॥ ४ ॥

॥ ❁ ॥ षट्स्वरतान्ताः ॥ ❁ ॥ प्रत्युद्गमनीयमुपस्थेयेधौतांशुकद्वये ।

विष्वक्सेनप्रियावाराहीमणौ षष्ठ्यांश्रियामपि ॥ ५ ॥

इत्याचार्यहेमचंद्रविरचितेऽनेकार्थसंग्रहेषट्स्वरकांडःषष्ठः



हे०चं० अथाव्ययानि वक्ष्यन्ते प्राग्वदेव स्वरक्रमात् । अ स्वल्पार्थेऽप्यभावेऽपि स्या-
ना०७ दास्मरणवाक्ययोः ॥ १ ॥ आङीषदर्थेऽभिव्याप्तौ क्रियायोगेऽवधावपि ।
आ स्यादवधृतिस्मृत्योराः सन्तापप्रकोपयोः ॥ २ ॥ इः स्यात्खेदे प्रकोपोक्तावी
क्रोधे दुःखभावने । प्रत्यक्षे संनिधौ वाप्युरोषोक्त्यामन्त्रणार्थयोः ॥ ३ ॥ उ
म्वधाने प्रकाशे च प्रागल्भ्यास्वास्थ्ययाचिषु । विभागे बन्धने मोक्षे भावे लाभा-
द्धकर्मणोः ॥ ४ ॥ ऊं प्रश्नेऽङ्गीकृतौ रोषेऽप्यूं प्रश्ने रोषवाचि च । ऋ कुत्सावा-
क्ययोः रे रे हे है शब्दाविव स्मृतौ ॥ ५ ॥ आमन्त्रणाह्वानयोरैं प्रश्नेऽङ्गीकृता-
वपि । ओ औ शब्दौ तु हे हौ च हूतौ सम्बोधनेऽपि च ॥ ६ ॥ कुपापीय-
सि कुत्सायामीषदर्थे निवारणे । कं सुखं वारि शिरसोः किं प्रश्ने कुत्सितेऽपि
च ॥ ७ ॥ चान्योन्यार्थसमाहारान्वाचयेषु समुच्चये । हेतौ पक्षान्तरे तु-
ल्ययोगिताविनियोगयोः ॥ ८ ॥ पादपूर्णेऽवधृतौ च तु विशेषेऽवधारणे ।
समुच्चये पादपूर्त्तौ धिग्निर्भर्त्सननिन्दयोः ॥ ९ ॥ निस्याक्षेपे भृशार्थे च
नित्यार्थे दानकर्मणि । सन्निधानोपरमयोः संश्रयाश्रयणेषु ॥ १० ॥
मोक्षेऽन्तभावेऽधोभावे बन्धने कौशलेऽपि च । नु प्रश्नेऽनुशयेऽतीर्थे स्याद्वि-
कल्पवितर्कयोः ॥ ११ ॥ नञीषदर्थे सादृश्ये तद्विरुद्धतदन्ययोः ।
व्यतिक्रमे स्वरूपार्थे निषेधाभावयोरपि ॥ १२ ॥ निर्निश्चये क्रान्ताद्यर्थे वि-
शेषप्रतिषेधयोः । प्राक्पूर्वस्मिन्प्रभाते दिग्देशकालेष्ववान्तरे ॥ १३ ॥
अतीतेऽग्रेऽप्यथ प्रस्यादन्ताद्यर्थे प्रकर्षयोः । वा समुच्चय एवार्थे उपमानविक-

स्ययोः ॥ १४ ॥ विश्लेष्येऽतीतेनानार्थे वैहे तैपादपूरणे । शङ्कल्याणेस्तु 
क्षेऽपिस्वित्परिप्रश्नवितर्कयोः ॥ १५ ॥ संसंगार्थेप्रकृष्टार्थेशोभनार्थेसमु 
च्चयोः । स्मातीतेपादपूर्त्तौहेसंबुद्धौपादपूरणे ॥ १६ ॥ हास्तुखदुःखवि
षादेषुहिहेतावधारणे । विशेषेपादपूर्त्तौचहीविस्मयविषादयोः
॥ १७ ॥ दुःखहेतौचहंरोषभाषणेऽनुशयेऽपिच । ऊंवितर्केपरिप्रश्ने
स्यात्स्मनागल्पमन्दयोः ॥ १८ ॥ अङ्गसम्बोधनेहर्षेपुनरर्थेचकिन्त्व
तु । साकल्यारम्भयोस्तिर्यक्स्यात्तिरश्चीनवक्रयोः ॥ १९ ॥ हिरुग्म
ध्येविनार्थेऽतिप्रकर्षेलंघनेभृशे । स्तुतावसंप्रतिक्षेपेऽप्यस्तुपीडानिषेधयोः
॥ २० ॥ असूयायामनुज्ञायामाराद्दूरसमीपयोः । इतिस्वरूपेसान्नि
ध्येविवक्षानियमेमते ॥ २१ ॥ हंतौप्रकारप्रत्यक्षप्रकाशेऽप्यवधारणे ।
एवमर्थेसमाप्तौस्यादुतप्रश्नवितर्कयोः ॥ २२ ॥ समुच्चयेवितर्केचयाव
त्तावदिवावधौ । कार्त्स्न्येऽवधारणेमानेप्रतीत्यंभूतभागयोः ॥ २३ ॥ प्रति
ष्ठानेप्रतिनिधौवीप्सालक्षणयोरपि । पश्चात्प्रतीच्यांचरमेवतामन्त्रणखे
दयोः ॥ २४ ॥ धृत्याश्चर्यानुकंपासुयद्वत्प्रश्नवितर्कयोः । शश्वत्सह
पुनर्नित्येसकृत्सहैकवारयोः ॥ २५ ॥ स्वस्त्याशीःक्षेमपुण्यादौसाक्षात्प्र
त्यक्षतुल्ययोः । हन्तदानेऽनुकंपायांवाक्यारंभविषादयोः ॥ २६ ॥ निश्च
येचप्रमादेचाथोऽथस्यातांसमुच्चये । मङ्गलेसंशयारंभाधिकारानन्तरेषुच
॥ २७ ॥ अन्वादेशेप्रतिज्ञायांप्रश्नसाकल्ययोरपि । तथास्यान्निश्चयेपू

61

हे०थं० ष्टप्रतिवाक्येसमुच्चये ॥ २८ ॥ यथानिदर्शनेद्वौतूद्देशेनिर्देशसाम्ययोः
ना०७ । हेतूपपत्तौचवृथात्वविधौस्यादनर्थके ॥ २९ ॥ अनुलक्षणवीप्सेत्थं
भूतभागेषुसंनिधौ । सादृश्यायामहीनेषुपश्चादर्थसहार्थयोः ॥ ३० ॥
नन्वाक्षेपेपरिप्रश्नेप्रत्युक्तावधारणे । वाक्यारम्भेऽप्यनुनयामन्त्रणानुज्ञ
योरपि ॥ ३१ ॥ नानाविनोभयानेकार्थेषुस्यान्नेतुकारणे । युक्तेसाम्येऽप्यऽ
पत्तेयेऽपकृष्टेवर्जनेमुदि ॥ ३२ ॥ विपर्ययेवियोगेचनिर्देशेविकृतावपि ॥
अपिसम्भावनाशङ्कागर्हणार्हसमुच्चये ॥ ३३ ॥ प्रश्नेयुक्तपदार्थेषु
क्रियाकारक्रियासुच । उपासन्नेहीनेऽधिकेसादृश्यप्रतियत्नयोः ॥ ३४ ॥
तद्योगव्याप्तिपूजासुशक्तावारम्भदानयोः । दक्षिणाचार्यकरणादोषा
ख्यानात्ययेषुच ॥ ३५ ॥ अभिवीप्सालक्षणयोरित्थंभूताभिमुख्ययोः । स्या
त्समासन्निधानार्थेहार्थेऽलञ्चनिरर्थके ॥ ३६ ॥ अलङ्करणसामर्थ्यप
र्याप्तिष्ववधारणे । एवंप्रकारेऽङ्गीकृतेऽवधारणेसमन्वये ॥ ३७ ॥ कथं
प्रश्नेप्रकारार्थेसम्भ्रमेसम्भवेऽपिच । काममसूयानुगमेप्रकामेऽनुमतावपि
॥ ३८ ॥ किमुसम्भावनायांविमर्शेजोषंतुसुखेस्तुतौ । मौनलंघनयोश्चा
पिनामप्रकाश्यकुत्सयोः ॥ ३९ ॥ सम्भाव्याभ्युपगमयोरलीकेविस्मये
क्रुधि । नूनंतर्केनिश्चितेचप्राध्वंनमानुकूलयोः ॥ ४० ॥ भृशंप्रकर्षेऽत्य
र्थेचसामित्वर्द्धेजुगुप्सिते । अयिप्रश्नेऽनुनयेस्याद्येक्रोधविषादयोः
॥ ४१ ॥ सम्भ्रमेस्मरणेचान्तरंतुस्वीकारमध्ययोः । ऊर्यूररीचोररीचवि

स्वारेऽङ्गीकृतावपि ॥ ४२॥ पराभिमुख्येप्राधान्येविमोक्षप्रातिलोम्ययोः । हे॰चं॰
गतिधर्षणहिंसासुभृशार्थेविक्रमेऽपिच ॥ ४३॥ परिव्याधावुपरमेवर्ज्जे ना॰७
नेलक्षणादिषु । आलिङ्गनेचशोकेचपूजायांदोषकीर्त्तने ॥ ४४ ॥ भूषणे
सर्वतोभावेव्याप्तौनिवसनेऽपिच । पुराभविष्यदासन्नेचिरातीतप्रतीपयोः
॥ ४५॥ पुनरप्रथमेभेदेकिलसम्भाव्यवार्त्तयोः । हेत्वरुच्योरलीकेचख
लुवीप्सानिषेधयोः ॥ ४६ ॥ जिज्ञासायामनुनयेवाक्यालङ्करणेऽपि
च । अवालम्बनविक्रान्तवियोगव्याप्तिशुद्धिषु ॥ ४७॥ एवौपम्येप
रिभवईषदर्थेऽवधारणे । उषारात्रौनक्तंचदोषानिशिनिशामुखे
॥ ४८ ॥ मंक्षुशीघ्रेभृशेतत्त्वेऽतोहेतोरपदेशवत् । निर्देशेपञ्चम्यर्थेचे
तोयतस्त्वविभागवत् ॥ ४९ ॥ पञ्चम्यर्थेनियमेचततआदौकथान्तरे ।
पञ्चम्यर्थेपरिप्रश्नेतिरोऽन्तर्द्धौतिरश्चिच ॥ ५० ॥ नीचैःस्वैरल्पनीचेषुप्र
दुर्नामप्रकाशयोः । पुरोग्रेप्रथमेचस्यान्मिथोऽन्योन्यंरहस्यपि ॥ ५१ ॥ अ
होधिगर्थेशोकेचकरुणार्थविषादयोः । आहक्षेपेनियोगेचाप्यहोप्रश्न
विचारयोः ॥ ५२ ॥ सहसम्बन्धसादृश्ययौगपद्यसमृद्धिषु । साकल्ये
विद्यमानेचहीहीविस्मयहास्ययोः ॥ ५३ ॥ ननुप्रश्नेचदुष्टोक्तौसम्यक्
वादेस्तुतावपि । अपष्ठुचारौनिर्द्दोषेकिमुतप्रश्नवादयोः ॥ ५४ ॥ विक
ल्पेऽतिशयेचापिपुरस्तात्प्रथमेऽग्रतः । पूर्वस्याञ्चपुरार्थेचाभीक्ष्णंशीघ्रप्रकर्ष
योः ॥ ५५ ॥ पौनःपुन्येसन्ततेचावश्यंनिश्चयनित्ययोः । इदानींसाम्प्र

हे०चं० तंवाक्यालङ्कारेतद्दिनंपुनः ॥ ५६ ॥ दिनमध्येप्रतिदिनेसांप्रतन्त्वचितेऽ
ना०७ धुना । समयानिकषाचान्तर्निकटेचान्तरापुनः ॥ ५७ ॥ विनार्थेसन्नि
धौमध्येऽभितोऽभिमुखकार्त्स्न्ययोः । समयोभयतःशीघ्रेष्वग्रतःप्रथमाग्र
योः ॥ ५८ ॥ अन्ततोऽवयवेत्वेक्षापञ्चम्यर्थेपुरासने । पुरतोग्राद्ययोः
पूर्वेद्युर्धर्माह्नप्रभातयोः ॥ ५९ ॥ अहहेत्यद्भुतेखेदेऽन्तरेणान्तर्विनार्थ
योः । अहोवतानुकंपायांखेदामंत्रणयोरपि ॥ ६० ॥

इतिहेमचन्द्रविरचितेऽनेकार्थसंग्रहेऽव्ययानेकार्थाधिकारः

समाप्तश्चायं हैमकोशः ॥





॥ शुद्धिपत्रंहेमचन्द्रकोषस्य ॥

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १ | ९ | भूरण | भूषण |
| ४ | २ | दरः | धरः |
| ६ | ८ | वत्य | वत्व |
| ६ | १२ | थश्लाघ्या | सुश्लाघा |
| ८ | ५ | सविष | सविष |
| ८ | १२ | स्वान्तर | व्यन्तर |
| ८ | १४ | ईशासन | ईशान |
| ११ | १२ | सुखमारः | सुषमारः |
| ११ | १४ | सुखमा | सुषमा |
| १२ | ९ | पाल्गुनः | फाल्गुनः |
| १२ | १६ | मेघकालागमऽ | मेघात्कालागमौ |
| १४ | ६ | भ्राट्रु | भ्रोतु |
| २० | ९ | विपश्श्री | विपश्यी |
| २० | १० | क्रातुच्छन्दः | क्रकुच्छन्दः |

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २१ | ४ | पिटका | पिटिका |
| २२ | १५ | श्लिष्ट | ल्लिष्ट |
| २३ | ६ | मता | रते |
| २३ | १४ | ल्युपायः | भ्युपायः |
| २५ | ५ | महीयसी | महीयसि |
| २७ | १ | ममर्षे | ममर्षः |
| २९ | १६ | स्थैर्य्य | स्थैर्य्यं |
| ३१ | ६ | तापी | तायी |
| ३२ | २ | त्त्व | त्त्व |
| ३८ | ११ | प्रतिसायः | प्रतिस्यायः |
| ३९ | १ | स्वास्थं | स्वास्थ्यं |
| ३९ | १६ | मषिकूपि | मषिकूपी |
| ४० | ८ | नष्टजीव | नष्टवीज |
| ४१ | १ | केशा | केऽथा |
| ४१ | ३ | अव्युत्थानं | अभ्युत्थानं |
| ४१ | ११ | द्यास्तु | ऽस्याःस्त्वं |
| ४१ | १५ | च्छेशा | च्छेका |

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ४२ | ५ | सत्यवती | सत्यसती |
| ५५ | ४ | सीरंशयनाशने | शीरंशयनासने |
| ५५ | १५ | शुभूमः | सुभूमः |
| ५६ | १ | सीर | शिर |
| ६० | १६ | बधूः | चधूः |
| ६२ | २ | ह्यच्या | ह्यष्या |
| ६२ | १२ | स्तुपचाराणां | :यचणातत् |
| ६३ | १५ | स्यस्यगंधा | सस्यग्रंथा |
| ६७ | ६ | त्त | न्त |
| ६७ | ८ | औपवस्तं | उपवस्तं |
| ६८ | १५ | ह्मोऽनु | ज्मोन |
| ६९ | ५ | कणाशा | कणिशा |
| ६९ | ९ | वस्तार्थं | वस्त्रार्थं |
| ७७ | १७ | मधुरातु | मथुरातु |
| ७८ | १३ | गर्भभू | गेहभू |
| ८७ | १५ | लोत्का | लोल्का |
| ८८ | ८ | [illegible] | [illegible] |

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ८८ | ९ | ऋषो | मधो |
| ९० | १४ | स्वहि: | सुहि: |
| ९५ | १५ | वंप्र | वंप्यु |
| ९९ | २ | वस्ये | पट्टे |
| १०७ | ८ | जीतना | यीतना |
| ११२ | ६ | श्या:खल्वा | श्यागल्या |
| ११६ | ५ | तिरोधानं | तिरोहितं |



॥ हेमचन्द्रकृताऽनेकार्थशुद्धिपत्रं ॥

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ५ | ९ | ऐश्वय्य | ऐश्वर्य्य |
| २२ | १० | स्फटे | स्फुटे |
| ३५ | १६ | पुरःस्तु | पुरस्तु |
| ४३ | १४ | चण्डदीधितेः | चण्डदीधितौ |
| ५२ | ४ | संपुर्ण | संपूर्ण |
| ५३ | १६ | पुर्णिका | पूर्णिका |
| ७२ | १० | जिनप्ररि | जिनवप्ररि |
| ८० | ११ | सक्रिये | सत्क्रिये |
| ८० | १५ | हापनो | हायनो |
| ८५ | १० | पुःष्पा | पुष्पा |
| ९६ | १३ | करणन्तरे | करणान्तरे |
| ९८ | ५ | पुंनः | पुनः |
| १०१ | १४ | स्फटहासयोः | स्फुटहासयोः |
| १२२ | १४ | शुद्र | शूद्र |
| १२२ | १५ | बल | बले |



